मास्टरमणिमालायाः २७७ ( न्यायविभागे ७ )

॥ श्रीः ॥

नव्यन्यायशास्त्रावतार-महामहोपाध्याय-श्रीमद्गदाधरभट्टाचार्यरचितः

# प्रामाण्यवादः

[ चिन्तामणि-दीधिति-प्रभाविभूषितः ]

प्रथमविप्रतिपत्त्यन्तः ।

आचार्यपरीक्षायां निर्धारितः ।

परिष्कर्त्ता प्रभाकारः —
श्रीराजनारायणशुक्लः
प्रधानाचार्यः
शास्त्रार्थमहाविद्यालय, मीरघाट, काशी ।

प्राप्तिस्थानम्—
मास्टर खेलाड़ीलाल ऐण्ड सन्स
कचौड़ी गली
बनारस सिटी—१

❀ श्रीः ❀

तार्किकसार्वभौम-महामहोपाध्याय—प० श्रीगदाधरभट्टाचार्यविरचितः

# प्रामाण्यवादः ।

विश्रुतशास्त्रार्थि-स्वर्गीय-पण्डितराज—श्रीवेणीमाधवशास्त्रिणामात्मजेन
काशीस्थशास्त्रार्थमहाविद्यालयप्रधानाचार्येण अनेकग्रन्थलेखकेन
नव्यन्यायाचार्येण श्रीराजनारायण शुक्लेन स्वरचितप्रभाख्य-
टीकया आवश्यकटिप्पण्या च संवलितः परिष्कृतश्च ।

प्रकाशक :—
शारदा लाइब्रेरी
१५१ ए, शिवानगर
बनारस

विक्रमसंवत् २००८ ] विजया दशमी



काशीस्थराजकीयसंस्कृतमहाविद्यालये कृतन्यायशास्त्राध्यापनः शास्त्रार्थ-
महाविद्यालयप्रधानाचार्यः प्रायः पञ्चाशद्ग्रन्थपरिष्कर्त्ता
सर्वतन्त्रस्वतन्त्रस्वर्गीयपण्डितराजश्रीवेणीमाधव-
शास्त्रितनूजन्मा काशीविद्वत्परिषत्प्रधान-
मन्त्री न्यायाचार्यः

**श्रीराजनारायणशुक्लः**

# अभ्यर्थना

१८६ तमे पृष्ठे संशोधनीयम्, इति लिखितं स्तम्भं प्राग् विनिरीक्ष्य ग्रन्थालोचनं विधेयं बुधवरैरिति ।

पृ० ८ प० ११ अनुमानात् (अयं ग्रन्थः प्रयोजनवान् प्रयोजनवदान्वीक्षिकीप्रतिपादितसमुदायैकदेशार्थप्रतिपादकत्वात् प्रत्यक्षानुमानेत्यादिसूत्रवत् इतः)।

पृ० १३ प० ४ अप्रमात्मकप्रयोजनवत्त्वज्ञानात् इत्यस्य स्थाने 'अर्थनिश्चयकाले तद्द्वितीयक्षणे वा यत्र प्रामाण्यसंशयस्तत्रार्थनिश्चयक्षणे तद्द्वितीयक्षणे वा प्रवृत्त्यापत्तिवारणाय' इति पाठः ।

पृ० २० प० २३ षष्ठ्यर्थस्यान्वयोपगमे इत्यस्यानन्तरं 'घटस्य संशयः घटविषयित्वाभाववानितिशाब्दबोधापत्तिः' इतिपाठः ।

प० २८ शाब्दबोधापत्तिरित्यस्यानन्तरं 'नचैवमपि घटस्य संशयो न घटाभावीय इतिधीः ज्ञानं न घटीयमिति बाधनिश्चयदशायां घटाभावस्य संशय इति बोधापत्तिश्चेति वाच्यम् ? इष्टत्वात्। अन्यथा प्रथमविषयितायां षष्ठ्यर्थान्वयेऽपि तदापत्त्योर्दुर्वारत्वात् इति पाठः ।

# सम्पादकीयम्।

माननीयास्तर्ककर्कशविचारचातुरीचमत्कृतचेतसस्सचेतसो न्यायशास्त्रमर्मज्ञा विद्वांसो गादाधराधारीकृतस्वाध्यायलक्ष्या अन्तेवासिनश्च ! नेदं तत्र भवताम् भवतां विपश्चिदपश्चिमानामालोकपथात्तिरोहितं यदैहिकामुष्मिकाभ्युदयस्य निश्श्रेयसस्य च साधनं तत्त्वज्ञानमेव। यथा च भगवतो न्यायशास्त्रावतारकस्य गौतमस्य महर्षेः 'प्रमाणप्रमेयेत्यारभ्य तत्त्वज्ञानान्निःश्रेयसाधिगम' इति सूत्रे सिद्धान्तः। तदेव हि तत्त्वज्ञानम् प्रमेति व्यपदिश्यते। अत एवोदयनाचार्यैः 'तत्त्वानुभूतिः प्रमा' इति कथितम्। खण्डनकृता च तत्त्वानुभूतिः प्रमेति लक्षणमुपादाय तत्त्वशब्दार्थनिर्वचननिराकरणद्वारा प्रमालक्षणं निराकृतम्।

तत्र प्रमावृत्ति प्रमात्वं स्वतः परतो वा गृह्यते ? इति विशयमालम्ब्य गुरुभट्टमिश्राख्यमीमांसकानां नैयायिकैस्सह शास्त्रार्थः प्रवृत्तः। स्वतस्त्वं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वम्, परतस्त्वं च संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिग्राह्यत्वम्। शास्त्रार्थे ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीग्राह्यं न वेति विप्रतिपत्तिस्तत्र भावकोटिर्मीमांसकानां निषेधकोटिश्च नैयायिकानाम्। शास्त्रार्थजातमेनमालक्ष्य ग्रन्थस्यास्य प्रामाण्यवादस्यावतार इति।

भावल्युडन्तप्रमाणशब्दनिष्पन्नम् प्रामाण्यम् ( प्रमात्वम् ) तस्य वादः। अन्तरा मतान्तरखण्डनगर्भत्वेऽपि तदुद्देशेनाप्रवृत्ततया न वादलक्षणम् परिहीणम्। चिन्तामणिदीधित्यनुगतस्यास्य व्याख्याता पण्डितपञ्चाननः श्रीगदाधरभट्टाचार्योऽनेकवादनिर्मातेति विशिष्टवैदुष्यमस्य व्युत्पत्तिवादादिदर्शनेन सर्वतोमुखमालोच्यते। बङ्गप्रदेशान्तर्गतनवद्वीपलब्धजन्मकर्मधर्मा चैष महानुभावः षडधिकदशशततमवङ्गाब्दे एकविंशत्यधिकपञ्चदशशततमशाके च वङ्गभूमिमलंचकारेति श्रूयते। निर्मिताश्चैनेन चतुष्षष्टिर्वादा इति प्रसिद्धचरं विद्वद्गोष्ठीषु।

ग्रन्थस्यास्य च दुरूहतामेव 'नमः प्रामाण्यवादाय मत्कवित्वापहारिणे' इत्यादिवचोनिकरस्समुपस्थापयति। बहुशो नव्यन्यायशास्त्रीयोत्तमपरीक्षासु निर्द्धारितस्य तस्यास्य पठनपाठनयोः काठिन्यविषये विज्ञा एव प्रमाणम्। अद्यावधि स्वस्वगुरुपरम्परावगतलेखादिरेव प्रचरण-सरणिरासीत् समेषाम्। का कथा परमाणूनां यत्र मज्जति मन्दर इति लौकिकाभाणकमिहैव चरितार्थेति। कदाचित् स्थलविशेषेषु करामलकवदाहितन्यायशास्त्राणामपि मतिर्न

स्फुरति सुधियाम् । यथा "अभिधेयसम्बन्धज्ञानमपि···' पर्याप्तिनिवेशे च तदर्थपर्यालोचने लाघवासम्भवात्···' अत्र मिश्रानुयायिनः···' तदङ्कुरप्रकारकज्ञानमन्तरेणापि···' ज्ञानविषयकग्रहवारणे विना प्रयासं घटत्वादौ विधिप्रसिद्धिसम्भवात् ज्ञानत्वे तत्प्रसिद्धिसम्पादकप्रयासवैफल्यादि"त्यादिषु ग्रन्थतात्पर्यमात्रस्फोरणायापि समपेक्ष्यते सम्प्रदायः का कथा क्रोडपत्रादीनाम् । छात्राणां केषाञ्चित् सुहृदां च विशेषतः प्रेरणया विशदटीकाया अभावञ्च दूरीकर्त्तुकामेन मया वर्षत्रयात् पूर्वमेव विचारितं यदस्य विशदा काचिट्टीका परिश्रम्य निबन्धनीयेति ।

राजकीयविविधनियन्त्रणनिगडनिबद्धतया मषीपत्रादीनाम् व्ययभारबाहुल्याच्च मुद्रका मुद्रिताननाः नालमभूवन् सन्नद्धलेखानपि समुत्साहयितुमस्मान् । ऐषमः परमाराध्यपदपाथोजानां विद्वच्चक्रचूडामणीनां परमोदारचरितानां विश्वविश्रुतयशोराशीनां सर्वतन्त्रापरतन्त्राणां पितृकल्पानां वैद्यसम्राट् प० श्रीसत्यनारायणशास्त्रिमहाभागानामाज्ञया गूढग्रन्थरहस्यप्रकाशिकया प्रभाख्यटीकयाऽऽवश्यकटिप्पण्या च प्राचिकाशयिषमेनम् । मदीयशास्त्रार्थमहाविद्यालय-प्रधानसंरक्षकैः काशिकलब्धप्रतिष्ठनागरिकैरस्मत्स्नेहभाग्भिस्समुदारचरितैः श्रीबाबूलाल ढान्ढनियाँ महोदयैः यावत्कर्गदपत्रव्ययप्रदानेन, प्रागितोऽप्रकाशितसंस्कृतग्रन्थप्रायैः 'सरला प्रेस' समध्यक्षैः श्रीपरेशनाथामरनाथघोषमहोदयैरमूल्यमुद्रणेन च महत्साहाय्यमाचरितमिति समेषामेषामाभारमाविभर्मि ।

प्राप्तेऽर्द्धप्रकाशनप्राये नियन्त्रणमाहात्म्यात् पुनरपि सुन्दरचिक्कणपत्रालाभेन मासं यावत् प्रतीक्षापथमातिष्ठन् अवश्यादनभीप्सितपत्रेष्वेव शेषांशपूरणमाचरम् ।

समयलाघवात् कस्यचन सहायकस्य विदुषोऽभावात् कार्याधिक्याच्चान्ते प्रभामपि संक्षिपन् यथाभीष्टमेनं नापारयम् मुद्रापयितुम् । प्रकाशनेनानेन प्रामाण्यवादस्य समुद्धारो जात इति वदताम् पण्डितप्रवराणामपि केषाञ्चित् सुहृदां वचो न विश्वसिमि न वा श्रद्दधे । तदिदन्तु वक्तुमीशे यद् यज्जातन्तद् भगवतो भवानीपतेः प्रसादाच्छ्रीगुरुचरणानां कृपावशाद् यच्च न्यूनं नवा स्फुरितन्तत् प्राणिसहजमामकानवबोधादिति कृतसंशोधनेऽपि प्रकाशितपरिशिष्टसंशोधनीयपत्रे अन्ताङ्कितक्रोडपत्रेऽपि चात्र सम्भवन्तीस्त्रुटीस्संशोधनद्वाराऽनुगृह्यानुग्रहीष्यन्ति मां गुणगृह्या विद्वत्प्रवरा न्यायरहस्यविद इत्याशास्ते ।

विजया दशमी २००८ वि०
*शास्त्रार्थमहाविद्यालयः*
मीरघाट, काशी

सर्वदा विद्वज्जनानुगृहीत :—
**श्रीराजनारायणशुक्लः**

❀ श्रीः ❀

## चिन्तामणि-दीधितिविभूषितगादाधर-

# प्रामाण्यवादः ।

( दीधितिः ) गिरं गुरूणां हृदये निधाय विधाय सिद्धान्तसरोऽवगाहम् ।
संक्षेपतश्श्रीरघुनाथनामा चिन्तामणेर्दीधितिमातनोति ॥

---

( गादाधरी ) नत्वा नन्दतनूजसुन्दरपदं स्मृत्वा गुरोरादरा-
दुर्वीमण्डलमण्डनायितयशोराशेरशेषा गिरः ।
संक्षिप्तोक्त्यतिदक्षदीधितिकृतः प्रत्यक्षचिन्तामणौ,
व्याख्यां व्याकुरुते गदाधरबुधो मोदाय विद्यावताम् ॥

---

( प्रभा ) स्कन्धरोपितरामलक्ष्मणतनुं मात्रा समं सीतया, हुङ्कारेण समस्तवैरिनिकर-प्रत्यूहमूलं क्षयम् । भक्तप्रार्थनया नयन्तमभितो वन्देऽञ्जनीनन्दनं सर्वस्यार्तिहरं हरेः प्रियतमं सिद्धिप्रदं कामदम् ॥ १ ॥

आन्वीक्षिकीवीक्षणशिक्षणेषु सर्वस्वमभ्रान्ततयाऽध्यगच्छन् ।
ये तान् गुरून् कर्कशतर्ककोटीन् काशीं वसन् प्रेममयान् प्रणौमि ॥ २ ॥
पूज्यान् पितॄन् शाब्दिकलोककोकशोकापनोदोष्णकरान् नमामि ।
येषां सुतस्नेहवशेन तावद् व्युत्पादितश्शास्त्रमहार्णवेऽस्मि ॥ ३ ॥
चिन्तामणेर्दीधितिकृद्गदाधराभ्यां कृतं वर्णनमुत्तमन्तु ।
तद्ग्रन्थग्रन्थीन् श्लथयन् प्रभायाम् प्रामाण्यवादं सुपरिष्करोमि ॥ ४ ॥

शिष्टाचारपरम्परानुगतम्प्रत्यूहव्यूहनिरासार्थं नमस्कारात्मकम् मङ्गलं शिष्यशिक्षायै निवध्नाति नत्वेति ।

नन्दतनूजसुन्दरपदमित्यत्र द्वितीयार्थो विषयित्वम्, तच्च स्वावधिकोत्कर्षवत्त्वप्रकारक-बोधानुकूलव्यापारात्मकनमधात्वर्थैकदेशे बोधेऽन्वेति । उत्तरकालवृत्तित्वं क्त्वाप्रत्ययार्थः, राश्यन्तस्य गुरुपदार्थे समानविभक्तिकत्वादभेदान्वयः, गुरोः इत्यत्र षष्ठ्यर्थ उच्चरितत्वं गीःपदार्थेनान्वेति, अशेषपदम् प्रकृतोपयोग्यशेषार्थकम् गीःपदार्थेऽभेदान्वयि च । आदरपदो-त्तरपञ्चम्याः प्रयोज्यत्वमर्थः मोदस्सुखविशेषः, जनकत्वं चतुर्थ्यर्थः व्याख्या च विशेषार्थप्र-तिपत्त्यनुकूलो व्यापारः, तत्र प्रत्यक्षचिन्तामणायुत्तरसम्बन्धित्वरूपषष्ठ्यर्थस्यान्वयः । किंवा तदेकदेशे विशेषार्थे प्रतिपादितत्वरूपषष्ठ्यर्थान्वयः, तथाच नन्दतनूजसुन्दरपदविषय-कस्वावधिकोत्कर्षवत्त्वप्रकारकबोधानुकूलव्यापारोत्तरकालवृत्ति-तादृशयशोराश्यभिन्नगुरूच्चरि-तप्रकृतोपयोग्यशेषवाक्यविषयकादरप्रयोज्यस्मरणोत्तरकालिक - विद्यावत्समवेतसुखविशेषजन-कप्रत्यक्षचिन्तामणिप्रतिपाद्यार्थविशेषप्रतिपत्त्यनुकूलतादृशदीधितिकृत्सम्बद्धव्यापारात्मकवा - क्यप्रतिपाद्यार्थबोधानुकूलव्यापारानुकूलकृतिमान् गदाधर इति संक्षिप्तश्शाब्दबोधः ।

अत्र किञ्चिद् विचार्यते—ननु जन्यत्वोक्तिरनुचिता "सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः। परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वदा" इत्यादौ भगवद्विग्रहस्य साक्षान्नित्यत्वोक्तेः इति चेन्न ? स्मृत्या श्रुत्या युक्त्या च भगवद्विग्रहस्यानित्यत्वसिद्धौ अन्यार्थपरायाः श्रुतेरन्यार्थतात्पर्यकत्वकल्पनानौचित्यात्। तथा हि, भगवद्विग्रहो न नित्यः महत्त्वे सति रूपवत्त्वात् विग्रहत्वात् वा इत्यनुमानम्। नच तदिदमप्रयोजकम् ? महत्त्वसमानाधिकरणरूपस्य जन्यत्वनियमेन प्रयोजकत्वलाभात्। तथाहि, तस्य पाकजन्यत्वं न सम्भवति पाकपूर्वं रूपान्तरस्य वाच्यत्वेन श्रीकृष्णविग्रहस्य नानारूपत्वापत्तेः। नहि स कदाचित् नवनीरदश्यामः कदाचित् इन्द्रनीलादिश्यामः अपरजातीयरूपवान् वा, तथासति ध्यानस्य अव्यवस्थितत्वापत्तेः। नच नवनीरदश्यामत्वादिकमेवोपास्यं नवनीरदश्याममित्यादिगौतमीयतन्त्रादौ तथोक्तत्वात् तथाच श्रीकृष्णादिविग्रहे एकैकजातीयरूपमेवोपास्यमिति प्रतिविग्रहं पाकजनानारूपस्वीकारे ऽपि नोपासनाव्यवस्थेति वाच्यम् ? एवमपि पूर्वरूपनाशकरूपान्तरोत्पादकस्तेजस्संयोगविशेषरूपः पाको भगवति श्रीकृष्णे जायते इत्यत्र नियामकाभावात्। तस्मात् विग्रहकारणगतरूपजन्यत्वस्यावश्यं वाच्यतया जन्यतादृशरूपस्य भगवद्विग्रहे जन्यत्वसम्पादकत्वात्। एवम् महत्त्वस्यापि रूपसमानाधिकरणस्य जन्यत्वनियमात् जन्यमहत्त्वे च स्वाश्रयावयवस्य महत्त्वं बहुत्वं प्रचयो वा हेतुः घटादौ कपालादिमहत्त्वेन त्रसरेणौ द्व्यणुकबहुत्वेन तूलपिण्डादावव्यवप्रचयेन च महत्त्वदर्शनात्। तथा च भगवद्विग्रहे तादृशमहत्त्वं प्रति तावदन्यतमहेतुत्वावश्यकतया सावयवत्वेन जन्यत्वसिद्धेः। नचोक्तानुमाने प्राकृतत्वमुपाधिः, दृष्टान्ते साध्यव्यापकत्वस्य पक्षे साधनाव्यापकत्वस्य च सत्त्वादिति वाच्यम् ? भगवद्विग्रहे प्राकृतत्वस्य सन्दिग्धत्वेऽपि अनुकूलतर्काणामत्र सत्त्वेन पक्षीयव्यभिचारसम्भवस्य सन्दिग्धोपाधिरूपकार्याप्रयोजकत्वात्। एवञ्च नित्यत्वबोधकत्वेनाभिमतश्रुतेः अर्थान्तरप्रतिपादकत्वमेव। तथाहि नित्याः शाश्वता इत्यनेन उपासनातिशयेन तत्तज्जातीयदेहाः सर्वदा द्रष्टुं शक्याः। पूर्वोत्पन्नश्रीकृष्णादिदेहस्य नष्टत्वेऽपि भक्तवात्सल्येन भगवता तज्जातीयदेहान्तरं जनयित्वा प्रदर्श्यते इति बोध्यते। परमानन्दसन्दोहाः इत्यनेन च दुःखभोगायतनत्वं ज्ञानमात्रा इत्यनेन च आवरणशून्यत्वं विवक्षितम्। रघुनाथादिशरीरे च आवरणकार्यं रोदनादिकं यद् दृश्यते तद् ब्राह्मणशापावैयर्थ्यसूचनायेति। अत एव च ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः। चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ॥ रघोः कुले खिलं राति राजते यो महीक्षितः।" इत्यादिश्रुतयः, प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया-धर्मसंस्थापनार्थाय सम्भवामि-तदाऽऽत्मानं सृजाम्यहम्-जन्मकर्माभिधानानि सन्ति मेऽथ सहस्रशः, बहूनि मे व्यतीतानि जन्मानि तव चार्जुन' इत्यादिस्मृतयश्चोपपद्यन्ते।

एतेन श्रुतिबलात् सावयवोऽपि नित्यः इत्यपास्तम्।

ननु तथापि वसुदेवसूनुत्वस्यैव वास्तविकतया नन्दतनुजत्वमनुचितमिति चेदत्र विचार्यते। श्रीकृष्णस्य भगवतः विविधलीलाविग्रहवत्त्वेन कंसकारागाराद् वसुदेवनीतस्य

गुरुकीर्त्तनरूपं मङ्गलं कुर्वाण एव स्वीयग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थं तदुत्कर्षं दर्शयति *गिरमिति*। हृदये=मानसे। निधानम्=सम्बन्धसम्पादनम्। मनसि गुरुगिरस्सम्बन्धः स्वार्थज्ञाने जननीये तत्सहकारित्वम्। सहकारित्वं चात्र परम्परया फलोपयोगित्वम्। तथाच गुरुवाक्याधीनशाब्दबोधजन्यसंस्कारसध्रीचीनेन मनसा निबद्धव्यमितरापरिशीलितमर्थं निश्चित्येति फलितोऽर्थः। सिद्धान्ताविरुद्ध एवार्थो वर्णनीय इति सूचयति *विधायेति*। सिद्धान्तः=मूलकृता महर्षिणा तदुपजीविपूर्वपूर्वनिबन्धकारपरम्परया चाभ्युपगतोऽर्थनिकरः, स एव सरः, तदवगाहनस्य निबन्धनीयार्थे सिद्धान्तापसिद्धान्तसन्देहाहितचेतस्सन्तापसन्तानोपशान्तिसाधनत्वात्, तत्र अवगाह्य। अवगाहनम् अन्तःप्रवेशः, स च प्रकृते निगूढतत्त्वाकलनरूपः।

---

विशेषलीलाविग्रहस्य तेजोराशेः नन्दगृहस्थलीलाविग्रहे तेजःपुञ्जविशेषे तदानीमन्तःप्रवेशात् वासुदेवस्यापि नन्दतनूजत्वोक्तौ शङ्कानवकाशात्। नन्दतनूजत्वारोपनिबन्धनलोकव्यवहारेण तथोक्तेश्च।

गुरुकीर्त्तनेति। कीर्त्तनं च तद्बोधतात्पर्येण तन्नामोच्चारणम्।

तदुत्कर्षमिति। उत्कर्षत्वं च अयमेदतपेक्षया उत्कृष्ट इत्याकारकप्रत्ययसिद्धो जातिविशेषः। स्वार्थज्ञाने=वाक्यार्थज्ञाने। तत्सहकारित्वम्=गुरुवाक्यसहकारित्वम्। तत्त्वं च तदसमवधानप्रयुक्तफलोपधायकत्वाभाववत्स्वकत्वम्। यत्र यत्सामानाधिकरण्याभावप्रयुक्तफलोपधायकत्वाभाववत् तस्य सहकारीति यावत्। यथा दण्डचक्रयोः। ननु प्रकृते गुरुवाक्यजन्यशाब्दबोधस्यातीततया व्याख्यानिर्माणेऽनुपयोगादुक्तसहकारित्वं कथमित्यत आह सहकारित्वंचेति। परम्परया संस्कारद्वारेत्यर्थः। फलम्=स्मरणम्। तथा च गुरुवाक्यजन्यशाब्दबोधस्यातीतत्वेऽपि तदधीनसंस्कारस्य तदानीमपि सत्त्वादुपयोगित्वसिद्धेः। संस्कारेति=उद्बुद्ध इति शेषः। सध्रीचीनेन=संहकृतेन। वस्तुतस्तु संस्काराधीनार्थनिश्चयस्यैव उपयोगितेत्यनुसन्धायाह *तथाचेति*। मनसा=तृतीयार्थो जन्यत्वम्। तस्य च ल्यप्प्रत्ययप्रकृतिभूते निश्चयेऽन्वयः। तादृशमनोजन्यार्थनिश्चयश्च स्मृतिर्मानसबोधो वा। *परिशीलनम्* सम्यग्ज्ञानम्। *सिद्धान्ताविरुद्धेति*। एतेन मिश्रप्रभृतीनां तत्त्वनिरूपणं सिद्धान्तविरुद्धमपीति व्यज्यते। तदुत्कर्षान्तरमाह सिद्धान्तेति। मूलकृता=गौतमेन। सरस्सादृश्यं च

अत्र सन्तापसन्तानोपमशनहेतुतया बोद्धयम्। सरोवीक्षणमात्रेण सन्तापानिवृत्तेराह अवगाहनेति। निगूढतत्त्वेति। तत्त्वनिष्ठं निगूढत्वं च इतरापरिशीलितत्वम्। आकलनम्=प्रमा। सिद्धान्तितार्थतावच्छेदकप्रकारकप्रमेति फलति।

(दी०) प्रेक्षावत्प्रवृत्तये—

(गा०)संक्षेपतः=संक्षिप्तोक्तितः चिन्तामणेः=चिन्तामणिनामकग्रन्थस्य। दीधितिम्=अर्थप्रकाशम्। आतनोति=विस्तारयति। विवरणग्रन्थनिर्माणेन बहुतरजनसम्बद्धं करोति। चिन्तामणिग्रन्थतत्त्वार्थान् भूयसःशिष्यान् बोधयतीति फलितोऽर्थः। श्रिया युक्तो रघुनाथनामा श्री रघुनाथनामेति मध्यमपदलोपिसमासः, रघुनाथइति नाम (रूपम्) यस्येतिबहुव्रीहिगर्भो ननु श्रीरघुनाथेति नाम (रूपं) यस्येत्येकस्समासः, श्रीशब्दस्य नामानन्तर्गतत्वात्, तथा सति हर्यादिपदानां द्व्यक्षरत्वानुपपत्तेः। नचास्यैव नाम श्रीघटितमित्याशङ्कनीयम्? रघुनाथकवेरिति विरोधात्।

प्रमाणतत्त्वे निरूपयितव्ये महर्षेः प्रमाणादितत्त्वप्रतिपादकशास्त्रप्रणेतृत्वाद्यभिधानस्य सफलत्वं दर्शयति *प्रेक्षावदिति*। *प्रेक्षावताम्*=विवेचकानाम्, प्रकृष्टफलोद्देशमन्तरेण शास्त्राध्ययनेऽप्रवर्त्तमानानामिति यावत्। तेषां स्वीयग्रन्थाध्ययने 'प्रवृत्त्यर्थमित्यर्थः।

(प्रभा) श्रिया युक्त इति। आयुष्मता स्वनाम श्रीघटितमेव प्रयोक्तव्यमिति व्यवहारस्य वङ्गे मिथिलायाञ्च प्रसिद्धत्वात्। संज्ञाशब्दानां नावयवार्थो भासतेऽन्यथा द्वे दले यस्मिन्निति विग्रह्य बहुव्रीहिणा निष्पन्नस्य द्विदलशब्दस्य दलद्वयविशिष्टार्थप्रतिपादकतया प्रत्येकत्र दले चलतो द्विदलत्वव्यहारस्य हानिरेव प्रसज्ज्येतेति भवत्यखण्ड एव संज्ञाशब्दो न समासाय विवदनीयनिति मनसिकृत्य नचेति।

प्रेक्षावदिति। जनकत्वं चतुर्थ्यर्थः तस्य च ज्ञानानुकूलव्यापाररूप-आङ्पदार्थैकदेशे ज्ञानेऽन्वयः, फलवच्छास्त्रोपकरणत्वेनेति तृतीयार्थो ज्ञाप्यत्वम्, तस्य प्रयोजनवत्त्वेऽन्वयः। तथा च प्रेक्षावत्प्रवृत्तिजनकफलवच्छास्त्रोपकरणत्वज्ञानज्ञाप्यप्रयोजनवत्त्व—अभिधेयसम्बन्धविषयकज्ञानानुकूलस्वीयग्रन्थाभिन्नव्यापारानुकूलकृतिमान् चिन्तामणिकारइति वाक्यार्थः।

ननु प्रमाणतत्त्वनिरूपणावसरे 'प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते' इत्यनेनैव सामञ्जस्ये अथेत्यारभ्य असूत्रयत्पर्यन्तचिन्तामणेः किम्प्रयोजनमिति चेन्न ! प्रेक्षावत्प्रवृत्तये प्रयोजनवत्त्वाभिधेयसम्बन्धज्ञापनार्थन्तदावश्यकत्वात्। तदाह प्रमाणतत्त्वे इत्याद्युपक्रम्य गदाधरः।

'विना विषयसम्बन्धौ तथैवार्थाधिकारिणौ। ग्रव्याख्येयो भवेद् ग्रन्थःस्याद् ग्रन्थे तच्चतुष्टयम् इति रीत्या सम्बन्धश्चाधिकारीच विषयश्च प्रयोजनम्। विनानुबन्धं ग्रन्थादौ कृतिर्नैव प्रशस्यते। इत्यभियुक्तोक्तया च सम्बन्धविषयप्रयोजनाधिकारिनिरूपणं ग्रन्थे नान्तरीयकम्। विशेष्यतासंसर्गेण प्रवृत्तिम्प्रति विशेष्यतासम्बन्धेन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानस्य कृतिसाध्यत्वप्रकारकज्ञानस्य च कारणत्वम्। नि-

( चिन्तामणिः ) अथ 'जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्र प्रेक्षावत्प्रवृत्त्यर्थम् 'प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति आदौ असूत्रयत्। तेष्वपि ( तत्र ) प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते।

---

( दी० ) फलवच्छास्त्रोपकरणत्वेन प्रयोजनवत्तामभिधेयसम्बन्धौ 'चाह' स्वीयग्रन्थस्य 'अथ' इत्यादिना 'विविच्यते' इत्यन्तेन।

---

(गा०) स्वीयग्रन्थस्य प्रयोजनवत्ताम् = परमप्रयोजनभूतनिःश्रेयसरूपफलवत्ताम्, अभिधेयसम्बन्धौ च = प्रमाणतत्त्वरूपं प्रतिपाद्यम्, प्रतिपादकत्वरूपं तत्सम्बन्धं च आहेत्यन्वयः।

---

( प्रभा ) चिन्तामणेरर्थः—अथ = मङ्गलस्य समाप्तिकारणत्वव्यवस्थापनानन्तरम्। प्रमाणतत्त्वंविविच्यते इत्यनेन सम्बन्धः। "ऊङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इति रीत्याऽऽनन्तर्यपरस्यापि अथशब्दस्येह मङ्गलपरत्वात्। जगत् = मिथ्याज्ञानजन्यवासनाविशिष्टात्मानः इति। जगत्पदस्य समूहार्थकताया अशेषार्थकताया एवकारस्य तदर्थे तात्पर्यग्राहकताया वा ऽग्रे स्फुटीकरिष्यमाणत्वात्। दुःखपङ्कनिमग्नमिति। न्यायमतसिद्धैकविंशतिदुःखवत्। उद्दिधीर्षुः = आत्यन्तिकदुःखध्वंसवत्त्वेन मुमोचयिषुः। अष्टादशविद्यास्थानेषु। स्थानम् प्रभेदः। अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणं च विद्या

---

उक्तज्ञानद्वयञ्च अनुवन्धतः अनुवन्धाश्च विषयप्रयोजनसम्वन्धाधिकारिभेदेन चतुर्विधाः। ग्रन्थाध्ययनविषयकप्रवृत्तिप्रयोजकज्ञानविषयत्वञ्चानुवन्धत्वम्। तत्र विषयज्ञानादिष्टसाधनत्वप्रकारकं कृतिसाध्यत्वप्रकारकञ्च ज्ञानं जायते, अधिकारिज्ञानेन च कृतिसाध्यत्वप्रकारकं ज्ञानं जायते, प्रयोजनज्ञानेन चेष्टसाधनत्वप्रकारकं ज्ञानम् सम्बन्धज्ञानेन चोभयज्ञानमित्यनुवन्धचतुष्टयनिरूपणं कर्तव्यतामर्हति। तत्र विषयः इष्टसाधनत्वप्रकारके कृतिसाध्यत्वप्रकारके च ज्ञाने भासते, अधिकारी कृतिसाध्यत्वप्रकारके ज्ञाने सम्बन्धश्च ज्ञानद्वये भासत इति परस्परापेक्षनिरिवलभासनाय अनुवन्धनिरूपणम् भवति शिष्टाचारादिति चिन्तामणिकारोऽपि तत्सूचनाय अथेत्यारभते।

'शाब्दबोधप्रकारश्चेत्थम्—अत्र कर्तव्यग्रन्थे प्रतिपाद्यत्वं सप्तम्यर्थः, तस्य प्रमाणतत्त्वेऽन्वयः, मयेत्यध्याह्रियते, कृतिजन्यत्वं तृतीयार्थः, तस्य धात्वर्थे विवेचनेऽन्वयः, विषयत्वं कर्मलकारार्थः। तथा च मत्समवेतकृतिजन्यमङ्गलकारणत्वव्यवस्थापनोत्तरकालवृत्तिविवेचनविषयीभूतमेतद्ग्रन्थप्रतिपाद्यं प्रमाणतत्त्वमिति।

(गा० ) यद्यपि अभिधेयसम्बन्धज्ञानमपि अर्थविशेषप्रतिपादनद्वारा फलवतो ग्रन्थस्य सफलत्वज्ञान उपयुज्यते, अतः प्रयोजनाभिधेयसम्बन्धाँस्तुल्यतयोपादाय तत्प्रदर्शकताकथनं न सङ्गच्छते, तथापि एतद्ग्रन्थप्रतिपाद्यत्वेन सामान्यतः सप्रयोजनज्ञानविषयत्वमवगत्य ग्रन्थस्य प्रयोजनवत्तां जानतोऽपि प्रतिपाद्यस्य ज्ञातत्वसंशये ग्रन्थश्रवणे प्रवृत्तिर्नोपपद्यत इति विशिष्याभिधेयज्ञानमपि अपेक्षितमित्याशयेन तदभिधानम् ।

---

( प्रभा ) ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं च विज्ञेयंविद्या अष्टादशैव तु" इत्यष्टादशविधा विद्या बोध्याः ।

असति बाधके उद्देश्यतावच्छेदकविधेययोः प्रयोज्यप्रयोजकभावेन आन्वीक्षिकीप्रणयने अभ्यर्हिततमत्वस्योद्देश्यतावच्छेदकस्य प्रयोजकत्वमवगन्तव्यम्, धनवान् सुखीत्यादाविव । अभ्यर्हिततमत्वञ्च सर्वविद्याप्रदीपत्वादि । अतएव

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता ॥ इति गीयते ॥

परमकारुणिक इति । कारुणिके परमत्वं च अहेतुककरुणाकारित्वम् । अत्र विविच्यत इति । अत्रैवेति सावधारणम् । अत्रैव — अत्र कर्त्तव्यग्रन्थे, सर्वपदार्थनिरूपणात् पूर्वमेवेति यावत् । अत्र हेतुमाह प्रमाणाधीना सर्वेषां व्यवस्थितिरिति । ननु चिन्तामणिकारस्य निरूप्यते इति स्वीयसरणिमपहायात्र विविच्यते इत्युक्तिः कुतः ? प्रमात्वगतस्वतस्त्वपरतस्त्वयोरेवात्र विशेषतो निरूपणेन प्रमाणतत्त्वविवेचनोक्तेरेवौचित्यात् । विवेचनं च परमतनिराकरणपूर्वकस्वमतव्यवस्थापनमेवेति, व्यवस्थापनं च प्रमाणवत्तया बोधनम् ।

प्रमाणाधीना सर्वेषां व्यवस्थितिरित्यनेन प्रमाणे सर्वपदार्थव्यवस्थोपपादकत्वकथनेन प्रमाणतत्त्वविवेचने उपोद्घातसङ्गतिस्सूचिता । अथशब्देन प्रसङ्गो ऽपि व्यज्यते ।

यद्यपीति । ननु अभिधेयसम्बन्धज्ञानस्य फलवच्छास्त्रोपकरणत्वहेतोरिव अनुमित्यात्मकप्रयोजनवत्ताज्ञानम् प्रत्येव हेतुत्वात् प्रवृत्तिम् प्रति साक्षादकारणतया प्रेक्षावत्प्रवृत्तिकारणनिरूपणप्रसङ्गे प्रयोजनवत्त्वाभिधेयसम्बन्धानां तुल्यतया व्यवस्थापनं न सङ्गच्छते, तुल्यतया उपादाने उभयत्र साक्षात्कारणताबोधप्रसङ्गादिति चेन्न, विशेषरूपेणाभिधेयसम्बन्धज्ञानस्यापि अन्वयव्यतिरेकसाहचर्येण प्रवृत्तिसाक्षात्कारणत्वस्य समुचितत्वात् । तथाहि 'प्रमाणतत्त्वमत्रविविच्यते' इत्यस्य स्थाने 'आन्वीक्षिकीप्रतिपाद्यमत्र विविच्यते' इति चिन्तामणिकृताऽभिहितं स्याच्चेत् ततोऽपि आन्वीक्षिकीप्रतिपाद्यार्थे ज्ञातत्वसंशये प्रवृत्तिर्न भवति, प्रमाणतत्त्वमित्यादिविशेषरूपेण प्रतिपाद्यार्थप्रतिपादने तु तज्जिज्ञासूनां ग्रन्थे प्रवृत्तिर्जायते इति कारणतानियामकस्य स्पष्टत्वात् । इममेवार्थजातं शङ्कोत्तरभावेन स्फुटीकुरुते यद्यपीत्यादिना तदभिधानमित्यन्तेन । अभिधेयसम्बन्धज्ञानमपीति । अभिधेयश्च सम्बन्धश्च तयोर्ज्ञानमितिव्युत्पत्त्या

अभिधेयतत्सम्बन्धज्ञानमित्यर्थः। अपिना फलवच्छास्त्रोपकरणत्वस्य परिग्रहः। उपयुज्यते इत्येतेन सह सम्बद्ध्यते। अर्थविशेषप्रतिपादनद्वारा=प्रमाणतत्त्वरूपार्थविशेषप्रतिपादकत्वसम्बन्धेनेत्यर्थः। फलवत इत्यनेन सम्बद्ध्यते, तथा च स्वजनकज्ञानजनकत्वसम्बन्धेन मोक्षरूपफलविशिष्टस्य ग्रन्थस्येति वाक्यार्थः। अत एव दुःखध्वंसरूपमोक्षस्यात्मनि सत्त्वेन ग्रन्थे तदभावात् तत्र तद्वत्तासिद्धये अर्थविशेषप्रतिपादनद्वारेति निरुक्तम्। ग्रन्थस्य=प्रामाण्यवादस्य। सफलत्वज्ञाने=अयम् प्रामाण्यवादरूपो ग्रन्थः मोक्षरूपप्रयोजनवान् मोक्षसाधनीभूतान्वीक्षिकीप्रतिपादितार्थसमुदायैकदेशप्रमाणतत्त्वरूपार्थप्रतिपादकत्वात् इत्यनुमित्यात्मकज्ञान इत्यर्थः। दृष्टान्तस्तु प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति सूत्रम्। उपयुज्यते=उपयोगीत्यर्थः। ग्रन्थेन सह प्रमाणतत्त्वस्य प्रतिपाद्यप्रतिपादकभावसम्बन्धज्ञाने सति पूर्वोक्तहेतुज्ञानेन सफलत्वानुमितिर्भवतीति भावः।

अत्रेदंबोध्यम्—सफलत्वज्ञान उपयुज्यते इति वाक्यं हि बाधकेऽसति सर्वं वाक्यं सावधारणमिति सिद्धान्तेन सफलत्वज्ञाने एव इत्यवगमयति। अवधारणेन प्रेक्षावत्प्रवृत्तिम्प्रति अभिधेयतत्सम्बन्धज्ञानस्य कारणत्वव्यवच्छेदः। अभिधेयतत्सम्बन्धज्ञानं हि सफलत्वज्ञानम्प्रत्येव हेतुर्नतु प्रेक्षावत्प्रवृत्तिम् प्रत्यपीति फलितार्थः।

अतः=अभिधेयसम्बन्धज्ञानस्य सफलत्वज्ञान एव कारणत्वात्। प्रयोजनाभिधेयसम्बन्धाँस्तुल्यतयोपादाय=त्रीनेतान् समानकोटावुपादाय, प्रेक्षावत्प्रवृत्तिरूपकार्यम् प्रति कारणतया व्यवस्थाप्येत्यर्थः। तत्प्रदर्शकताकथनम्=प्रेक्षावत्प्रवृत्तये इत्यादिना 'अथेत्यारभ्य विविच्यते, इत्यन्तचिन्तामणितात्पर्यवर्णनं दीधितिकर्त्तुरिति। न सङ्गच्छते इति पूर्वपक्षहृदयम्। उत्तरयति तथापीत्यादिना। तथापि=सफलत्वज्ञानेऽभिधेयसम्बन्धज्ञानस्योपयोगित्वेऽपि इत्यर्थः। एतद्ग्रन्थप्रतिपाद्यत्वेनेति—तृतीयार्थोऽभेदः, तस्य सामान्यपदार्थे आन्वीक्षिकीप्रतिपाद्यत्वेऽन्वयः। सप्रयोजनज्ञानेति। सप्रयोजनम्=मुक्तिफलकम् यदान्वीक्षिकीप्रतिपादितार्थज्ञानम् तद्विषयत्वम् अवगत्य=निश्चित्य इत्यर्थः। तथाच एतद्ग्रन्थप्रतिपाद्यः सप्रयोजनज्ञानविषयः आन्वीक्षिकीप्रतिपाद्यत्वात् तुल्यवित्तिवेद्यतया मुक्तिहेतुज्ञानविषयः एतद्ग्रन्थप्रतिपाद्यः आन्वीक्षिकीप्रतिपाद्यत्वादिति रीत्या वा एतद्ग्रन्थप्रतिपाद्यः सप्रयोजनज्ञानविषयं इति बोधः।

सप्रोजनज्ञानविषयत्वनिश्चये मुक्तिफलकज्ञानविषयान्वीक्षिकीप्रतिपादितार्थप्रतिपादकत्वरूपहेतुमत्त्वज्ञानसम्भवेन ग्रन्थे प्रयोजनवत्त्वज्ञानसम्भव इति हृदि निधायाह ग्रन्थस्य प्रयोजनवत्तां जानतोऽपीति। ज्ञातत्वसंशये=प्रमाणतत्वं ज्ञातं नवेति संशये। ज्ञातता च ज्ञानविषयतारूपा। ग्रन्थश्रवण इति। एतद्ग्रन्थप्रतिपाद्यत्वेन ज्ञातत्वसंशये जाते जिज्ञासाया असम्भवेन श्रवणेऽप्रवृत्तेः। अयमत्राभिसन्धिः, तद्ग्रन्थाध्ययनधर्मिकप्रवृत्तिम् प्रति तद्ग्रन्थप्रतिपाद्यविशेषधर्मिकाज्ञातत्वनिश्चयस्यापि प्रयोजकतया प्रतिपाद्यस्य ज्ञातत्वसंशयदशायां तादृशनिश्चयासम्भवात् ग्रन्थश्रवणे प्रवृत्तिर्नस्यादिति। विशिष्येति।

(गा०) 'प्रमाणतत्त्वमत्र विविच्यते' इत्यतः साक्षादेवाभिधेयसम्बन्धलाभः, प्रयोजनवत्तालाभश्च न तथा, तद्वाचकपदाभावात्, अपि तु अर्थत एव तल्लाभ इति विशेषसूचनाय पृथक् समासेन तदभिधानम्।

कुतोऽर्थात् प्रयोजनवत्तालाभ इत्याकाङ्क्षायामाह फलवच्छास्त्रोपकरणत्वेनेति। निश्श्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशार्थप्रतिपादकत्वेनेत्यर्थः। तृतीयार्थः प्रयोजनवत्त्वान्वयि ज्ञाप्यत्वम्। 'जगदुद्दिधीर्षुरान्वीक्षिकीम् प्रणिनाय' इत्यतो मूलभूतशास्त्रस्य निःश्रेयसरूपोद्धारप्रयोजकतालाभः। प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगम इति आदौ असूत्रयत् इत्यन्तेन निश्श्रेयसोपायभूतज्ञानविषयप्रमाणादिपदार्थतत्त्वस्य तच्छास्त्राभिधेयत्वलाभः।

एवं च तदन्तर्गतप्रमाणतत्त्वप्रतिपादकत्वलाभान्निरुक्तशास्त्रोपकरणत्वलाभस्स्वीयग्रन्थस्य। तत्रच निश्श्रेयससाधनत्वानुमितौ निरुक्तार्थप्रतिपादकत्वस्य निश्श्रेयससाधनार्थप्रतिपत्तिजनकतात्वेनैव हेतुता, तथाविधार्थे आन्वीक्षिकीप्रतिपाद्यसमुदायान्तर्गतत्वं च तस्यां सहचारज्ञानेन व्याप्तिग्रहार्थ-

---

(प्रभा) प्रमाणतत्त्वत्वादिरूपेण। तथा च सामान्यतः प्रतिपाद्यत्वावच्छिन्नधर्मिकज्ञानस्य प्रयोजनवत्ताज्ञानोपयगित्वेऽपि प्रवृत्त्युपयोगित्वं न सम्भवति सामान्यत एत द्ग्रन्थप्रतिपाद्यस्य सप्रयोजनज्ञानविषयत्वनिश्चयेऽपि प्रमाणतत्त्वत्वावच्छिन्नविशेष्यकसप्रयोजनज्ञानविषयत्वसंशयस्य प्रवृत्तिविघटकस्योत्पत्तौ वाधकाभावात्। तदभिधानमिति। प्रमाणतत्त्वत्वेन रूपेण अभिधेयाभिधानमित्यर्थः।

ननु पूर्वोक्तदिशा प्रयोजनवत्त्वाभिधेयतत्सम्बन्धानां साक्षादेव प्रवृत्तिहेतुत्वे दीधितिकृता 'प्रयोजनवदभिधेयसम्बन्धानाह' इति समस्तः प्रयोग एव लाघवात् कुतो न कृत इत्याशङ्कमान आह "प्रमाणतत्त्वमत्रेति" गदाधरः। इत्यतः=इतिग्रन्थेन। साक्षादेव=शब्दादेव। न तथा=न शब्दात्।; अर्थत एव=अनुमानादेव। तल्लाभः=प्रयोजनवत्त्वज्ञानम्। पृथक् इति=एतद्योगे पञ्चम्या भाव्यम्। तदभिधानम्=क्रमेण प्रयोजनवत्त्व-अभिधेयसम्बन्धाभिधानमितिभावः। अनुमानात् प्रयोजनवत्तालाभ इतिप्रागुक्तमिदानीं कस्मात् किमाकारकादनुमानादिति विशेषजिज्ञासायामाह कुतोऽर्थादिति। फलवच्छास्त्रोपकरणत्वेनेति। फलवच्छास्त्रप्रकरणत्वेनेत्यपि पाठः।

अयं ग्रन्थः प्रयोजनवान् प्रयोजनसाधनीभूतार्थप्रतिपत्तिजनकत्वात् इत्यनेनैव लघुना हेतुना सामञ्जस्ये आन्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशत्वविशेषणस्य वैयर्थ्यमिष्टापत्त्या निराचिकीर्षति तत्रचेत्यादिना। तत्र च=स्वीयग्रन्थे चेत्यर्थः। विशेष्यकत्वं सप्तम्यर्थः। निश्श्रेयससाधनत्वानुमितौ=निश्श्रेयससाधनत्वप्रकारकानुमितौ। तथा च स्वीयग्रन्थविशेष्यकनिःश्रेयससाधनत्वप्रकारकानुमितावित्यर्थः। जनकतात्वेनैवेति एवकारेण पूर्वोक्तव्यर्थविशेषणस्य हेतुतावच्छेदकत्वनिरासः। तथाविधार्थे=निःश्रेयससाधनीभूतार्थे। तस्याम्=जनकतायाम्। सहचारज्ञानेनेत्यादि। अधीनत्वं तृतीयार्थः

( दी० ) जगत् = संसार्यात्मजातम् ।

---

मित्यवधेयम् । "प्रणिनाय" इत्यत्रैव वाक्यपरिसमाप्तेः तावन्मात्राच्च सप्रयोजनत्वानुमितावभिधेयसम्बन्धलाभो न सम्भवतीति तत्र कथन्तानिवृत्तये 'विविच्यते इत्यन्तेन' इति ।

जगत्पदस्य वस्तुमात्रार्थकत्वे घटादीनामचेतनानां मोक्षरूपोद्धारस्य बाधेन तदीयत्वेनोद्धारेच्छा मुनेर्न सम्भवतीति व्याचष्टे जगदिति । परमेश्वरस्य मुक्तानां च जीवानां नोद्दिधीर्षाविषयत्वसम्भव इत्यतः संसारित्वं विशेषणम् । संसारश्च मिथ्याधीप्रभवा वासना । मत्वर्थीयार्थ उपलक्षणत्वव्यावृत्तं विशेषणत्वम् अतस्तदुपलक्षितमुक्तजीवानां व्यावृत्तिः । नच मूलोपात्तदुःखपङ्कनिमग्नत्वविशेषणेनैव परमेश्वरादिव्यावृत्तिसम्भवात् संसारित्वविशेषणवैयर्थ्यमिति वाच्यम् ? एवं ह्यात्मपरजगत्पदस्यापि वैयर्थ्यापातात् आत्मभिन्नानां दुःखपङ्कनिमग्नत्वविशेषणेनैव वारणात् ।

---

(प्रभा) तस्य च व्याप्तिग्रहेऽन्वयः । यत् निःश्रेयससाधनीभूतार्थप्रतिपत्तिजनकं भवति तत् निःश्रेयससाधनं भवति यथा "दुःखजन्मप्रवृत्तीति" सूत्रम् इत्याकारकसहचारज्ञानाधीनव्याप्तिग्रहार्थमिति भावः । कथन्तानिवृत्तय इति । कथमभिधेयसम्बन्धलाभ इति जिज्ञासाप्रशान्तय इति भावः । सारांशस्तु—प्रमाणतत्त्वमत्र विविच्यत इत्यन्तानभिधाने अभिधेयविशेषस्य प्रमाणतत्त्वस्य ग्रन्थेन सह प्रतिपाद्यप्रतिपादकभावसम्बन्धालाभे हेतुज्ञानासम्भवेन सप्रयोजनत्वानुमितेरेव सिद्धिर्न स्यात् ।

उद्धारेच्छा = घटस्य उद्धारो भवतु इत्याकारकेच्छायाः मुनेः स्वीकारे तस्य भ्रान्तत्वं तदीयायास्तादृशेच्छायाश्च विसंवादित्वम् प्रसज्ज्येतेति भावः । विशेषणत्वम् । तत्कालावच्छिन्नतद्वत्त्वमित्यर्थः । अतः = उपलक्षणत्वव्यावृत्तविशेषणत्वस्य विद्यमानत्वे सति इतरव्यावर्त्तकत्वरूपस्य निवेशादेव । व्यावृत्तिरिति । मुक्तात्मनां वासनावत्त्वोपलक्षितत्वेऽपि वासनाविशिष्टत्वविरहेण वारणात् । परमेश्वरादीति । आदिपदेन मुक्तात्मपरिग्रहः । व्यावृत्तिसम्भवात् । तेषां दुखःपङ्कनिमग्नत्वाभावादिति स्पष्टम् । संसारित्वविशेषणवैयर्थ्यमिति । ननु दुःखपङ्कनिमग्नत्वपदेन दुःखवत्त्वस्यैव बोधात् तस्य विशेषणत्वे स्वर्गिणामुद्दिधीर्षाविषयत्वं न स्यात् दुःखाभावेनोद्देश्यतावच्छेदकानाक्रान्तत्वात्, उपलक्षणत्वे तु मुक्तात्मनामपि उद्दिधीर्षाविषयत्वापत्तिः तेषामपि प्रतियोगिव्यधिकरणदुःखवत्त्वाभावाभाववत्वात् अतः संसारित्वविशेषणत्वमावश्यकम्, तथा सति च दुःखित्वस्योपलक्षणतया स्वर्गिणामपि संग्रहसम्भवात् इति संसारित्वविशेषणवैयर्थ्यशङ्का गदाधरस्य असंगतेति चेन्न ? दुःखपङ्कनिमग्नत्वपदेन दुखप्रागभाववत्त्वस्यैव विवक्षणात् । किञ्च दुःखवत्त्वस्यैव तदर्थत्वेऽपि दुःखानि चैकविंशतिरिति न्यायसिद्धान्तेन स्वर्गिणामपि दुःखवत्त्वेन शङ्काग्रन्थसङ्गतौ बाधाभावात् । एवं हि = दुःखपङ्कनिमग्नत्वस्योद्देश्यतावच्छेदककोटौ प्रविष्टत्वे । वैयर्थ्यापातात् । अत्र हेतुमाह आत्मभिन्नानामित्यादि ।

( गा० ) दुःखपङ्कनिमग्नत्वस्योद्दिधीर्षाविषयत्वोद्देश्यजगत्पदार्थव्यावर्त्तक-तया विवक्षितत्वे उद्देश्यतावच्छेदकीभूततद्वाचकपदस्य जगत्पदपूर्वमुपादानं क्रियेतेति 'यतो जगत् दुःखपङ्कनिमग्नमतस्तदुद्दिधीर्षुः' इत्यर्थस्यैव विवक्षणात् जगत्पदार्थतावच्छेदकमात्रस्यैव उद्दिधीर्षितत्वोद्देश्यतावच्छेदकतया तत्र संसारि-त्वान्तर्भावस्य आवश्यकत्वात्। आत्मपदं चावच्छेदकशरीरव्यावृत्तस्य समवा-येन वासनाविशेषवत्त्वस्य लाभाय। लक्षणयापि समूहे एव प्रामाणिकानां जगत्पदस्य व्यवहारात् समूहार्थकं जगत्पदं नत्वशेषार्थकम् एवकारेणैव तल्ला-भात्। अथवा जगत्पदमेवाशेषार्थकम् तत्परत्वग्राहक एवकारः नतु तदर्थको यथा "सर्व एव शुभः कालः" इत्यादौ।

---

( प्रभा ) इष्टापत्तौ बाधकमाह दुःखपङ्कनिमग्नत्वेति। अयम्भावः, दुःखपङ्क-निमग्नत्वं यद्युद्देश्यतावच्छेदकतया विवक्षितं स्यात्तदा 'यच्छब्दयोगः प्राथम्यं स्यादुद्देश्यस्य लक्षणम्, इति रीत्या उद्देश्यतावच्छेदकीभूततद्वाचकपदस्य जगत्पदात् पूर्वमुपादानं स्यात्, नचैवमस्ति, तस्मात् न तथा, किन्तु यतः जगत् दुःखपङ्कनिमग्नमतस्तदुद्दिधीर्षुरिति उद्दिधीर्षाविषयत्वदुःखपङ्कनिमग्नत्वयोः प्रयोज्यप्रयोजकभाव एव विवक्षितः। संसारि-त्वान्तर्भावस्यावश्यकत्वादिति। तथा च दुःखपङ्कनिमग्नत्वस्यैव विधेयत्वे जगत्प-दार्थतावच्छेदकावच्छेदेनान्वयस्यैव अगत्या विवक्षणीयतया मुक्तात्मनि दुःखपङ्कनिमग्नत्व-रूपहेत्वसिद्धिपरीहाराय संसारित्वविशेषणस्य आवश्यकत्वादिति भावः। ननु तथाप्यात्मपदं व्यर्थम् संसारविशिष्टस्यैव जगत्पदार्थत्वेऽदोषादित्यत आह आत्मपदं चेति। लाभा-येति। अन्यथा अवच्छेदकतासम्बन्धेन मिथ्याज्ञानजन्यवासनात्मकसंसारविशिष्टस्य शरीरस्यापि उद्देश्यतावच्छेदकाक्रान्ततया तस्य चाचेतनतया तत्र मुक्तिरूपोद्धारबाधेन मुनेर्भ्रान्तत्वापत्तेस्तदिच्छायाश्च विसंवादित्वापत्तेः। आत्मपदोपादाने तु समवायेन वासना-वत्त्वलाभे शरीरस्यातथात्वान्न तथात्वापत्तिरिति। यत्किञ्चिदेकात्मोद्धारेच्छया महत्तरशास्त्र-प्रणयनं व्यर्थं स्यादित्यत आह लक्षणयापीति। अपिना शक्तिपरिग्रहः दृष्टान्तार्थः। अयमाशयः, यथा शक्त्या चेतनाचेतनसमूहस्य बोधकं जगत्पदं तथा लक्षणया तादृशा-त्मसमूहस्यापि बोधकम्।

नत्वशेषार्थकमिति—व्यवहारेण अशेषार्थकत्वानिर्णयात्। नन्वेवम् जगद्वृत्ति-समूहत्वमात्रेणोद्धारेच्छाविषयत्वे प्रत्येकमुद्धारानुपपत्तिरतः तत्तत्संसारावच्छिन्नयावल्लाभ आवश्यकः। अतएव विशेष्ये सकलजीवानामान्वीक्षिकीशास्त्राध्ययनद्वारोद्देश्यतानिर्वाहोऽ-भिधास्यते। तथा च अशेषरूपार्थलाभःकुत इत्यत आह एवकारेणैवेति। तल्लाभा-दिति। एवकारस्यात्र अन्ययोगव्यवच्छेदार्थकतया जगत्पदार्थभिन्ने उद्धारेच्छाशून्यत्व-सहितजगदुद्धारेच्छाबोधेन अर्थतस्तल्लाभादित्यर्थः। तथा च समभिव्याहृतपदार्थतावच्छेदक-समानाधिकरणसकलतत्तद्धर्मावच्छिन्नरूपोऽशेष एवकारार्थः, तद्धर्मश्च विशिष्य संसाररूप एव ग्राह्यो नतु तत्तद्व्यक्तित्वरूपः मुक्तानामुद्धारेच्छाविषयत्वापत्तेरिति।

( दी० ) नचानधिकारिणःशूद्रादीनध्यापयाम्बभूव प्रवरो मुनीनां येनाशङ्क्येतापि प्रत्यवायस्तस्य ।

नचानधिकारिणां शास्त्रावलोकनेन अर्थावगमे प्रत्यवयन्ति प्रणेतारः शास्त्राणाम् ।

---

( गा० ) ननु शूद्रादीनामपि जगदन्तर्गततया विद्यानधिकारिणां तेषामर्थज्ञानेच्छया शास्त्रप्रणयने महर्षिः प्रत्यवेयात् , अनधिकारिणामर्थज्ञानेच्छया शब्दप्रयोगरूपतदध्यापनस्य प्रत्यवायहेतुत्वात् इति अधिकारित्वमपि विशेषणमस्तु इत्याशङ्काम् परिहरति *नचेति* ।

*शूद्रादीन्* = शूद्रत्वादिजात्याक्रान्तशरीरविशेषविशिष्टात्मनः । *अध्यापयाम्बभूव* = उद्दिश्य शास्त्रम् प्रणिनाय । तादृशशरीरोपलक्षितात्मनां शास्त्रार्थज्ञानभागितया तदुद्देश्यत्वादिति भावः ।

अनधिकारिताप्रयोजकशरीरावच्छिन्नज्ञानेच्छया शब्दप्रयोगस्यैव प्रत्यवायहेतुत्वमित्याशयेनाह *येनेति* । स्वप्रयुक्तशब्दाद् दैववशेनानधिकारिणामर्थज्ञानं न प्रत्यवायहेतुरित्याह *नचेति* । तथा सति ब्राह्मणादिमात्रोद्दिधीर्षया शास्त्रप्रणयनादपि प्रत्यवेयादिति भावः ।

---

(प्रभा) ननु व्यासज्यवृत्तिजगत्पदार्थघटकसमूहत्वावच्छिन्नभेदः प्रत्येकं जगत्यपि वर्त्तते समुदायभेदस्यैकदेशेऽङ्गीकरात् , तथा च जगत्पदार्थभिन्ने प्रत्येकमुद्धारेच्छाशून्यत्वम् नास्ति इत्यत आह अथवेति । वस्तुतः एवपदसमभिव्याहारेण जगत्पदार्थसंसार्य्यात्मत्वसमानाधिकरणसकलतत्तत्संसारवत्त्वलाभेनैवोपपत्तौ समूहनिवेशनमनुचितमेवेत्यत आह अथवेति ।

ननु पूर्वोक्तदिशा संसार्य्यात्मत्वस्योद्देश्यतावच्छेदकत्वे असति बाधके उद्देश्यतावच्छेदव्यापकत्वं विधेये विधेयसंसर्गे वा भासत इति नियमेन उद्दिधीर्षाविषयत्वे संसार्य्यात्मत्वव्यापकत्वस्यापि लाभात् शूद्रादिशरीरावच्छिन्नात्मनामपि तादृशोद्देश्यतावच्छेदकाक्रान्ततया तत्रापि उद्दिधीर्षाविषयत्वसम्पत्त्यर्थम् तानध्यापिपयिषुर्मुनिः प्रत्यवेयात् अतः अधिकारित्वविशेषणमपि उद्देश्यकोटावपेक्षितमित्याशङ्कते ननु शूद्रादीनिति । तथा च तत एवाचेतनानाम् मुक्तात्माद्यनधिकारिणां च समेषां वारणसम्भवे पूर्वोक्तं जगत्पदेन संसार्यात्मजातत्वविशेषणमसङ्गतमितिहृदयं गदाधरस्य नन्वित्यादिशङ्कने ।

उद्दिश्य शास्त्रम् प्रणिनायेति । तथा च यदि शूद्रत्वजात्यवच्छिन्नशरीरविशेषविशिष्टात्मानमुद्दिश्य मुनिः शास्त्रप्रणयनमकरिष्यत् तदा प्रत्यवैष्यत् ‚ प्रकृते तु न तथा । फलपातनेच्छया इषुप्रयोगे विप्रादिमरणे वाचनिकप्रायश्चित्तविध्यन्यथानुपपत्त्या प्रत्यावायान्तरकल्पनेऽपि इह विध्यभावात् तथाकल्पनस्यासम्भवात् ।

अनधिकारितेति । तथा च अनधिकारिताप्रयोजकं यच्छूद्रादिशरीरं तद् विशिष्टात्मविशेष्यकतत्त्वज्ञानप्रकारकेच्छाप्रयोज्यशब्दप्रयोगो हि प्रत्यवायप्रयोजकः.

( दी० ) उद्देश्यता तु कीटपतङ्गादीनामपि विशिष्टशरीरपरिग्रहादर्थावगमेन सम्भवन्ती न कामपि क्षतिमावहतीति सर्वं चतुरस्त्रम् । टीकाकृतस्तु समाधिसौकर्य्यादभ्युपेत्य प्रत्यवायं मुनेरन्यथैव समादधिरे ।

---

(गा०) ननु जन्यज्ञानस्य शरीरावच्छिन्नत्वनियमात् शूद्राद्यात्मनामुद्धारेच्छया शस्त्रप्रणयने शूद्राद्यात्मनां ज्ञानभागितया उद्देश्यत्वे शूद्रादिशरीरावच्छिन्नज्ञानेच्छा मुनेरावश्यकीत्याशङ्काम् परिहरति *उद्देश्यत्वेति* । अर्थज्ञानवत्त्वेनेच्छाविषयता त्वित्यर्थः । *विशिष्टशरीरेति* । ब्राह्मणत्वादिविशिष्टशरीरं परिगृह्य एतच्छास्त्रार्थमवगच्छेत् इत्यभिसन्धानेन अनधिकारिशरीरावच्छिन्नतया ज्ञानस्य इच्छयानवगाहनेऽपि उपपद्यमानेत्यर्थः । अन्यथा कीटादिशरीरस्य शास्त्राधीनज्ञानानवच्छेदकत्वनिश्चयात् तदात्मनामुद्देश्यतैव न निर्वहेदिति भावः । *क्षतिम्* = प्रत्यवायम् ।

ननु एवम् मुनेरुत्पन्नोऽपि प्रत्यवायःतपःप्रभावात् नश्यतीति टीकाकारसमाधानविरोध इत्यत आह *टीकाकृतस्त्विति* ।

ननु प्रमाकरणत्वरूपप्रमाणतत्त्वावधारणे तद्घटकप्रमातत्त्वावधारणस्यापि अपेक्षिततया तस्य स्वतः परतश्चासम्भवेन प्रमाणतत्त्वस्य दुरवधारणतया तदवधारणसम्पादनेन शास्त्रस्य निश्श्रेयसोपयोगित्वं यत् सूत्रकृतोक्तं तन्न युज्यते इत्याक्षेपे प्रामाण्यावधारणस्य व्यभिचारान्यथासिद्धिभ्यां प्रवृत्त्यहेतुतया तदसम्भवेऽपि न क्षतिरित्याशङ्कनम् अथ किमित्यादिना मूलकृतोऽसङ्गतम् ,

---

(प्रभा) न शूद्राय मतिंदद्यात्, स्त्रीशूद्रौ नाधीयाताम् इत्याद्यनुशासनात् । प्रत्यवेयादिति । तथाचोक्तरीत्यैव सामञ्जस्येऽधिकारित्वविशेषणस्यानावश्यकतया तद्ग्रन्थसङ्गतेरिति भावः । जन्यज्ञानस्येति । अवच्छेदकतासम्बन्धेन जन्यज्ञानम् प्रति तादात्म्येन शरीरं कारणमिति कार्यकारणभावमूलकः शङ्काग्रन्थ एषः । "यानि चास्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि" इत्युपक्रम्य 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः" इत्याद्यौपनिषदसिद्धान्तम् मनसि कृत्योक्त तपःप्रभावादिति । टीकाकृतः = वाचस्पतिमिश्राः ।

तद्घटकेति । विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणतया प्रमाणतत्त्वनिश्चयम् प्रति प्रमात्वप्रकारकनिश्चयस्यापि हेतुत्वादिति भावः । तस्य = प्रमात्वस्य । प्रामाण्यावधारणस्य = प्रमात्वनिश्चयस्य, प्रमाणशब्दस्य भावल्युडन्ततया प्रमाणस्य भावः प्रामाण्यमिति व्युत्पत्त्या प्रमात्वप्रकारकनिश्चय इति फलितोऽर्थः ।

( चि० म० ) ननु प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं परम्परया निश्श्रेयसेन सम्बध्यत इति न युक्तम्, प्रमाणतत्त्वावधारणस्याशक्यत्वात्, तद्धि प्रमातत्त्वावधारणाधीनम्, तच्च स्वतः परतो वा न सम्भवति, वक्ष्यमाणदूषणगणग्रासात्।

---

( दी० ) प्रामाण्यनिश्चायनेन निश्श्रेयसार्थिनम् प्रवर्त्तयच्छास्त्रं निःश्रेयसेन सम्बध्यतइति (आशयं)

---

( गा० ) प्रवर्त्तकतया प्रामाण्यनिश्चयापेक्षाया आक्षेपेऽनुक्तत्वात् अतः-प्रवर्त्तकतया प्रामाण्यनिश्चयापेक्षैव आक्षेपकस्य अभिप्रेतेत्यभिमानमूलकतया शङ्कां सङ्क्रमयति *प्रामाण्येति*। *प्रामाण्यनिश्चायनेन* = निःश्रेयसार्थिप्रवृत्तिजनकज्ञाने प्रामाण्यनिश्चयसम्पादनेन, निश्चीयमानप्रामाण्यकस्य स्वप्रतिपाद्यप्रथमसूत्रार्थज्ञानस्य सम्पादनेनेति यावत्। *निःश्रेयसेन सम्बध्यत इति* = निःश्रेयसोपयोगि भवितुमर्हतीत्यर्थः। प्रमात्वस्य दुरवधारणतया च सूत्राधीनप्रयोजनवत्ताज्ञाने निश्चीयमानप्रामाण्यकत्वं न सम्भवतीति शेषः।

---

( प्रभा ) ननु प्रमाणादीनामिति चिन्तामणेरभिप्रायः। माध्यमिकशङ्का। स्वजनकज्ञानजनकत्वरूपपरम्परया प्रयोजनवत्त्वम् भवितुमर्हति, किन्तु स्वजनकज्ञानजनकत्वमेवात्रासम्भवि तस्य ग्रन्थाध्ययनधर्मिकप्रवृत्त्यधीनत्वात् तादृशप्रवृत्तेश्च ग्रन्थाध्ययनधर्मिकप्रयोजनवत्त्वज्ञानधर्मिकप्रमात्वनिश्चयाधीनत्वात् अप्रमात्मकप्रयोजनवत्त्वज्ञानात् प्रवृत्त्यापत्तिवारणाय तद्धर्मिकप्रवृत्तिम् प्रति तद्धर्मिकप्रयोजनवत्त्वज्ञानधर्मिकप्रमात्वनिश्चयस्य हेतुत्वात् प्रमात्वनिश्चयस्य तु वक्ष्यमाणदूषणगणग्रासेनासम्भवात् तथाच तादृशप्रमात्वनिश्चयाभावेन कस्यचिदपि शास्त्राध्ययनेऽप्रवृत्त्या न ततो मुक्तिसाधनीभूतप्रमाणतत्त्वज्ञानजनकतया प्रयोजनवत्त्वसिद्धिरित्याशयं मन्वानो माध्यमिकः प्रत्यवतिष्ठते नन्वित्यादिना। वक्ष्यमाणदूषणगणग्रासादिति चिन्तामणिः। वाक्ष्यमाणं च दूषणं प्रमात्वस्य स्वतस्त्वे अनभ्यासदशोत्पन्नज्ञाने संशयानुपपत्तिरूपम्, परतस्त्वे तु यद्यपि अनभ्यासदशोत्पन्नज्ञाने निरुक्तदूषणं न सम्भवति इदं ज्ञानम् प्रमा सम्वादिप्रवृत्तिजनकत्वात् इत्यनुमितेः प्राक् संशयसामग्रीसत्त्वे संशयसम्भवात् तथापि फलमुखी कारणमुखी चानवस्था स्यात्। तथाहि अप्रमात्मकतादृशानुमितेः वस्तुतत्त्वान्यवस्थापकतया तादृशप्रमात्वानुमितेरेव वस्तुनिश्चायकत्वं वक्तव्यम्। एवंच तादृशानुमितौ प्रामाण्यनिश्चायनाय अनुमित्यन्तरापेक्षणस्यावश्यकता, एवम् पुनस्तत्रापि प्रमात्वनिश्चयायानुमित्यन्तरापेक्षेत्यनवस्थापथः स्फुटति। नच संवादिप्रवृत्तिजनकत्वलिङ्गकप्रथमानुमितौ प्रमात्वनिश्चयाभावेऽपि तयानुमित्या प्रथमज्ञाने प्रमात्वनिश्चयः कुतो न जायते इति वाच्यम्, संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितौ प्रामाण्यनिश्चयाभावे सामग्रीसत्त्वे तत्र प्रामाण्यसंशयसम्भवेन तद्विषयीभूतप्रथमज्ञानगतप्रमात्वेऽपि संशयापत्तौ तद्विषयीभूतार्थेऽपि संशयापत्तेः।

( चि० म० ) अथ किम् प्रामाण्यज्ञानेन प्रवृत्तिमात्रे तस्य व्यभिचारात् । बहुवित्तव्ययायाससाध्ये प्रवृत्तिश्चावश्यकार्थनिश्चयादेव ।

---

(दी०) मन्वान आदेशयति अथेति । प्रामाण्यज्ञानेन = प्रामाण्यनिश्चयेन ।

---

(गा०) प्रामाण्यनिश्चायनेन इत्यस्य यथाश्रुतार्थपरता तु न सङ्गच्छते, एतच्छास्त्रस्य मोक्षसाधनताज्ञाने प्रामाण्याबोधकत्वात्, शास्त्राधीनप्रमात्वग्रहे स्वतस्त्वाप्रसक्त्या स्वतःपरतोवेत्यादिना स्वतस्त्वनिराकरणासङ्गतेश्च । इति मन्वानः = ननु इत्याक्षेपकर्त्तु रित्याशयं मन्वानः । अभिमानश्चायं न दुर्घटः तथाहि-परम्परयेत्यस्य प्रवर्त्तकज्ञाने प्रामाण्यनिश्चायनेनेत्यर्थकतायाः सम्भवात्, प्रमाणतत्त्वावधारणस्येत्यादेश्च शास्त्रश्रवणप्रवृत्तिनिर्वाह्यशास्त्राधीनप्रमाणतत्त्वावधारणस्याशक्यत्वात्, यतस्तत्र परम्परया प्रवर्त्तकज्ञाने प्रमातत्त्वावधारणमपेक्षितम्, तच्च स्वतः परतश्च न सम्भवति इत्यर्थकताया अपि सम्भवात् । नचैवमेतदर्थकताभिप्रायस्सम्भवदुक्तिक एव मूलकृत इति कथं तदभिमान इति वाच्यम् ? सम्मुखत एवाक्षेपसङ्गतेस्तथाभिप्रायस्यानौचित्यात् । प्रामाण्यावधारणात्मकस्यैव प्राग्दुर्घटत्वोक्तेः अथेत्यादिना तस्यैवानुपयोगित्वं शङ्कितुमुचितम् । ननु तज्ज्ञानसामान्यस्य, तथा सति उत्तरकालं निश्चयमात्रस्यैव उपयोगिताव्यवस्थापनमपि असंगतं स्यादतो ज्ञानपदं निश्चयपरतया व्याचष्टे प्रामाण्यज्ञानेनेति ।

---

( प्रभा ) अर्थनिश्चयोत्तरार्थसंशयम्प्रति अर्थनिश्चयधर्मिकप्रमात्वसंशयहेतुत्वावधारणात् । कारणमुखी चानवस्था संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिजनको यःप्रमात्वव्याप्यसंवादिप्रवृत्तिजनकत्ववदिदं ज्ञानम् इत्याकारकः परामर्शस्तत्रापि पूर्वोक्तदिशा प्रमात्वनिश्चयस्यावश्यकतया पुनस्तज्जनकज्ञाने परम्परायामपि प्रमात्वनिश्चयस्यापेक्षणीयतया स्फुटतितमाम् । गादाधर्याम्—स्वप्रतिपाद्येति । सर्वनाम्नामुत्सर्गतःप्रधानपरामर्शितया स्वमत्र आन्वीक्षिकीशास्त्रम्, तेन प्रतिपाद्याःविषया एव प्रथमसूत्रेण = प्रमाणप्रमेयेत्यादिनाऽभिधीयन्ते तेषां ज्ञानस्य सम्पादनेनेति यावत् ।

ननु प्रामाण्यनिश्चायनेनेत्यस्य प्रमाणनिश्चयजनकत्वरूपयथाश्रुतार्थम् परित्यज्य निश्चीयमानप्रामाण्यकस्येत्याद्यर्थान्तरानुधावनं किमर्थमित्यत आह यथाश्रुतार्थपरता त्विति । तत्र हेतुमाह एतच्छास्त्रस्येति । आन्वीक्षिकीशास्त्रस्येत्यर्थः । प्रामाण्याबोधकत्वादिति । शास्त्रे तद्बोधकपदाभावादिति शेषः । प्रमात्वप्रकारकबोधजनकत्वादित्यर्थः । एतच्छास्त्रस्य प्रमाणादितत्त्वज्ञानधर्मिकनिःश्रेयससाधनत्वप्रकारकज्ञानस्यैव जनकत्वेन प्रमाणादितत्त्वज्ञानम् मोक्षसाधनम् इति ज्ञानम्प्रमा इत्याकारकनिश्चयाजनकत्वादिति यावत् । तथाच यथाश्रुतार्थपरित्यागो युक्त एव । निश्चीयमानप्रामाण्यकत्वोक्तौ प्रमात्वनिश्चयस्य अन्यतोलाभसम्भवात् । शास्त्रस्य प्रामाण्यबोधकत्वे त्वाह शास्त्राधीनप्रमात्वग्रह इति । लक्षणादिना आन्वीक्षिकीशास्त्राधीनप्रयोजनवत्त्वज्ञानधर्मिकप्रमात्वग्रह इति भावः ।

( चि० म० ) नच यस्य संशयव्यतिरेकनिश्चयौ प्रवृत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुः अनुमितौ व्याप्तेरिव इति वाच्यम्,

---

(दी०) यस्य संशयव्यतिरेकनिश्चयौ = यद्व्यतिरेकसंशयनिश्चयौ ।

---

( गा० ) 'यस्य संशयव्यतिरेकनिश्चयौ, इति मूलं व्यतिरेकज्ञानसामान्यपरतया अनुपदं वर्णनीयम्, सामान्यलाभश्च यावद्विशेषोपादानादेव, तच्च यथाश्रुते नोपपद्यते, यत्संशयानात्मकयद्व्यतिरेकसंशयानुपादानात्, तदभाववद्भेदकोटिकतदभावसंशयस्य तत्संशयानात्मकत्वात् एवं यत्संशयादिपदं यद्रूपावच्छिन्नविषयकसंशयादिपरमवश्यं वाच्यम्, व्याप्तिसंशयसामान्यान्तर्गतानाम् किञ्चिद्रूपेण व्याप्तिप्रकारकनानासंशयानामनुमित्युत्पत्त्यावप्रतिबन्धकत्वात् । तथा च व्याप्तित्वावच्छिन्नसंशयानात्मकोऽपि व्याप्त्यभावाभावत्वादिना व्याप्तिविषयकव्याप्त्यभावादिसंशयस्सम्भवतीति व्याप्तित्वाद्यवच्छिन्नसंशयत्वेन तदुपादानासम्भवादसङ्गतिः, अतो व्यतिरेकपदव्यत्यासेन व्यतिरेकविषयकसंशयनिश्चयपरतया व्याचष्टे यस्येति ।

---

( प्रभा ) चिन्तामणिः । अत्र तटस्थः शङ्कते अथेत्यादिना । तस्य चायमाशयः, प्रवृत्तिम् प्रति प्रयोजनवत्त्वज्ञानधर्मिकप्रमात्वनिश्चयस्य हेतुत्वं न सम्भवति तादृशप्रमात्वनिश्चयाभावेऽपि केवलप्रयोजनवत्त्वज्ञानेनापि प्रवृत्तेर्दृष्टचरत्वात् । तथा च प्रयोजनवत्त्वज्ञानमादाय ग्रन्थाध्ययने प्रवृत्तिसम्भवेन प्रमाणतत्त्वज्ञानजनकतया शास्त्रस्य प्रयोजनवत्त्वसिद्धिरिति । उत्तरकालमिति । तन्निश्चयस्तद्धेतुरिति ग्रन्थेन । अतः = प्रामाण्यनिश्चयमात्रस्यैवोपयोगित्वव्यवस्थापनतः । ज्ञानपदमिति । प्रमाण्यज्ञानेनेत्यत्र ज्ञानपदमित्यर्थः । व्यभिचारादिति चिन्तामणिः । विसंवादिप्रवृत्तेस्तेन विनापि जननादित्यर्थः तथा च प्रवृत्तिम् प्रति प्रयोजनवत्त्वज्ञानमेव कारणमिति हृदयम् । ननु विसंवादिप्रवृत्तौ प्रामाण्यनिश्चयस्याहेतुत्वेन व्यभिचारसम्भवेऽपि संवादिप्रवृत्तौ व्यभिचाराभावात् हेतुत्वमस्तु इत्याशङ्क्यान्यथासिद्धत्वेन तस्य हेतुत्वं निराकरोति बहुवित्तेति । अर्थनिश्चयादिति । अर्थः प्रयोजनम् तद्वत्तानिश्चयादित्यर्थः । एवकारेण प्रमाण्यनिश्चयो व्यवच्छिद्यते । तथा च संवादिप्रवृत्तेरपि प्रयोजनवत्त्वनिश्चयादेवोपपत्तौ प्रामाण्यनिश्चयस्यान्यथासिद्धत्वमेवेति चिन्तामणेरभिप्रायः । न च विनिगमनाविरहात् प्रयोजनवत्त्वनिश्चयस्यैव कुतो नान्यथासिद्धत्वमिति वाच्यम्, साधनतासंसर्गेण प्रयोजनवत्त्वनिश्चयासत्त्वे तद्धर्मिकप्रमात्वनिश्चयेऽपि प्रवृत्त्यनुपपत्तेरेव गमकत्वात् ।

( प्रभा ) तटस्थशंकां निराकर्त्तुं प्रवृत्तौ प्रमाण्यनिश्चयस्य जनकतां स्थापयितुं पुनर्माध्यमिकस्सामान्यव्याप्तिमादाय शंकते नचेति। प्रवृत्तिप्रतिबन्धकाविति। अत्र प्रवृत्ति इति सम्पातायातम् प्रवृत्तेरेवात्र प्रधानतया तदुपादानात्। व्याप्तेः प्रवृत्तिघटितत्वे अनुमितौ व्याप्तेरिवेति दृष्टान्तासङ्गत्यापत्तेः। अत एवाग्रे वक्ष्यति प्रवृत्तिरिति तु प्रकृताभिप्रायम्। तथाच यस्य संशयः यस्य व्यतिरेकनिश्चयश्च यत्र प्रतिबन्धकः तन्निश्चयस्तद्धेतुरिति यथाश्रुतोऽर्थः। अत्रेदमनुसन्धेयम्, हेतुसाध्ययोः सामानाधिकरण्य-सम्पादनाय यत्संशयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वे सति यद्व्यतिरेकनिश्चय-निष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावान् यो भवति स तन्निश्चयनिष्ठजनकतानिरूपितजन्य-तावान् भवति इति सामान्यव्याप्तिरादर्त्तव्या। तथाच ग्रन्थाध्ययनधर्मिकप्रवृत्तिः ग्रन्थाध्ययनधर्मिकप्रयोजनवत्त्वज्ञानधर्मिकप्रमात्वनिश्चयजन्या तादृशप्रमात्वसंशयनिष्ठ-प्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वे सति तादृशप्रयोजनवत्त्वज्ञानधर्मिकप्रमात्वव्यतिरेक-निश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वात् इत्यनुमानम् फलति। तत्र दृष्टान्तमाह अनुमितौ व्याप्तेरिवेति। तथाच यथा धूमधर्मिकव्याप्तिसंशयनिष्ठप्रतिबन्धकतानिरूपित-प्रतिबध्यतावत्त्वे सति धूमधर्मिकव्याप्तिव्यतिरेकनिश्चयनिष्ठप्रतिबन्धकतानिरूपित-प्रतिबध्यतावत्त्व धूमलिंगकानुमितौ वर्त्तते तत्र च धूमधर्मिकव्याप्तिनिश्चयजन्यत्वमपि। एवम् प्रकृतेऽपि तथा हेतुसद्भावेन साध्यसत्त्वमावश्यकम्। अत्र यस्य संशयो यत्र प्रतिबन्धकः एतावन्मात्रोक्तौ व्याप्तिज्ञाने व्यभिचारसंशयनिरूपितप्रतिबध्यत्वसत्त्वात् अथच तत्र व्यभिचारनिश्चयजन्यत्वविरहात् व्यभिचारस्स्यादतो व्यतिरेकनिश्चयस्यापि व्याप्तिशरीर उपादानम्। तथा च व्यभिचारव्यतिरेकनिश्चयस्य व्याप्तिज्ञानेऽप्रतिबन्ध-कत्वात् न व्यभिचारसंशयोऽपि। यस्य व्यतिरेकनिश्चय इत्येतावन्मात्रोक्तौ योग्यताव्यति-रेकनिश्चयस्य शाब्दबोधे प्रतिबन्धकत्वात् अथच योग्यतानिश्चयजन्यत्वस्य शाब्दबोधे विरहात् व्यभिचारस्स्यात् अतो व्याप्तिघटकतया यस्य संशयेत्युक्तम्। तथा च योग्यतासंशयस्य शाब्दबोधेऽप्रतिबन्धकतया न व्यभिचारः। नच कदाचित् योग्यता-निश्चयोऽपि शाब्दबोधहेतुर्भवत्येवेति कथमुक्त संगच्छत इति वाच्यम्, तन्निश्चयत्वेना-हेतुत्वात् अन्यथा दैवात् प्रामाण्यविषयककृतिसाध्यतानिश्चयजन्यत्वात् प्रवृत्तेः सिद्धसा-धनापत्तेरिति केचित्।

वस्तुतस्तु संशयानुपादाने घटव्यतिरेकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताव-त्त्वस्य घटवत्ताबुद्धौ सत्त्वेन तत्र च घटवत्त्वनिश्चयजन्यत्वविरहात् व्यभिचारापत्तिरतस्त-दुपादानम्। तथा च घटसंशयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्य घटवत्त्वबुद्धाव-सत्त्वेन न व्यभिचारावसरः, ग्राह्यबुद्धौ ग्राह्यसंशयस्याप्रतिबन्धकत्वात्। ग्राह्यसंशयस्य तु न प्रतिबन्धकतेति दीधितिकृता स्वयमेव स्फुटीकरिष्यमाणत्वात्।

अनुपदमितिगादाधरी। 'तेन व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यते, इति ग्रन्थेन इति शेषः। सामान्यलाभश्च यावद्धिति। अयमाशयः, यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यते इति ग्रन्थेन दीधितिकृताऽग्रे वक्ष्यते। यद्व्यतिरेकज्ञान-सामान्यस्य प्रतिबन्धकतासामान्यलाभस्तु मूलकारीयव्याप्तेः यावद्व्यतिरेकज्ञान-

( प्रभा ) लाभमन्तरेण न सम्भवति, स च व्यतिरेकपदव्यत्यासं विना न सम्भवति धूमो व्याप्यभाववान् न वा धूमो व्याप्तिमद्भिन्नो न वा, इत्याकारकव्याप्ति-व्यतिरेकज्ञानस्य यत्संशयपदेनासङ्ग्रहात् । अतो व्यतिरेकपदस्य व्यत्यास आवश्यक इति इममेवार्थं स्फुटयति यत्संशयानात्मकेति । व्याप्तिसंशयानात्मकेत्यर्थः । यद्व्यतिरेकसंशयानुपादानादिति । व्याप्यभाववान्नवेति संशयानुपादानादित्यर्थः । तदभाववद्भेदकोटिकेति । धूमो वह्निव्याप्यभाववद्भिन्नो न वेत्याकारकव्याप्यभाव-वद्भेदकोटिकसंशये इत्यर्थः । तत्संशयानात्मकत्वात् । व्याप्तिसंशयानात्मकत्वात् । तथाच यत्संशययद्व्यतिरेकनिश्चयान्यतरत्वं यदि यद्व्यतिरेकज्ञानत्वसमनियतं स्यात् तदा लाघवात् यद्व्यतिरेकज्ञानत्वं प्रतिबन्धकतावच्छेदकं स्यात् तदेव तु न सम्भवति, व्याप्य-भाववान्नवा व्याप्यभाववद्भिन्नो नवेति संशययोर्व्यतिरेकज्ञानत्वसत्त्वेऽपि तादृशान्यतरत्व-विरहादिति भावः । ननु अभावाभावस्य प्रतियोगिरूपतया व्याप्यभाववान्नवेति संशयस्यापि व्याप्तिविषयकसंशयरूपत्वेन संग्रहः सम्भवति, एवं व्याप्यभाववद्भेदस्यापि व्याप्तिसम-नियततया व्याप्तिरूपत्वसम्भवेन व्याप्यभाववद्भिन्नो नवेत्याकारकभेदकोटिकसंशयस्यापि व्याप्तिविषयकसंशयरूपत्वेन संग्रहस्स्यात्तथाच यावद्रूपोपादानलाभेन व्यतिरेकपदव्यत्यासो दीधितिकृतः पुनर्व्यर्थं इत्यरुचेराह एवमिति[1] । तथाच अयमाशयः, यत्संशयपदेन यन्निष्ठप्रकारताकसंशयविवक्षणे व्याप्यभावाभावरूपव्याप्तिनिष्ठप्रकारताकत्वेन व्याप्यभाव-वद्भेदरूपव्याप्तिनिष्ठप्रकारताकत्वेन च निरुक्तसंशययोः संग्रहसम्भवेऽपि धूमो वह्निव्याप्य-भाववान्नवा घटाभाववच्च भूतलम् इतिसमूहालम्बनसंशयनिष्ठघटाभाववद्भूतलविषयं-कत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्य घटवद्भूतलमिति ज्ञाने सत्त्वेन तत्र च तन्निश्चयजन्यत्वविरहात् व्यभिचारापत्तिस्स्यादतस्तद्वारणाय यन्निष्ठप्रकारताकसंशयत्व-व्यापकत्वप्रतिबन्धकतेत्यादिरीत्या व्यापकत्वनिवेश आवश्यकः । एवं च प्रमेयत्वेन व्याप्त्यवगाही प्रमेयवान् नवा इत्याकारकसंशयेऽपि व्याप्तिनिष्ठप्रकारताकसंशयत्वस्य सत्त्वात् तत्र च धूमलिङ्गकानुमितिनिरूपतिप्रतिबन्धकत्वस्य विरहेण व्यापकत्वासम्भवाद् दृष्टान्तासिद्धिः स्यात् अतः यद्रूपावच्छिन्नप्रकारताकसंशयत्वव्यापकप्रतिबन्धकतानिरू-पितप्रतिबध्यतावत्त्वे सति यद्रूपावच्छिन्नप्रतियोगिताकाभावप्रकारताकनिश्चयनिष्ठप्रतिबन्ध-कतानिरूपितप्रतिबध्यतावत्त्वस्य हेतुत्वं विवक्षणीयम् । तथा च धूमो व्याप्यभाववान्नवा[2]

---

[1]भेदकोटिकसंशयासंग्रहमुक्त्वा अत्यन्ताभावकोटिकसंशयासंग्रहमाह एवमित्यपि केचित् ।

[2]नच व्याप्यभाववान्नवेत्यादिसंशयादावपि व्याप्तित्वावच्छिन्नविषयताकत्वमस्त्ये-वेति व्याप्तित्वावच्छिन्नविषयताकसंशयपदेनापि तत्संग्रहस्स्यादिति वाच्यम् ? निरुक्तव्याप्तिशरीरे सम्बन्धानिवेशे सामान्यतो व्याप्तित्वावच्छिन्नविषयताकसं-शयत्वस्य कालिकादिसम्बन्धेन व्याप्त्यवगाहिसंशयेऽपि सत्त्वेन तत्र च धूमलिंगकानु-मितिनिरूपितप्रतिबन्धकत्वविरहेण दृष्टान्तासिद्धिस्स्यात् । एवम् संयोगसम्बन्धेन

( प्रभा ) व्याप्त्यभाववद्भिन्नो नवा इत्याकारकसंशययोः व्याप्तिनिष्ठप्रकारताकत्वसत्त्वेऽपि व्याप्तित्वावच्छिन्नप्रकारताकत्वविरहेण यद्रूपावच्छिन्नसंशयपदेन धत्तुमशक्यतया यावद्-यद्व्यतिरेकज्ञानलाभासम्भवात् तल्लाभार्थं व्यतिरेकपदव्यत्यासो 'युक्त एवेति । अधिकं क्रोडपत्रे द्रष्टव्यम् । व्याप्तिसंशयसामान्येति । व्याप्तिसंशयात्मकघटव्यतिरेकनिश्चय-प्रतिवध्यस्य घटविशिष्टज्ञानस्य व्याप्तिनिश्चयाधीनत्वात् व्यभिचारवारणाय सामान्य-पदम् । अत एव यद्रूपावच्छिन्नविषयकसंशयत्वव्यापकत्वं' प्रतिवन्धकतायामग्रे विवक्षणीय-मिति भावः । यद्रूपावच्छिन्नेत्यस्य फलमाह किञ्चिद्रूपेणेत्यादि । मेयत्वादिनेत्यर्थः । प्रमेयत्वेन व्याप्त्यवगाही धूमः प्रमेयवान्नवेत्यादिसंशय इति यावत् । तथा च यत्संशय-सामान्यान्तर्गतधूमः प्रमेयवान्नवेतिसंशयप्रतिवन्धकताकत्वस्यानुमितौ विरहाद् दृष्टान्ता-सिद्धिरतो यत्संशयपदस्य यद्रूपावच्छिन्नप्रकारताकसंशयपरत्वमवश्यं वाच्यमिति तात्पर्यम् । इदमुपलक्षणम्, प्रमात्वसंशयसामान्यान्तर्गतानाम् किञ्चिद्रूपेण प्रमात्वप्रकारकसंशयानाम् प्रवृत्तावप्रतिवन्धकत्वात् स्वरूपासिद्धिरपि वोध्या ।

---

व्याप्त्यभाववान्धूम इति व्यतिरेकनिश्चयेऽपि व्याप्तित्वावच्छिन्नप्रतियोगिताकाभाव-निश्चयत्वस्य सत्त्वेन तत्र चानुमितिनिरूपितप्रतिवन्धकत्वविरहेण सएव दोषः स्यात्, अतो यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नप्रकारतानिरूपितयद्धर्मावच्छिन्नविशेष्यता-शालिसंशयत्वव्यापकप्रतिवन्धकतानिरूपितप्रतिवध्यतावत्त्वे सति यत्सम्बन्धावच्छिन्न-यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितयद्धर्मावच्छिन्नविशेष्य-ताशालिनिश्चयत्वव्यापकप्रतिवन्धकतानिरूपितप्रतिवध्यतावान् यः स तत्सम्बन्धाव-च्छिन्नतद्रूपावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छि-न्नजनकतानिरूपितजन्यतावान् भवतीत्येवं व्याप्तिस्वरूपमादरणीयम् । तथा च व्याप्त्यभावकोटिकव्याप्त्यभाववद्भेदकोटिकसंशयीयव्याप्तित्वावच्छिन्नविषयतायां स्वरूपसम्बन्धावच्छिन्नत्वविरहात् तत्संग्रहानुपपत्तेस्तादवस्थ्यात् । नचोक्तसंशयीय-व्याप्तित्वावच्छिन्नविषयतायाः स्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्न-त्वेन स्वरूपसम्बन्धावच्छिन्नत्वमपि अस्त्येव, तथाहि स्वरूपसम्बन्धावच्छिन्नत्वं नाम स्वरूपावच्छिन्नसंसर्गतानिरूपितत्वम्, परम्परया तादृशनिरूपितत्वस्य व्याप्तित्वा-वच्छिन्नविषयतायां सत्त्वादिति वाच्यम् ? परम्परया तादृशनिरूपितत्वमादाय पुन-र्दृष्टान्तासिद्धिवारणाय साक्षान्निरूपितत्वनिवेशस्यावश्यकत्वात् ।

यत्तु धूमपक्षकस्थलानुरोधेन प्रतिवध्यसमानधर्मितावच्छेदकत्वकथनं तन्न समीचीनम् ? दृष्टान्तासिद्धेर्वारणेऽपि प्रवृत्तौ स्वरूपासिद्धेर्दुर्वारत्वाद् ग्रन्थकारीय-रीतिविरुद्धत्वाच्च ।

'संशयत्वनिश्चयत्वे अव्याप्यवृत्तिजातिविशेषौ । नच जातित्वे कथमव्याप्यवृ-त्तित्वमिति वाच्यम् ? केवलान्वयिग्रन्थे तन्निरूपणात् ।

(गा० ) परेतु यथाश्रुते यस्येति षष्ठ्याः प्रतियोगित्वरूपार्थो व्यतिरेकान्वयी, अन्यश्च विषयितारूपः संशयान्वयी, अतस्तस्या एकार्थपरत्वनिर्वाहाय व्यतिरेकपदं व्यत्यस्यति *यस्येति* । नच घटस्य संशय इत्यादौ एकधर्मिक-घटतदभावावगाहिज्ञानलाभाय संशयपदं व्यतिरेकावगाहिसमानधर्मिक-ज्ञानपरम्, प्रतियोगित्वं विषयत्वं च षष्ठ्या अर्थः, संशयपदार्थैकदेशे व्यतिरेके प्रतियोगित्वस्य, ज्ञाने च विषयत्वस्य अन्वय इति व्युत्पत्तिराव-श्यकीति षष्ठ्या अर्थद्वयपरत्वमावश्यकमेवेति कथमेतदिति वाच्यम्? यतः स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व-स्वसामानाधिकरण्यो-भयसम्बन्धेन विषयताविशिष्टविषयताशालिज्ञानं संशयपदार्थः । चरमविष-यितायामेव षष्ठ्यर्थस्य निरूपकत्वस्य निरूप्यत्वस्य वान्वयः,

---

(प्रभा) यस्य संशयव्यतिरेकनिश्चयावित्यादियथाश्रुतमूले यत्पदोत्तरषष्ठ्याः द्विविधोर्थः कर्त्तव्यः, एकश्च संशयान्वयी विषयितारूपः, अपरश्च व्यतिरेकान्वयी प्रतियोगितारूप इत्येवमर्थद्वयकल्पनरूपगौरवमेव व्यतिरेकपदव्यत्यासे बीजान्तरम्प्रदर्शयताम् मतमाह परेत्विति । यथाश्रुत इति । यथाश्रुतत्वं च निरूढलक्षणेतरलक्षणाग्रहाजन्यशक्तिभ्र-माजन्यशाब्दबोधेच्छयोच्चरितत्वम् । एकार्थपरत्वनिर्वाहायेति । अर्थद्वयपरत्वे सकृदुच्चरि-तस्सकृदर्थं गमयति इति व्युत्पत्तिविरोधस्स्यात् । घटस्य संशय इत्यादौ संशयसमभिव्याहृत-षष्ठ्याः अर्थद्वयकल्पनाया अभिमततया संशयस्थले सकृदुच्चरितन्यायस्याप्रवृत्तिसिद्धान्ते-नार्थद्वयपरत्वं सम्भावयन्नाशङ्कते नचेति । समाधत्ते यत इति । स्वावच्छिन्नेति । स्वं विषयिता । आहार्यादिज्ञानवारणाय प्रथमसम्बन्धनिवेशः, घटवद्भूतलं घटाभाववद् भूतलम् इत्याकारकविरोधिज्ञानद्वयस्य संशयत्ववारणाय द्वितीयसम्बन्ध-निवेशः । समुच्चये प्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वान्न तत्रातिव्याप्तिः, निरवच्छिन्नसंयोगादिसम्बन्धेन प्रतिबन्धकत्वात् । चरमविषयितायामेवेति । एवकारेण प्रथमविषयिताव्यवच्छेदः । षष्ठ्यर्थस्येति । घटस्य संशय इत्यादाविति शेषः । निरूपकत्वस्येति । निरूपितत्वसम्बन्धेनेति शेषः । निरूपकतायां च प्रकृत्यर्थस्य घटस्य आधेयत्वसम्बन्धेनान्वयः । तथाच उक्तोभयसम्बन्धेन विषयिताविशिष्टा या घटवृत्तिनिरूपकताविशिष्टविषयिता तच्छालि ज्ञानमिति घटस्य संशय इति वाक्याद् बोधः । अत्र प्रथमविषयितापदेन घटाभावविषयिता, द्वितीयविषयितापदेन घटविषयिता ग्राह्या । एवं च घटाभावत्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता-वच्छेदकत्वस्य घटाभावत्वावच्छिन्नविषयितासामानाधिकरण्यस्य चोभयस्य सम्बन्धस्य घटविषयितायां सत्त्वात् लक्षणसमन्वयो बोद्धव्यः ।

नन्वेवम् घटस्य संशयो न पटस्य इति प्रयोगानुपपत्तिः पटनिरूपकत्वस्य निरूपितत्व-सम्बन्धावच्छिन्नप्रतियोगिताकाभावो नञा बोधयितुमशक्यः, निरूपितत्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः, सम्बन्धान्तरेण तदभाव-बोधे तु घटसंशयेऽपि न घटस्य संशय इति प्रयोगापत्तिरित्यत आह निरूप्यत्वस्य वेति ।

(प्रभा) एवं च निरूप्यत्वस्य स्वरूपसम्बन्धेनैव विषयितायामन्वये नञ् समभिव्याहारदशायाम् प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमौ इतिन्यायेन स्वरूपसम्बन्धेनैव तदभावबोधनात् तस्य च सम्बन्धस्य वृत्तिनियामकतयानुपपत्त्यभावात् । ननु प्रथमविषयितायामपि षष्ठ्यर्थनिरूपितत्वस्यान्वयेऽपि निर्वाहात् कथं चरमविषयितायामेवेति कथितमिति चेत् संशयपदस्य उक्तोभयसम्बन्धेन विषयिताविशिष्टविषयितायां ज्ञाने च खण्डशः शक्तिस्वीकारेण प्रथमविषयितायामन्वये षष्ठ्यर्थस्य एकदेशान्वयापत्तिः । नच खण्डशः शक्तिनये तादृशविषयिताविशिष्टविषयिताया गुरुतया विषयिताद्वये ज्ञाने च शक्तेः स्वीकरणीयतया कथं विषयितायां षष्ठ्यर्थस्यान्वयेऽपि नैकदेशान्वयापत्तिरिति वाच्यम्, खण्डशक्तिनये विषयितात्वेन विषयिताद्वये शक्तिस्वीकारे उद्देश्यतावच्छेदकविधेययोरैक्येन विषयितायां विषयिताऽन्वयासम्भवादतो विषयिताविशिष्टविषयित्वे शक्तिस्वीकारस्यावश्यकत्वात् । नच तवापि विषयिताविशिष्टविषयिताशालिज्ञानरूपसंशयपदार्थैकदेशे चरमविषयितायाम् षष्ठ्यर्थान्वये एकदेशान्वयो दुर्वार एवेति वाच्यम्, यतः निरुक्तोभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानं न संशयपदार्थः किन्तु निरुक्तोभयसम्बन्धेन विषयिताविशिष्टविषयिता-ज्ञान-एतदुभयम् । एवञ्च चरमविषयितायामन्वयोपगमे नैकदेशान्वयापत्तिरिति ध्येयम् ।

केचित्तु—ससम्बन्धिकस्थले चैत्रस्य गुरुकुलम् इत्यादौ साक्षात्पदार्थतावच्छेदकेऽन्वयस्य व्युत्पन्नतया चरमविषयितायाम् षष्ठ्यर्थस्यान्वये एकदेशान्वयेऽपि क्षत्यभावः, तस्याः साक्षात्पदार्थतावच्छेदकत्वात् । तथा च निरुक्तोभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानमेव संशयपदार्थः । खण्डशक्तिवादिनये शक्तिद्वयकल्पनाया अन्याय्यत्वात् । एवं संख्याकालाद्यतिरिक्तैकपदोपात्तपदार्थस्य विशेष्यविशेषणभावेनान्वयस्याव्युत्पन्नतया ज्ञाने विषयिताविशिष्टविषयित्वान्वयायोगाच्च । परन्तु पदार्थतावच्छेदककोटिप्रविष्टायाम् (पदार्थतावच्छेदकतावच्छेदकीभूतायाम्) प्रथमविषयितायाम् षष्ठ्यर्थान्वस्यान्याय्यत्वादपसिद्धान्ताच्चेतिचरमविषयितायामेवेत्युक्तमित्याहुः ।

अपरेतु संशयपदार्थघटकप्रथमविषयितायां षष्ठ्यर्थस्यान्वयोपगमे ज्ञानं घटनिरूपितविषयित्वाभाववत् इति बाधनिश्चयदशायां घटस्य संशय इति वाक्यजन्यबोधापत्तिः । तादृशबाधनिश्चयसत्त्वे घटनिरूपितविषयिताविशिष्टविषयिताशालिज्ञाने बाधकाभावात् । चरमविषयितायां षष्ठ्यर्थान्वयोपगमे तु तादृशबाधनिश्चयस्य विषयिताविशिष्टघटनिरूपितविषयिताशालिज्ञानप्रतिबन्धकत्वात् न तादृशबाधनिश्चयसत्त्वे तादृशवाक्यजन्यशाब्दबोधापत्तिरिति प्राहुः ।

यत्तु घटस्य संशयो न घटीय इतिवाक्यजन्यबोधापत्तिः घटनिरूपितविषयिताविशिष्टविषयिताशालि ज्ञानं घटनिरूपितविषयित्वाभाववदित्यादिशाब्दबोधे बाधकाभावादतो न प्रथमविषयितायां षष्ठ्यर्थस्यान्वयः । चरमविषयितायां षष्ठ्यर्थान्वयोपगमे विषयिताविशिष्टघटनिरूपितविषयिताशालिज्ञानं घटनिरूपितविषयित्वाभाववत् इत्यादिज्ञानस्य आहार्यतया तादृशवाक्यजन्यबोधानुदयादिति तन्न ? तादृशव्यवहारस्य संशयधर्मिकघटविषयितावदन्य-

( प्रभा ) त्वबोधकतया प्रमाण्यापत्तेरयोगात् । अन्यथा चरमविषयितायामन्वयेऽपि घटस्य संशयो न घटाभावीय इति व्यवहारस्य प्रमाण्यापत्तेर्दुर्वारत्वात् ।

वस्तुतो यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यते इति दीधितिरत्वार्थमेव तादृशान्वयस्य स्वीकारात् । तथाहि प्रथमविषयितायां यद्व्यतिरेकनिरूपितत्वस्यान्वयेयद्व्यतिरेकविषयिताविशिष्टविषयिताशालिज्ञानलाभः तथासति व्यतिरेकनिरूपितविषयितायाःज्ञानपदार्थेऽनन्वयात् ज्ञाने व्यतिरेकविषयकत्वलाभो न स्यात् । चरमविषयितामन्वये तु व्यतिरेकसंशय इत्यत्र व्यतिरेकनिरूपतिविषयिताशालिज्ञानलाभः—तत्र व्यतिरेकविषयितायाः ज्ञानांशेन्वयात् तन्मात्रोपादानेन सर्वसामञ्जस्ये नेतरांशो विवक्षणीय इति **गुरवः** ।

अत्रेदं बोध्यम् । प्रथमविषयितायाम् षष्ट्यर्थान्वये पर्वतो वह्निमान् वह्न्यभावव्याप्यवान्नवेति संशयस्य वह्निसंशयत्वापत्तिः तादृशोभयसम्बन्धेन वह्निविषयिताविशिष्टाया वह्न्यभावव्याप्यविषयितायास्तत्र सत्त्वात् अतश्चरमविषयितायामेवेत्यभिहितम् । नच चरमविषयितायां तस्यान्वयेऽपि वह्न्यभावव्याप्यांशे सन्दिग्धाप्रामाण्यकपर्वतो वह्निमान् नवा वह्न्यभावव्याप्यवांश्चेतिसंशयस्य वह्न्यभावव्याप्यसंशयत्वापत्तिरंतस्तद्वारणाय यदि चरमविषयितायाम् कोटितात्वादिकं निवेश्यते तदा प्रथमविषयितायामपि तन्निवेशसामञ्जस्येन उक्तदोषतादवस्थ्यमिति वाच्यम् ? तादृशसंशयस्य गृहीताप्रामाण्यकत्वेऽपि तस्य अनाहार्यत्वाभ्युपगमात् । तदभ्युपगमे तु वारणप्रकारःप्रयाससाध्य इति ध्येयम् ।

नच स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्व-स्वसामानाधिकरण्योभयविषयिताविशिष्टविषयिताशालिज्ञानत्वमेव संशयलक्षणं कुतो न कृतमिति वाच्यम् ? अत्र कल्पे घटस्य संशय इत्यादौ षष्ठ्यर्थस्य चरमविषयितायामन्वये पर्वतो वह्निमान् वह्न्यभावव्याप्यवान् नवेति संशयस्य वह्निसंशयत्वापत्तेः, तादृशोभयसम्बन्धेन वह्न्यभावव्याप्यविषयिताविशिष्टाया वह्निविषयितायास्तत्र सत्त्वात् । प्रथमविषयितायामन्वये तु तस्यापि लक्षणान्तरत्वादिति ध्येयम् ।

अत्र च तद्वत्ताबुद्धिम्प्रति व्याप्यवृत्तितानिरूपकतदभावावगाहिनिश्चयत्वेन प्रतिबन्धकत्वम् , व्याप्यवृत्तित्वं च निरवच्छिन्नाधेयताकत्वम् । अतोऽव्याप्यवृत्तित्वज्ञानकालिककोटिद्वयावगाहिसमुच्चयमादाय न दोषः । नच तथापि पर्वतो वह्निमान् वह्न्यभावव्याप्यवांश्चेत्याहार्यज्ञानस्य वह्निसंशयत्वापत्तिः तत्रोक्तविषयिताविशिष्टविषयिताकत्वादिति वाच्यम् ? स्वावच्छिन्नप्रतिबध्यतावत्त्व-स्वसमानाधिकरण्योभयसम्बन्धेन विषयितावैशिष्ट्यं विवक्षणीयम् । प्रतिबध्यतावत्त्वं च स्वसामानाधिकरण्यस्वनिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन । एवं च आहार्यज्ञाने प्रतिबध्यताविरहादेव संशयत्वापत्तिविरहात् । नचैवं वह्निमान् पर्वतो वह्निव्याप्यवान्नवा वह्निमान् पर्वतो घटवान् नवेत्यादिसंशयानामपि वह्निसंशयत्वापत्तिरितिवाच्यम् ? चरमविषयितायाम् अवच्छेदकत्वानवच्छिन्नत्वेन तदन्तरत्वेन वा विशेषणात् ।

अथैवमपि भूतलं घटवन्नवेतिसंशयस्य भूतलसंशयत्वापत्तिः, निरुक्तोभयसम्बन्धेन घटविषयिताविशिष्टभूतलविषयितायास्तत्र सत्त्वात् । नच चरमविषयितायाः प्रकारितात्वेन

( दी० ) तेन व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यते ।

---

( गा० ) एवं चाभावस्य संशयपदार्थघटकतया तत्समभिव्याहृतषष्ठ्या अभावान्वयितदीयप्रतियोगितार्थकताया अनावश्यकता। नच विषयतानिरूपकत्वं विषयिताप्रतियोगित्वमेव, तथा च व्यतिरेके संशगे चान्वयी एक एवार्थः षष्ठ्या इति कथं तदर्थभेदभयेन व्यतिरेकपदव्यत्यास इति वाच्यम् ! अभावनिरूपितस्य विषयितानिरूपितस्य च प्रतियोगित्वस्यैकजातीयत्वविरहादित्याहुः।

---

( प्रभा ) निवेशात् नोक्तापत्तिरिति वाच्यम् ! तथासति वायौ रूपं नवेति कोटिविशेष्यकसंशयस्य रूपसंशयत्वानुपपत्तेरिति चेदत्रोच्यते विशेष्यीभूतविषयितायाम् स्वनिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मानवच्छिन्नत्व — स्वावच्छिन्नविषयितानिरूपितत्वोभयवत्त्वस्य विवक्षितत्वात् । स्वम् प्रथमविषयिता । घटवान्नवेति संशय तु भूतलविषयितायां घटादिविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणघटत्वाद्यनवच्छिन्नत्वस्य सत्त्वेऽपि संशये कोटिद्वयविषयितयोः परस्परमवच्छेद्यावच्छेदकभावात् घटादिविषयित्वावच्छिन्ना या घटाभावादिविषयिता तदनिरूपितत्वविरहादेव भूतलसंशयत्वापत्तिवारणसम्भवात् । तत्रैव कोटिद्वयनिरूपितविषयताद्वयनिरूपितयोर्भूतलनिष्ठविषयित्वयोः स्वपदेनैकमादाय अन्यत्र निरुक्तोभयसम्बन्धेन तद्वत्त्वस्य स्वावच्छिन्नविषयित्वानिरूपितत्वस्य च सत्त्वात् तद्दोषतादवस्थ्यमतोऽनवच्छिन्नान्तम् । एवम् स्वनिरूपकतावच्छेदकतापर्याप्त्यधिकरणघटत्वाद्यनवच्छिन्नत्वस्य भूतलविषयित्वे सत्त्वेन तद्दोषतादवस्थ्यवारणाय स्वावच्छिन्नविषयित्वानिरूपितत्वान्तम्। घटस्य संशय इत्यादौ घटविषयित्वे घटाभावविषयितारूपस्वस्य निरूपकतावच्छेदकम् घटत्वमपि इति न तदनवच्छिन्नत्वम् अतः पर्याप्तिनिवेशः ।

प्रतियोगित्वस्यैकजातीयत्वेति । अभावीयप्रतियोगितागतप्रतियोगितात्वस्य विषयित्वनिरूपितप्रतियोगितागतप्रतियोगितात्वस्य च मिथो वैलक्षण्यादिति भावः।

अहुरित्यनेनास्वरसस्तु तात्पर्यज्ञानस्य कारणत्ववादिनाम् मते सकृदुच्चरितन्यायस्यास्वीकार एव। तात्पर्यग्रन्थे व्युत्पत्तेरस्या निराकरणात्। तथाहि-अस्या व्युत्पत्तेः स्वीकारे तात्पर्यज्ञानस्य शाब्दबोधकारणत्वं न स्यात्। प्रकृतार्थमात्रोपस्थितौ स्वत एव तस्य शाब्दबोधे बाधकाभावेन भानसम्भवात् तात्पर्यज्ञानस्यान्यथासिद्धत्वात्, अप्रकृतार्थमात्रोपस्थितौ च तात्पर्यज्ञानस्यैवासम्भवात्।

व्यतिरेकज्ञानत्वेनेतिदीधितिः । अत्रेदमनुसन्धेयम्, संशयत्वनिश्चयत्वयोर्द्वैत्वघटकत्वे यद्व्यतिरेकज्ञानं यत्र प्रतिबन्धकं इत्येव कथन्नोक्तं किं संशयनिश्चयनिवेशनेति चेत् प्रतिबन्धकतायां यद्व्यतिरेकज्ञानत्वरूपसामान्यधर्मव्यापकतालाभायैव तदुपादानात् शब्दाधिक्येन अर्थाधिक्यमिति न्यायात्। अत एव यद्व्यतिरेकज्ञानत्वेन

( गा० ) अत्र संशयादिपदं प्रतिवध्यसमानधर्मितावच्छेदककयद्रूपावच्छिन्नाभावसंशयादिसामान्यपरमवश्यं वाच्यम्, अन्यथा समूहालम्बनरूपघटाभावादिनिश्चयात्मकव्याप्त्यादिव्यतिरेकसंशयादिप्रतिवध्यस्य घटादिज्ञानस्य व्याप्त्यादिनिश्चयाहेतुकत्वाद् व्यभिचारापत्तेः। एवं च व्यतिरेकनिश्चयत्वादिघटकव्यतिरेकज्ञानत्वपुरस्कारेण तज्ज्ञानसामान्यनिवेशादेवोपपत्तेस्तद्घटकदलान्तरोपादानमितरोपादानं च व्यर्थम्, यदि च संशयत्वादिव्यापकत्वेन प्रतिवन्धकतानिवेशे तज्ज्ञानत्वव्यापकताघटकप्रतियोगितावच्छेदकत्वाभावादन्य एव तदभावः संशयत्वादिव्यापकताघटक इत्यवैयर्थ्यम्, संशयत्वनिश्चयत्वे अव्याप्यवृत्तिजातिविशेषाविति मते तच्छरीरे ज्ञानत्वस्यानन्तर्भावादपि न वैयर्थ्यशङ्का, तथापि अनुचितं गौरवं संशयनिश्चययोः पृथङ् निवेशपक्षे दुर्वारमेवेति मनसिकृत्य फलितार्थमाह *तेनेति*।

---

(प्रभा) प्रतिबन्धकता लभ्यत इति दीधितिकृता वक्ष्यते। ननु यद्रूपावच्छिन्नप्रतियोगिताकाभावप्रकारकसंशयनिष्ठप्रतिबन्धकतानिरूपितप्रतिवध्यतावत्त्वे सति इत्यादिरीत्या निवेशे धूमो वह्निव्याप्त्यभाववान्नवा घटाभाववच्च भूतलम् इत्याकारकज्ञाननिष्ठघटाभाववद्भूतलविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिवध्यत्वस्य च घटवद्भूतलमितिज्ञाने सत्त्वेन तत्र च व्याप्तिनिश्चयजन्यत्वविरहात् व्यभिचारापत्तिरतस्तद्वारणाय प्रतिबन्धकतायां यद्रूपावच्छिन्नाभावसंशयत्वव्यापकत्वनिवेश आवश्यकः तथाचाप्रसिद्धिः स्यात्,

प्रतिबन्धकतायां तादृशसंशयत्वव्यापकत्वविरहात् तादृशसंशयत्वस्य नानाधर्मिकसंशयेषु सत्त्वेन तत्र धूमलिङ्गकानुमितिनिरूपितप्रतिबन्धकत्वविरहात्। अतः धर्मितावच्छेदकनिवेशोऽपि आवश्यक एवेति मनसिकृत्याह अत्र संशयादिपदमिति। अत्र = यद्व्यतिरेकसंशयनिश्चयावित्यत्रेत्यर्थः। घटकत्वं सप्तम्यर्थः। संशयादिपदम् = आदिना निश्चयपरिग्रहः। निर्धर्मितावच्छेदकज्ञानस्याप्रतिबन्धकतया यद्व्यतिरेकज्ञानत्वव्यापकत्वाप्रसिद्ध्या साधनाप्रसिद्धिः स्यात् तद्वारणाय प्रतिवध्यसमानधर्मितावच्छेदकेति संशयविशेषणमित्यपि मान्याः। प्रतिवध्यसमानधर्मितावच्छेदकेति। ननु प्रतिवध्येन समानं धर्मितावच्छेदकं यस्येतिव्युत्पत्त्या प्रतिवध्यधर्मितावच्छेदकधर्मितावच्छेदककस्येत्यर्थः फलति। किन्तु तथा विवक्षणे प्रतिवध्यपदेनात्र अनुमित्यादेरेव ग्रहणे दृष्टान्तासिद्धिः स्यात् व्याप्तिव्यतिरेकसंशयादिप्रतिवध्याया अनुमितेर्धर्मितावच्छेदकं यत् पर्वतत्वादिकं तच्च न तादृशसंशयधर्मितावच्छेदकं अपि तु धूमत्वादिकमेवेति चेत्, प्रतिवध्यश्चासौ समानधर्मितावच्छेदककश्चेत्येव विग्रहः, तथाच व्याप्तिसंशयो व्याप्तिव्यतिरेकनिश्चयो वा व्याप्तिनिश्चयस्य प्रतिवध्यः, तत्समानधर्मितावच्छेदककश्चेति। तथाच यत्सत्त्वे यदनुत्पत्तिप्रयुक्ता यदनुत्पत्तिः प्रतिवध्यपदेन तदुभयस्यैव ग्रहणात्। तथाच तादृशसंशयादिसत्त्वे व्याप्तिनिश्चयानुत्पत्तिप्रयुक्तानुमितेरनुत्पत्तिरिति व्याप्तिनिश्चय एव प्रतिवध्यपदेन ग्रहीतव्यः, तस्य धर्मितावच्छेदकं यद् धूमत्वादिकं तदेव तादृशसंशयधर्मितावच्छेदकमिति न दृष्टान्तासिद्धिः। नच शिरोमणिमते ग्राह्यसंशयस्याप्रतिबन्धकत्वात् न व्याप्तिनिश्चयो व्याप्तिव्यतिरेकसंशयप्रतिवध्य इति

(प्रभा) वाच्यम् ? व्याप्तिव्यतिरेकनिश्चयप्रतिवध्यत्वमादायैव तत्सङ्गतेः। अथवा ग्राह्याभावावगाहित्वेन यद्व्यतिरेकनिश्चयप्रतिवध्यपरम् प्रतिवध्यपदम्। तथाच यद्व्यतिरेकनिश्चयप्रतिवध्यतावच्छेदकविशेष्यतावच्छेदकनिष्ठविशेष्यतावच्छेदकताकतादृशसंशयादिसामान्यपरमिति ग्रन्थार्थः। यद्व्यतिरेकनिश्चयप्रतिवध्यीभूतं यन्निश्चयम् अन्यधर्मितावच्छेदककसमूहालम्बनात्मकमादाय न दृष्टान्तासिद्धिरिति। यत्तु धूमपक्षकस्थल एव प्रतिवध्यसमानधर्मितावच्छेदककत्वकथनं तन्न समीचीनम् ? दृष्टान्तासिद्धिवारणेऽपि प्रवृत्तौ स्वरूपासिद्धेर्दुर्वारत्वात्।

अत्र कश्चित् स्वप्रतिवध्यः स्वसमानधर्मितावच्छेदककः इत्यर्थः। स्वं साध्यघटकनिश्चय इत्याह तत्तुच्छम् ? साध्यीभूतनिश्चयमुपादाय तत्प्रतिवध्यसंशयप्रतिबन्धकताकत्वस्य स्वातिरिक्त उपपादनस्य ग्रन्थकारीयरीतिविरुद्धत्वात्। स्वसमानधर्मितावच्छेदकक इत्युक्त्यापि स्वपदेन साध्यघटकनिश्चयोपादानसम्भवेनोक्तार्थलाभाच्च। व्याप्तिनिश्चयप्रतिवध्यव्यभिचारसंशयात्मकसमूहालम्बनघटादिधर्मिकद्रव्यत्वनिश्चयधर्मितावच्छेदककस्य घटो वह्निव्याप्यो न वेत्याकारकसंशयस्यापि यावत्संशयान्तर्गततया तत्प्रतिवध्यत्वस्यानुमितौ विरहेण दृष्टान्तासिद्ध्यापत्तेश्च।

वस्तुतस्तु यत्किंचित्प्रतिवध्यसमानधर्मितावच्छेदकेत्येवात्र विवक्षितम्। अत्रानुगमप्रकारस्तु यद्रूपावच्छिन्ननिश्चयविशिष्टसंशयत्वव्यापिका सती तादृशनिश्चयविशिष्टनिश्चयत्वव्यापिका या प्रतिबन्धकता तन्निरूपितप्रतिवध्यतावद् यद् भवति तत् तद्रूपावच्छिन्ननिश्चयजन्यं भवति। तादृशनिश्चयवैशिष्ट्यं संशये निश्चये च स्वप्रतिवध्यतावच्छेदकधर्मितावच्छेदककत्व स्वप्रकारतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावप्रकारकत्वोभयसम्बन्धेन। प्रथमसम्बन्धानिवेशे प्रमेयत्वेन धूमावगाहिव्याप्त्यभावसंशयादेरपि यावत्संशयान्तर्गततया तत्रानुमितिप्रतिबन्धकत्वविरहेण दृष्टान्तासिद्ध्याद्यापत्तिः। द्वितीयसम्बन्धानिवेशे धूमधर्मिकद्रव्यत्वसंशयस्यापि यावत्संशयान्तर्गततया तत्रानुमितिप्रतिबन्धकत्वविरहेण दृष्टान्तासिद्ध्याद्यापत्तिः। अतः तत्सम्बन्धनिवेश इति भावः। सामान्यपदाप्रवेशे दोषमाह अन्यथेति। समूहालम्बनेति। धूमो वह्निव्याप्त्यभाववान्नवा घटाभाववच्च भूतलम् इत्यर्थः। एवंचेति। उक्तरीत्या निवेशे चेत्यर्थः। अस्य च उपपत्तेरित्यनेनान्वयः। व्यतिरेकनिश्चयत्वं च व्यतिरेकाभावाप्रकारकत्वे सति व्यतिरेकप्रकारकज्ञानत्वम्। तद्घटकेत्यर्थः। तज्ज्ञानसामान्यनिवेशादेवेति। व्यतिरेकज्ञानसामान्यनिवेशादेवेत्यर्थः। तथाच यद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रतियोगिताकाभावप्रकारकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिवध्यतावद् यद् भवति तत् तद्रूपावच्छिन्नविशेष्यतानिरूपिततद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवतीति फलितम्। एवकारव्यवच्छेद्यं स्पष्टयति तद्घटकेति। दलान्तरेति—निश्चयत्वघटकदलान्तरेत्यर्थः। व्यतिरेकाभावाप्रकारकत्वदलान्तरेति यावत्। इतरपदेति। संशयपदेत्यर्थः। अखण्डाभावघटकतया तयोस्सार्थक्यमित्याशङ्कते यद्विचेति। तज्ज्ञानत्वव्यापकताघटकेति। यद्व्यतिरेकज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकताघटकेत्यर्थः। तदभावः=यद्व्यतिरेकसंशयत्वव्यापकताघटकप्रतियोगितावच्छेदकत्वाभावः।

( गा० ) व्यतिरेकज्ञानत्वेनेति । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं तृतीयार्थःनतु स्वरूपसम्बन्धरूपम्, ग्राह्याभावज्ञानत्वस्य ग्राह्यज्ञानप्रतिबन्धकतावच्छेदकग्राह्याभावनिश्चयत्वघटकतया ग्राह्यनिश्चयस्य ग्राह्यज्ञानाहेतुतया व्यभिचारस्य दुर्वारत्वात्। पर्याप्तिनिवेशे च तदर्थपर्यालोचने लाघवासम्भवात्। यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकताकं यत् तत् तन्निश्चयत्वावच्छिन्नजन्यमिति सामान्यव्याप्तिः पर्यवसितेति न साध्यसाधनयोर्वैयधिकरण्यम्, नवा ईश्वरीयप्रामाण्यनिश्चयजन्यतामादाय सिद्धसाधनावसरः।

---

( प्रभा ) संशयत्वादिव्यापकतेति। यद्व्यतिरेकसंशयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपा। अवैयर्थ्यमिति। स्वसमानाधिकरणत्वे सति प्रकृतसाध्यव्याप्यतावच्छेदकत्वे सति स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वं हि व्यर्थविशेषणघटितत्वरूपं वैयर्थ्यम्। तच्चात्र न सम्भवति यद्व्यतिरेकसंशयत्वादिव्यापकतारूपाभावस्य यद्व्यतिरेकज्ञानत्वव्यापकतारूपाभावस्य च परस्परं भेदेन यद्व्यतिरेकज्ञानत्वव्यापकताघटितप्रतिबन्धकताकत्वत्वरूपधर्मान्तरस्य यद्व्यतिरेकसंशयत्वव्यापकताघटितप्रतिबन्धकताकत्वत्वरूपहेतुतावच्छेदकसामानाधिकरण्याभावात्। तेनेति दीधितिः। यद्व्यतिरेकसंशयनिश्चयावित्यर्थकरणेनेत्यर्थः।

तृतीयार्थ इति । तथाच यद्रूपावच्छिन्नधर्मिकयद्रूपावच्छिन्नप्रतियोगिताकाभावज्ञानत्वम् यद्रूपावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नः तद्रूपावच्छिन्नधर्मिकतद्रूपावच्छिन्ननिश्चयजन्य इति फलितम्। स्वरूपसम्बन्धरूपमिति । तथा सति यद्रूपावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् यद्धर्मिकयद्व्यतिरेकज्ञानत्वम् तद्रूपावच्छिन्नः तद्धर्मिकतन्निश्चयजन्य इति फलितं स्यात् तत्र व्यभिचारमाह ग्राह्याभावज्ञानत्वस्येति। घटाभावज्ञानत्वस्येत्यर्थः। ग्राह्यज्ञानेति। घटज्ञानेत्यर्थः। ग्राह्यनिश्चयस्येति। घटनिश्चयस्येत्यर्थः। ग्राह्यज्ञानाहेतुतया = घटज्ञानाहेतुतया। व्यभिचारस्य दुर्वारत्वादिति। तथाच स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे घटज्ञाने व्यभिचारः। तथाहि-घटाभावज्ञानत्वस्यापि घटाभावनिश्चयत्वघटकतया तस्यापि घटवत्त्वबुद्धिम्प्रति घटाभावनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तन्निरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन घटाभावज्ञानत्वनिष्ठावच्छेदकताकप्रतिबन्धकतापदेन घटाभावनिश्चयत्वावच्छिन्नप्रतिबन्धकताया अपि संग्रहेण तन्निरूपितप्रतिबध्यत्वस्य च घटज्ञाने सत्त्वेन तत्र घटनिश्चयजन्यत्वविरहात्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वप्रवेशे तु न व्यभिचारः, घटज्ञानम् प्रति घटव्यतिरेकज्ञानत्वेनाप्रतिबन्धकत्वात् घटव्यतिरेकज्ञानत्वस्य संशयसाधारण्येन प्रतिबन्धकत्वातिरिक्तवृत्तित्वात् । ननु यद्व्यतिरेकज्ञानत्वपर्याप्तावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यतावद् यद् भवति तत् तन्निश्चयजन्यमिति वादे न व्यभिचार इत्यत आह पर्याप्तिनिवेशे चेति। अत्रेदंबोध्यम्, अनाहार्याप्रामाण्यज्ञानानास्कन्दितयत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितयद्धर्मावच्छिन्नविशेष्य-

( प्रभा ) ताकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिवध्यतावद् यद् भवति तत् तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवतीति व्याप्तिशरीरं वाच्यम् । तथाच निरुक्तव्याप्तिव्यतिरेकज्ञानसामान्यप्रतिवध्येऽधिकरणं न धूमीयं वृत्तिर्नाधिकरणीयेत्यादिज्ञाने व्याप्तिनिश्चयाजन्ये व्यभिचारः । अभावबुद्धौ प्रतियोगितावच्छेदककोटौ संशयत्वासम्भवेनाधिकरणांशे धूमीयत्वादिसंशयासम्भवात् व्याप्तिव्यतिरेकज्ञानस्याधिकरणाद्यंशे धूमीयत्वादिनिश्चयत्वनियमादिति चेन्न । निरुक्तव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतायां यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वमात्रावच्छिन्नप्रकारत्वनिष्ठस्वरूपसम्बन्धरूपावच्छेदकत्वनिरूपितत्वस्यापि निवेशनीयत्वात् । तथाच निरुक्तनिश्चये व्याप्तिव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकताकत्वसत्त्वेऽपि व्याप्तिव्यतिरेकप्रकारत्वावच्छिन्नप्रतिबन्धकताकत्वविरहेण हेतोरसत्त्वान्न व्यभिचारः । एकत्र द्वयमितिरीत्याऽधिकरणे धूमीयत्वतद्व्याप्यभावत्वोभयावच्छिन्नप्रकारतामादाय तद्दोषतादवस्थ्यवारणाय प्रकारतायां तन्मात्रावच्छिन्नत्वानुसरणमिति ध्येयम् ।

तदर्थपर्यालोचने लाघवासम्भावादिति । अथ पर्याप्तिनिवेशेऽनिश्चिताप्रामाण्यककिञ्चिद्धर्मावच्छिन्नविशेष्यताकयद्व्यतिरेकज्ञानत्वपर्याप्तावच्छेदकताकप्रतिबन्धकत्वं वक्तव्यम् । तथा च प्रामाण्यघटकतत्तत्पदार्थत्वेन किंवा व्याप्तिघटकतत्तत्पदार्थत्वेन पदार्थान्तरावगाहिभ्रमस्यापि प्रतिबन्धकतया तदनुरोधेन भ्रमप्रमासाधारणनिरूप्यनिरूपकभावापन्नविषयिताकज्ञानत्वेनैव प्रतिबन्धकत्वावश्यकत्वात् प्रामाण्यादिव्यतिरेकज्ञानत्वपर्याप्तावच्छेदकताकप्रतिबन्धकत्वाप्रसिद्ध्याऽसम्भव एव स्यात् कथं लाघवासम्भव इत्युक्तम् । नच यत्र विषयविशेषेऽनुमितेरितरसामग्रीसमवधानकाले व्याप्तिघटकपदार्थांशे भ्रमात्मकव्याप्त्यादिव्यतिरेकज्ञानं कस्यापि न जातं तत्र विशिष्टज्ञानत्वेनैव प्रतिबन्धकता कल्प्यते लाघवादिति तत्रैव पर्याप्तिनिवेशसम्भव इति वाच्यम् । तादृशविषयस्य प्रामाणिकत्वे पर्याप्तिघटितनियमस्य सम्भवेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितनियमस्वीकारस्यानौचित्यात् इति चेन्न, प्रमात्वव्याप्त्युभयत्रैव परस्परनिरूप्यनिरूपकभावापन्नविषयित्वमेव यद्धर्मपदेन विवक्षणीयम् ।। तथाच यादृशसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नयादृशरूपविशिष्टविषयितानिरूपितयद्रूपावच्छिन्नविशेष्यतानिरूपिताभावत्वावच्छिन्न - प्रकारित्व—अनिश्चिताप्रामाण्यकत्वादिकं ज्ञानत्वञ्च एतत्समुदायपर्याप्तावच्छेदकताकप्रतिबन्धकताकं यद् भवति तत् तादृशसम्बन्धावच्छिन्नतद्रूपावच्छिन्नविशेष्यतानिरूपिततादृशरूपविशिष्टविषयिताशालिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवति । साक्षादवच्छेदकताया व्यासज्यवृत्तित्वानुपगमे ज्ञानत्वान्योक्तसमुदायरूपपर्याप्तावच्छेदकताकज्ञानत्वनिष्ठावच्छेदकताकप्रतिबन्धकताकं यद् भवतीत्यादिरीत्या व्याप्तिनिर्वचनेऽसम्भवायोगादेव लाघवासम्भवस्यैवोक्तत्वात् । नच तादृशार्थे कृते ग्राह्यविशिष्टबुद्धौ व्यभिचारवारणाय पर्याप्तिनिवेशनमफलं तत्प्रतिबन्धकतावच्छेदककोटौ संशयसाधारणाप्रामाण्यज्ञानत्वाच्छिन्नाभावस्यैव निवेशाद् व्याप्तिव्यतिरेकज्ञानप्रतिबन्धकतावच्छेदककोटौ चाप्रामाण्यनि-

(प्रमा' इचयत्वावच्छिन्नाभावस्येति व्यभिचाराभावादिति वाच्यम् ? अप्रामाण्यज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेनैवोत्तेजकतया तदनुमतत्वात् । तथाचाप्रामाण्यनिश्चयाभावानामपि ग्राह्य-विशिष्टबुद्धौ प्रतिबन्धकता । न च पर्याप्तिरितरानवच्छिन्नत्वं तथाच तादृशविषयत्व-निष्ठावच्छेदकताभिन्नं ज्ञानत्वनिष्ठावच्छेदकताभिन्नं यदप्रामाण्यनिश्चयाभावनिष्ठा-वच्छेदकत्वं तन्निरूपितत्वात् तादृशप्रतिबन्धकत्वाप्रसिद्धिरिति वाच्यम् ? तत्तदवच्छेद-कताभिन्नत्वकूटेष्वभावनिष्ठावच्छेदकताभिन्नत्वस्य निवेशनीयत्वात् । नचैवं व्यतिरेक-निश्चयत्वावच्छिन्नप्रतिबन्धकताया अव्यावर्त्तनाद् घटादिनिश्चये व्यभिचार इति वाच्यम् ? अभावनिष्ठावच्छेदकतायां निश्चयत्वघटकाभावनिष्ठावच्छेदकताभिन्नत्वस्य निवेशनीयत्वात् । नचैवमपि व्यापकत्वकल्पे व्यतिरेकप्रकारतानिष्ठस्वरूपसम्बन्धरूपा-च्छेदकतानिरूपकत्वस्यापि निवेशनीयतयाऽवच्छेदकत्वयोर्निवेशमपेक्ष्य निरुक्तपर्याप्तिघटितक-ल्पे लाघवसम्भवात् कथं लाघवासम्भवादित्युक्तेःसङ्गतिरिति वाच्यम् ? तावताऽपि पर्याप्तिपर्यालोचने व्यापकत्वकल्पापेक्षया लाघवानवकाशात् । एवं पर्याप्ति कल्पेऽनिश्चि-ताप्रामाण्यकत्वस्य तत्तद्व्यक्तित्वावच्छिन्नाभावकूटत्वेनैव निवेशनीयतया तदपेक्ष्य विशेष्यता-सामानाधिकरण्योभयसम्बन्धेन ज्ञानत्वावच्छिन्नाभावघटितव्यापकत्वकल्पेऽतीव लाघवसम्भवादिति विभावनीयम् ।

नचानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशकल्पेऽपि प्रतिबन्धकतायां तादृशव्यतिरे-कज्ञानत्वव्यापकत्वनिवेशस्यावश्यकतया व्यापकताघटकाभावप्रतियोगितावच्छेदककोटौ इतरवारकपर्याप्तिनिवेशस्य ध्रौव्यात् व्यापकत्वकल्पेऽपि पर्याप्तिनिवेशकल्पापेक्षया न लाघवं किमपीति वाच्यम् ? यतः यद्धर्मावच्छिन्नव्यतिरेकज्ञानत्वे प्रतिबन्धकतावच्छेदकता-पर्याप्तिनिवेशस्य भ्रमसाधारणज्ञानप्रतिबन्धकत्वानुरोधेन अशक्यतया वक्ष्यमाणरीत्यैव पर्याप्तिःशक्यते निवेशयितुम् तथाच तत्र न्यूनेतरवारकपर्याप्तिनिवेशे गौरवम्, व्यापकत्व-कल्पे च तादृशज्ञानत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वत्वमित्याकारकबोधिशेषवि-षयत्वरूपसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकाभाववत्त्वमेव निवेश्यम् इति लाघवस्य स्पष्टत्वात् ।

यद्धर्मावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितयद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्व-व्यापकतादृशविषयत्वावच्छिन्नजनकतावच्छेदकत्वोपलक्षितविषयताशालिज्ञानत्वेऽप्रामाण्य-निश्चयाभावविशिष्टे पर्याप्तावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वमेव हेतुः तथाच पर्याप्तिनिवेशे गौरवं स्फुटतरमिति केचित् ।

अपरे तु विशिष्टबुद्धौ व्यभिचारवारणाय अप्रामाण्यनिश्चयाभावविशिष्टप्रतियोगित्व-सम्बन्धावच्छिन्नयद्रूपावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितयद्रूपाव-च्छिन्नविशेष्यताशालिज्ञानत्वान्यावृत्तिधर्मावच्छिन्नपर्याप्तिकावच्छेदकताकप्रतिबन्धकता-निरूपितप्रतिबध्यतावत्त्वमेव हेतुतया विवक्षणीयम् । नच व्याप्त्यादिव्यतिरेकज्ञानप्रतिबन्ध-कतावच्छेदकतापर्याप्त्यवच्छेदकतादृशविषयत्वाप्रामाण्यनिश्चयाभावादिगतसमुदायत्वस्य तादृ-शज्ञानत्वान्याऽप्रामाण्यनिश्चयाभाव-तादृशविषयत्वादिवृत्तितया इदमसङ्गतमिति वाच्यम् ?

( प्रभा ) तादृशज्ञानत्वान्यपदेन तादृशज्ञानत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् । अतएव तदर्थपर्यालोचने इत्युक्तमित्याहुः ।

अथ प्रतिबन्धकतानतिरिक्तवृत्तित्वम् प्रतिबन्धकत्वाभाववदवृत्तित्वम् . तथाच विशिष्टस्य विशेष्यीभूतज्ञानत्वानतिरिक्ततया विशेष्यीभूतज्ञानत्वस्यातिप्रसक्तत्वे विशिष्टे तत्रानतिप्रसक्तत्वम् दुर्घटमिति साधनाप्रसिद्धिरिति चेन्न ? अन्यत्र स्थल इवात्रापि स्वव्यापकतत्कस्वरूपस्यैव विवक्षितत्वात् । नचाप्रामाण्यनिश्चयाभावज्ञानत्वोभयावच्छिन्नप्रतिबन्धकताकत्वमेव हेतुरस्तु इति वाच्यम् , अवच्छेदकताया व्यासज्ज्यवृत्तित्वानुपगमे उभयावच्छिन्नप्रतिबन्धकत्वस्यैवाप्रसिद्धत्वात् नोक्तमिति ध्येयम् ।

केचित्तु नचेत्याद्याशङ्का माध्यमिकस्यैव, तेन भ्रमानङ्गीकारात् पर्याप्तिनिवेशस्य यथाश्रुतस्यैव साधुतेति वदन्ति । तन्न सम्यक् ? माध्यमिकेन नैयायिकमतमवलम्ब्यैव नचेत्याद्याशङ्का कृतेति भट्टाचार्य्येणोक्तं तथाच तन्मतमवलम्ब्य नचेत्याद्याशङ्काकृन्मताभिप्रायेण परिष्कारस्यैव युक्तत्वादिति ध्येयम् ।

सामान्यव्याप्तिः पर्यवसितेति । ननु रक्तदण्डव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकताकदण्डो रक्तो नवा इतिसन्देहे रक्तदण्डनिश्चयजन्यत्वविरहेण व्यभिचार इति चेन्न ? यन्निश्चयत्वव्यापिका सती यद्व्यतिरेकज्ञानत्वव्यापिका या प्रतिबन्धकता तन्निरूपकं यद् भवति तत् तन्निश्चयजन्यं भवतीत्यस्य विवक्षितत्वात् । रक्तदण्डव्यतिरेकज्ञानत्वव्यापिकाया दण्डो रक्तो नवेति संशयनिरूपितप्रतिबन्धकताया दण्डविशेष्यकरक्तत्वप्रकारकनिश्चयत्वावच्छिन्नायाः रक्तदण्डनिश्चयत्वव्याकपत्वात् । अथवा दण्डांशे रक्तत्वनिश्चयात्मकरक्तदण्डव्यतिरेकज्ञानसामान्यप्रतिबध्यस्यापि दण्डो रक्तो नवेतिसंशयस्य रक्तदण्डनिश्चयाजन्यत्वेन व्यभिचारवारणाय व्यतिरेकविषयतायां स्वप्रतिबन्धकतावच्छेदकत्वमपि निवेशनीयम् । स्वम् पक्षत्वेनाभिमतम् ।

एतेन व्याप्तिव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकताके व्याप्तिनिश्चयाजन्ये 'अभावो हेत्वसमानाधिकरण, इति ज्ञाने व्यभिचारवारणाय प्रतिबन्धकतायां व्याप्तिव्यतिरेकज्ञानत्वसमनियतत्वविवक्षणं गौरवग्रस्तमिति सूचितम् । प्रतिबन्धकताया भ्रमसाधारणत्वेन तादृशनियतत्वासिद्धेश्च । नचाभावांशे हेतुसामानाधिकरण्यादिसंशयात्मकव्याप्त्यादिव्यतिरेकज्ञानस्याप्रतिबन्धकत्वात् प्रतिबन्धकतायां व्याप्त्यादिव्यतिरेकज्ञानत्वविरहादेव नोक्तव्यभिचार इति वाच्यम् , प्रतियोगिताविशेषिताभावज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वनियमेन तादृशज्ञानोत्पादासम्भवात्, विशेषणतावच्छेदकप्रकारकनिश्चयस्य विशिष्टवैशिष्ट्यबोधकारणत्वात् ।

अथ स्वव्यापकत्व स्वभिन्नत्वोभयसम्बन्धेन यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकताविशिष्टान्यत्वं यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतायां निवेशनीयम्, तथा चाभावो हेत्वसमानाधिकरण इति ज्ञानप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः ( व्याप्तिव्यतिरेकज्ञानत्वव्यापिकायाः ) तादृशप्रतिबन्धकताविशिष्टत्वाद् व्युदासः । व्याप्त्यादिव्यतिरेकग्रहत्वव्यापकप्रतिबन्धकतामात्रस्यैव स्वव्यापकत्वसम्बन्धेन स्वात्मकप्रतिबन्धकताविशिष्टत्वात् तदन्यतादृश-

(प्रभा) प्रतिबन्धकत्वाप्रसिद्धिवारणाय स्वभिन्नत्वनिवेशः। स्वव्यापकत्वनिवेशनं ज्ञानभेदेन प्रतिबन्धकत्वभिन्नत्वमतेऽसिद्धिवारणार्थम्। व्याप्त्यादिव्यतिरेकवद्धेत्वादिमान् देश इत्यादिज्ञानीयतादृशहेत्वाद्यभावज्ञानप्रतिबन्धकताविशिष्टान्यत्वस्य व्याप्त्यादिव्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतायां विरहात् (दृष्टान्तासिद्धि) असिद्धिवारणार्थं भेदप्रतियोगितावच्छेदकप्रतिबन्धकतायां यद्व्यतिरेकज्ञानत्वव्यापकत्वं निवेशितम्। घटाद्यभावज्ञानप्रतिबन्धकतायास्तादृशप्रतिबन्धकताविशिष्टान्यत्वेन घटविशिष्टबुद्धौ व्यभिचारवारणाय चरमप्रतिबन्धकतायां यद्व्यतिरेकज्ञानत्वव्यापकत्वं निवेशितम्। यद्यपि विशेष्यताप्रकारतानां विशेष्यविशेषणभाववैपरीत्येन सर्वत्र प्रतिबन्धकता नानैव न कुत्राप्येका, तथाच व्याप्त्यादिव्यतिरेकग्रहत्वव्यापकप्रतिबन्धकतायाः तादृशप्रतिबन्धकताविशिष्टत्वेन तद्भिन्नत्वाप्रसिद्ध्या स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्च, तथापि स्वव्यापकत्व-स्वानधिकरणवृत्तित्वोभयसम्बन्धेन तादृशप्रतिबन्धकतावैशिष्ट्यनिवेशान्न दोषः। एतादृशरीत्या परिष्करणे गौरवादिति ध्येयम्।

केचित्तु यदभावावगाहिताप्रयुक्तयद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकताकं यत् तत् तन्निश्चयजन्यमित्यर्थेन पूर्वोक्तदोषवारणं सुकरम्। नचैवं यद्व्यतिरेकसंशयवृत्तित्वनिवेशेनैव बाधादिप्रतिबन्धकतामादाय घटादिविशिष्टबुद्धौ व्यभिचारवारणसम्भवात् व्यतिरेकग्रहत्वव्यापकत्वनिवेशनं किमर्थमिति वाच्यम्? पर्वतत्वादिसामानाधिकरण्येन घटाभावादिनिश्चयात्मकतत्सामानाधिकरण्येन घटाभावकोटिकतदवच्छेदेन घटकोटिकसंशयस्य यदभावावगाहिताप्रयुक्तप्रतिबन्धकताविशिष्टत्वात् पर्वतत्वावच्छेदेन घटादिविशिष्टबुद्धौ व्यभिचारवारणाय तादृशव्यापकत्वनिवेशस्यावश्यकत्वादिति वदन्ति।

यत्तु अप्रामाण्यनिश्चयास्कन्दितयद्व्यतिरेकग्रहस्य अनुमित्यप्रतिबन्धकत्वे तादृशव्यापकत्वभंगभीत्या व्याप्तिशरीरेऽप्रामाण्यनिश्चयानास्कन्दितयद्व्यतिरेकग्रहत्वव्यापकत्वनिवेशस्यावश्यकत्वेन अभावो हेत्वसमानाधिकरणः इतिविशिष्टबुद्धौ व्यभिचारवारणसम्भवः, हेतुसामानाधिकरण्यांशेऽप्रामाण्यसंशयास्कन्दितव्याप्त्यादिव्यतिरेकग्रहस्य उक्तविशिष्टबुद्ध्यप्रतिबन्धकत्वेन व्यापकत्वाभावात्, ग्राह्याभावनिश्चयस्याप्रामाण्यज्ञानाभावविशिष्टत्वेनैव प्रतिबन्धकत्वादिति यथाश्रुतमेव सम्यक्। तन्न? संशयसाधारणप्रतिबन्धकत्वस्थलेऽप्रामाण्यनिश्चयाभावस्यैव प्रतिबन्धकत्वावच्छेदककोटौ निवेशस्य आवश्यकत्वेऽपि प्रकृतव्याप्तिशरीरेऽप्रामाण्यनिश्चयाभावमपेक्ष्य लाघवेनाप्रामाण्यज्ञानाभावस्यैव निवेशनीयत्वात्। अभावो हेत्वसमानाधिकरण इतिबुद्धौ व्यभिचारवारणाय गुरुभूतनिश्चयत्वावच्छिन्नाभावस्य निवेशसम्भवेऽपि ग्राह्याभावनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय ग्राह्यविशिष्टबुद्धौ व्यभिचारवारकानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशवैफल्यापत्तेश्च, अप्रामाण्यज्ञानाभावस्यैव ग्राह्याभावनिश्चयप्रतिबन्धकतावच्छेदकघटकतया (अप्रामाण्यनिश्चयाभावस्य ग्राह्याभावनिश्चयप्रतिबन्धकतावच्छेदकाघटकतया) स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशस्यैव सम्यक्त्वादिति विभावनीयम्। इदमत्रावगन्तव्यम्, अप्रामाण्यज्ञानाभावविशिष्टयद्व्यतिरेकग्रहत्वस्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशापेक्षया अप्रामाण्यनिश्चयाभावविशिष्टयद्-

(गा० ) नच माध्यमिकपूर्वकपक्षे अथेत्याद्याशङ्का न नैयायिकस्य, तेन प्रामाण्यनिश्चयोपयोगितास्वीकारात्, किन्तु तटस्थस्य, तदुपरि च नचेत्याद्याशङ्का पुनर्माध्यमिकस्यैव, तेनेश्वरानभ्युपगमेन न सिद्धसाधनावसरः, साध्यस्य मतद्वयसिद्धतायामेव तद्दोषादिति वाच्यम् ? एवमपि तटस्थेन अर्थान्तरोद्भावनस्य दुर्वारत्वात्। नच स्वतः परतश्च प्रामाण्यस्य ग्रहणं निराकुर्वतो माध्यमिकस्य कथं प्रवृत्तौ प्रामाण्यनिश्चयहेतुकत्वसाधनं सङ्गच्छते इति वाच्यम्? प्रामाण्यनिश्चायनेन शास्त्रस्य निश्श्रेयसोपयोगितावादिनं नैयायिकं पराभवितुं तन्मतमालम्ब्य माध्यमिकस्यापि प्रवृत्तौ प्रामाण्यनिश्चयोपयोगिताव्यवस्थापनसम्भवात्।

---

(प्रभा) व्यतिरेकग्रहत्वस्य स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेश एवोचितः, निश्चयत्वस्य स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वापेक्षया लाघवशरीरत्वात्। तावतैव बाधप्रतिबन्धकतामादाय घटादिविशिष्टबुद्धौ-एवं विशेषणान्तरादानेऽपि अभावो हेत्वसमानाधिकरण इतिज्ञाने च व्यभिचारानवकाशः। तत्तत्प्रतिबन्धकतायाः अप्रामाण्यनिश्चयाभावविशिष्टव्याप्त्यादिव्यतिरेकग्रहत्वानवच्छिन्नत्वात्, किन्तु अप्रामाण्यग्रहाभावघटिततादृशग्रहत्वावच्छिन्नत्वादिति तत् कथमुपेक्षितम्? अत्राहुः, निश्चयत्वस्य मतभेदेन भिन्नतायाः प्रागेवोक्ततया एकमतसिद्धनिश्चयत्वावच्छिन्नाभावनिवेशे मतान्तरासंग्रहः। एवमप्रामाण्यज्ञानस्याननुगमेन तत्तद्व्यक्तित्वावच्छिन्नाभावा एव निवेश्याः गत्यन्तराभावात्, तथाचाप्रामाण्यनिश्चयसामान्याभावस्य प्रतिबन्धकतानवच्छेदकतया दृष्टान्तासिद्ध्यादिप्रसङ्ग इति।

अथ धूमत्वावच्छिन्नविशेष्यकव्याप्त्यादिव्यतिरेकज्ञानत्वावच्छिन्नप्रकारताकज्ञानस्य जातित्वादिना धूमत्वावगाहिजातिमान् व्याप्त्यभाववान् इत्याद्यप्रतिबन्धकज्ञानसाधारणतया सर्वत्रैव प्रतिबन्धकतायां व्यापकत्वमसम्भवीति चेन्न? स्वावच्छेदकीभूतविषयताशालियद्व्यतिरेकग्रहत्वव्यापकताया विवक्षितत्वात्। स्वपदम् प्रतिबन्धकतापरम्। संशयेऽपि प्रतिबन्धकतावच्छेदकविषयतासत्त्वात् न बाधप्रतिबन्धकतामादाय विशिष्टबुद्धौ व्यभिचार इति क्रोडपत्रसंग्रहकाराः।

यथाश्रुतार्थे गृहीते तादृशप्रतिबन्धकत्वस्य यद्व्यतिरेकज्ञाने तन्निश्चयजन्यत्वस्य च प्रवृत्तौ सत्त्वेन साध्यसाधनयोर्वैयधिकरण्यं स्यादतो न तद्ग्राह्यमिति सूचयति साध्यसाधनयोर्वैयधिकरण्यमित्यादिना। यद्व्यतिरेकनिश्चयनिष्ठजनकतानिरूपितजन्यत्वनिवेशे तादृशनिश्चयनिष्ठोपादानप्रत्यक्षत्वावच्छिन्नजनकतामादाय सिद्धसाधनापत्तिरतस्तद्वारणाय निश्चयत्वावच्छिन्नजनकतानिवेशः। तथाच कार्यमात्रम् प्रति ईश्वरज्ञानस्य न निश्चयत्वेन हेतुता किन्तूपादानप्रत्यक्षत्वेनेति न सिद्धसाधनावसर इत्याह नवा ईश्वरीयेत्यादिना।

सिद्धसाधनावसर एव नास्ति इत्याशङ्कते नचेति। प्रमाणादीनां तत्त्वम् प्रतिपादयदित्यादिना माध्यमिकपूर्वपक्षनिरासार्थमेव अथेत्यादिनाऽऽशङ्कने जाते पुनर्माध्यमिकस्यैव 'नच यस्य संशयव्यतिरेकनिश्चयौ' इत्यादिना प्रत्यवस्थानसम्भवात् तेन

( दी० ) ग्राह्यसंशयस्य[1] तु न प्रतिबन्धकतेतिभावः ।

---

( गा० ) ननु अव्यभिचारव्यतिरेकरूपव्यभिचारस्य संशयो निश्चयश्चाव्यभिचारग्रहप्रतिबन्धकः, व्यभिचारसंशयप्रतिबन्धकताया व्याप्तिग्रहोपाये मणिकारैरेवोक्तत्वात् । तथाच व्यभिचारज्ञानसामान्यप्रतिबध्येऽव्यभिचारनिश्चयाजन्येऽव्यभिचारनिश्चये व्यभिचार इत्यत आह *ग्राह्यसंशयस्येति* । अव्यभिचारव्यतिरेकसंशयरूपस्येत्यादिः । *न प्रतिबन्धकता* । व्याप्तिग्रह इति शेषः । तथाच व्यभिचारसंशयस्य व्याप्तिग्रहप्रतिबन्धकत्वाभिधानं मतविशेषावलम्बनेनैवोक्तमिति न विरोध इति भावः ।

एतेन घटादिसंशयस्य घटादिग्रहाप्रतिबन्धकतया संशयपदेन घटादिनिश्चयाहेतुके घटादिज्ञाने व्यभिचारं वारयतां मिश्राणाम् प्रतिबन्धकसंशयादौ यदभावत्वप्रकारकत्वनैयत्यविवक्षयाऽव्यभिचारनिश्चयाजन्यतन्निश्चये अव्यभिचाराभावत्वाप्रकारकव्यभिचारत्वप्रकारकसंशयसाधारणप्रतिबन्धकताके व्यभिचारवारणमयुक्तमिति ध्वनितम् ।

---

( प्रभा ) चेश्वरानङ्गीकारात् कथं सिद्धसाधनावसर इत्याशङ्काभिप्रायः । तन्मतमिति । नैयायिकमतमित्यर्थः ।

यद्रूपावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपितयद्धर्मावच्छिन्नविशेष्यताकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावान् यः स तद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावान् भवतीत्येवं दीधितिकारीयमते नियमाङ्गीकारे व्यभिचारापत्तिः, अव्यभिचारव्यतिरेकसंशय-अव्यभिचारव्यतिरेकनिश्चयनिष्ठतादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्य व्याप्तिबुद्धौ सत्त्वेन तत्र चाव्यभिचारनिश्चयजन्यत्वविरहात् इत्याशयेन शङ्कते नन्विति ।

व्यभिचारज्ञानसामान्यप्रतिबध्येति । एतावता हेतुसत्त्वं सूचितम् । अव्यभिचारनिश्चयाजन्यइति । एतेन स्वस्मिन् स्वजन्यत्वविरहात् साध्याभावः सूचितः । एतेनेति । ग्राह्यसंशयस्याप्रतिबन्धकत्वेनेत्यर्थः । अत्रायमाशयः, मूलस्य यथाश्रुतमेवार्थं वर्णयता पक्षधरमिश्रेण यत्संशयप्रतिबध्यत्वे सति यद्व्यतिरेकनिश्चयप्रतिबध्यत्वस्य हेतुत्वमादृतम्, तत्र सत्यन्तदलानुपादाने घटव्यतिरेकनिश्चयप्रतिबध्ये घटविशिष्टबोधे घटनिश्चयजन्यत्वविरहाद् व्यभिचारस्स्यात् अतस्तदुपात्तमिति । अथ च मणिमन्त्रादिन्यायेन व्यभिचारसंशयस्य व्याप्तिबुद्धौ प्रतिबन्धकतामादृत्य यत्संशयपदेन अव्यभिचारसंशयमादाय तत्प्रतिबन्धकताकत्वस्य, व्यभिचारात्मकाव्याभिचारव्यतिरेकनिश्चयप्रतिबन्धकताकत्वस्य च व्याप्तिबुद्धौ सत्त्वेन तत्रच

---

१. तथासति अनुमितिमात्रोच्छेदापत्तेः । प्राचाम्मते साध्यसंशयस्यैव पक्षतात्वात् । नव्यमतेऽपि पर्वतो वह्निमान् नवेतिसंशयोत्तरम् पर्वतो वह्निमानित्यनुमितेः स्वीकारात्तदनुपपत्तिश्चेत्यधिकमन्यतोऽवसीयताम् ।

( गा० ) घटादिसंशयस्य तन्निश्चय इव व्यभिचारसंशयस्यापि अव्यभिचारनिश्चये ग्राह्यसंशयत्वाविशेषेण अप्रतिबन्धकत्वौचित्यात् । यन्मतमवलम्ब्य मणिकृतो व्यभिचारसंशयप्रतिबन्धकत्वाभिधानम्, घटादिसंशये तन्निश्चयप्रतिबन्धकताया अपि तन्मतसिद्धत्वात्। अत्र *मिश्रानुयायिन* :—व्यभिचारज्ञानस्य व्याप्तिनिश्चये मणिमन्त्रादिवत् पृथगेव प्रतिबन्धकता, नतु ग्राह्याभावज्ञानतया,

---

(प्रभा) अव्यभिचारनिश्चयजन्यत्वविरहात् व्यभिचारमाशंक्य यदभावत्वप्रकारतानैयत्यम् प्रतिबन्धकसंशयादौ निवेशितम् । तदप्ययुक्तमेव, घटसंशयादिवद् व्यभिचारसंशयस्यापि ग्राह्यसंशयरूपतया व्याप्तिबुद्धावप्रतिबन्धकत्वेनैव व्यभिचारवारणसम्भवादिति दीधितेराशयं स्पष्टय तिघटादिसंशयस्येत्यादिना । अव्यभिचारज्ञानम्प्रति अव्यभिचारवान्न वा इत्याकारकाव्यभिचारसंशयस्य अव्यभिचाराभाववान् इत्याकारकाव्यभिचारव्यतिरेकनिश्चयस्य च यथा प्रतिबन्धकत्वम् तद्वत् व्यभिचारवान्नवा, व्यभिचारवान् इति संशयनिश्चययोः प्रतिबन्धकत्वमनुभवसिद्धम् । एवञ्च लाघवात् व्यभिचारत्वावच्छिन्नप्रकारताशालिज्ञानत्वेनैव प्रतिबन्धकतया व्यभिचाराभावाभावप्रकारकसंशयनिष्ठप्रतिबन्धकतायाः व्यभिचाराभावत्वप्रकारकत्वनैयत्याभावात् यत्संशयपदेन अव्यभिचारसंशयस्य यद्व्यतिरेकनिश्चयपदेन अव्यभिचारव्यतिरेकनिश्चयस्य च धर्तुमशक्यतया न व्यभिचार इति भावः ।

यत्संशयेत्यादिव्याप्तौ घटवत्वबुद्धौ व्यभिचारवारणाय संशयपदस्य सार्थकत्वं कुर्वता मिश्रेण घटादिग्राह्यसंशयस्य प्रतिबन्धकता न स्वीक्रियते व्यभिचारसंशयस्य च प्रतिबन्धकता स्वीक्रियते, तन्न युज्यते ? घटादिसंशयवत् व्यभिचारसंशयस्यापि ग्राह्यसंशयरूपतया एकत्र ग्राह्यसंशये प्रतिबन्धकत्वमपरत्र च ग्राह्यसंशये प्रतिबन्धकत्वाभाव इति अर्द्धजरतीयन्यायोऽनुचितः इत्याक्षेपसमाधानाय व्यभिचारसंशयस्य मणिमन्त्रादिन्यायेनानुभवसिद्धम् प्रतिबन्धकत्वम् इति मिश्राणां तात्पर्यं दर्शयितुम् अत्र[1] मिश्रानुयायिन इति । तथाचायमाशयः, प्रतिबन्धकत्वं हि लोके द्विविधम् ग्राह्याभावत्वावच्छिन्नविषयताशालिनिश्चयत्वेनैकम् यथा ह्रदधर्मिकवह्निमत्त्वबुद्धौ वह्न्याभावत्वावच्छिन्नविषयताशालिनिश्चयत्वेन । तत्तद्वस्तुगतासाधारणधर्मेण प्रतिबन्धकत्वमपरम् । यथा दाहम्प्रति मणि-

---

१. ननु व्यभिचारज्ञानस्य ग्राह्याभावविषयकनिश्चयत्वेन प्रतिबन्धकत्वस्वीकर्तॄणां दीधितिकाराणाम् मते अत्यन्ताभावघटितव्याप्तिज्ञानकाले अन्योन्याभावगर्भव्याप्तिज्ञानोदयेनानुमित्यापत्तिरिति चेन्न ? वन्हौ साध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहकाले तस्य साध्यवदन्यवृत्तित्वरूपव्यभिचारानुमापकतया तादृशव्यभिचारानुमितेरेव तदानीम् अन्योन्याभावगर्भव्याप्तिग्रहविरोधित्वसम्भवात् । नचैवं तादृशानुमानात् प्राक् तादृशव्याप्तिबुद्ध्युदयापत्तिरिति वाच्यम् ? साध्यवदन्यावृत्तित्वाद्यनुमितिसामग्र्या अपि प्रतिबन्धकतास्वीकारेणोक्तापत्त्यसम्भवादिति ।

(गा०) कथमन्यथाऽत्यन्ताभावगर्भव्यभिचारग्रहस्य अन्योन्याभावगर्भव्याप्तिधीविरोधिता, ग्राह्याभावावगाहितया प्रतिबन्धकत्वमेव च ग्राह्यसंशयव्यावृत्तमिति व्यभिचारसंशयप्रतिबन्धकत्वं युक्तमेव, स्वप्रतिबन्धकसंशयव्यतिरेकनिश्चययोर्यद्भावत्वप्रकारतानियतत्वविशेषणं वैकल्पिकम्, अव्यभिचाराभावत्वप्रकारकत्वस्य व्याप्तिनिश्चयप्रतिबन्धके व्यभिचारनिश्चये संशये चानियमात्, एकत्र तन्निवेशेनैव अव्यभिचारसंशयतद्व्यतिरेकनिश्चयप्रतिवध्ये तन्निश्चयाजन्ये व्याप्तिनिश्चये व्यभिचारवारणसम्भवात्।

---

(प्रभा मन्त्रादेः मणित्वेन विजातीयमन्त्रत्वेन च। एवं च साध्यभाववद्वृत्तिर्हेतुरिति व्यभिचारज्ञानस्यापि मणिमन्त्रादिवत् साध्याभाववद्वृत्तित्वविषयकनिश्चयत्वेनैव व्याप्तिबुद्धौ प्रतिवन्धकत्वम् नतु साध्याभाववद्वृत्तित्वाभावरूपग्राह्याभावविषयकत्वेन। अन्यथा साध्याभाववदवृत्तित्वरूपव्याप्तिबुद्धेरेव ग्राह्याभावावगाहित्वेन ताम्प्रत्येव तादृशव्यभिचारनिश्चयस्य विरोधितया साध्यवदन्यावृत्तित्वादिरूपापरव्याप्तिचतुष्टयबुद्धिम्प्रति अविरोधितया वह्नौ धूमाभाववद्वृत्तित्वरूपव्यभिचारग्रहकालेऽपि वह्नौ साध्यवदन्यावृत्तित्वादिरूपान्योन्याभावगर्भव्याप्तिबुध्युदयापत्तेः, ततोऽनुमित्यापत्तेश्च।

ननु मिश्राणाम् मतेऽपि यथाश्रुत एव मूलग्रन्थो नतु व्यतिरेकपदव्यत्यासः, तथा च यद्धर्मिकयत्संशयत्वव्यापिका सती यद्व्यतिरेकनिश्चयत्वव्यापिका या प्रतिवन्धकता तन्निरूपितप्रतिवध्यतावद् यद् भवति तत् तद्धर्मिकनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवतीति व्याप्तिस्वरूपम् फलितम्।

ननूक्तनियमे व्याप्तिनिश्चये व्यभिचारः, अव्यभिचारसंशयप्रतिवध्यत्वस्य अव्यभिचारव्यतिरेकनिश्चयप्रतिवध्यत्वस्य च व्याप्तिनिश्चये सत्त्वेन तत्र व्यभिचारनिश्चयजन्यत्वविरहात् इति चेत्? न, यदभावत्वप्रकारतानियतत्त्वस्य यत्संशययद्व्यतिरेकनिश्चययोवैकल्पिकविशेषणत्वाभ्युपगमात् इत्याशयेनाह वैकल्पिकम् इति।

व्यभिचारवारणसम्भवादिति। अथात्र यद्ज्ञानप्रतिवध्यत्वमात्रस्यैव हेतुत्वं कुतो नोक्तम् किं विशेष्यीभूतयद्व्यतिरेकनिश्चयप्रतिवध्यत्वनिवेशेन? नचानुमितौ व्यभिचारः वह्निनिश्चयाजन्यायामनुमितौ वह्निनिश्चयप्रतिवध्यत्वसत्त्वादिति वाच्यम्, मिश्रमते अनुमितिशाब्दबोधप्रतिवन्धके समानाकारकसिद्धिशाब्दबोधादौ स्वप्रतिवन्धकयद्ज्ञानत्वव्यापकयदभावत्वप्रकारताकत्वविरहादेवादोषात्। इति चेन्न? यादृशस्थले सिद्धिर्न जाता तत्रानुमितौ वाधमादाय व्यभिचारवारणाय संशयत्वोपादानात्। अथवा यत्र सामानाधिकरण्येन समूहालम्बनात्मकसिद्धिवाधनियमः तत्र सामानाधिकरण्येनानुमितौ व्यभिचारः, तत्र सामानाधिकरण्येन वाधनिश्चयस्याविरोधित्वेऽपि सिद्धेर्विरोधित्वात्, एवं व्याप्तिप्रमात्वयोःसंशये यदभावत्वप्रकारकत्वनियमेऽपि तन्निश्चयस्यातथात्वात् साधनाप्रसिद्धिश्च स्यादिति ध्येयम्।

अत्र संशयपदं संशयसामान्यपरमवश्यं वाच्यम्, अन्यथा समूहालम्बनरूपघटाभावादिनिश्चयात्मकव्याप्त्यादिसंशयप्रतिवध्यस्य घटादिज्ञानस्य व्याप्तिनिश्चयाजन्यत्वात्

( प्रभा ) व्यभिचारापत्तेः । एवं संशये यद्धर्मावच्छिन्नविशेष्यतानिरूपकत्वमपि देयम् । अन्यथा निर्धर्मितावच्छेदकविभिन्नधर्मितावच्छेदकज्ञानस्याप्रतिबन्धकतया यत्संशयत्वव्यापकप्रतिबन्धकत्वाप्रसिद्ध्या साधनाप्रसिद्धेः ।

नचैवम् अव्यभिचारनिश्चये व्यभिचारवारणाय उपात्तस्य यदभावत्वप्रकारकत्वविशेषणस्य वैयर्थ्यम् सर्वासामेवाव्यभिचारनिश्चयनिरूपितप्रतिबन्धकतानां अव्यभिचारि न वा ? व्यभिचारि न वा ? इत्यादिसंशयवृत्तिविभिन्नरूपावच्छिन्नानां चालनीन्यायेन तादृशसंशयत्वाव्यापकत्वादिति वाच्यम्, स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन ज्ञानीयविषयिताविशिष्टयद्रूपावच्छिन्नविषयित्वरूपसंशयत्वविशिष्टप्रतिबन्धकत्वस्य विवक्षितत्वात् । संशयवैशिष्ट्यं व्यापकतासम्बन्धेन ।

नच यदभावत्वप्रकारतानैयत्यविशेषणसार्थकतायै एतादृशविवक्षानुचितेति वाच्यम्, धूमो वह्निव्याप्यो न वा ? वह्निमानाधेयत्वाभाववान् वा इत्याकारकसंशयसाधारणैकप्रतिबन्धकत्वाभावेन अनुमित्यादिप्रतिबन्धकतानामपि तादृशसंशयत्वाव्यापकत्वेन दृष्टान्तासिद्ध्यादिवारणायैव एतादृशविवक्षणस्यावश्यकत्वात् स्वप्रतिबन्धकत्वं संशयेऽवश्यं वाच्यमन्यथोक्तरीत्या संशयत्वव्यापकयदभावत्वप्रकारकत्वाप्रसिद्ध्या दृष्टान्तासिद्ध्यादिः स्यात् ।

केचित्तु व्याप्तिमद्भेदकोटिकसंशये प्रतिबन्धकत्वास्वीकारपक्षे तदन्तर्भावेण यदभावत्वप्रकारकत्वनैयत्यविरहेण दृष्टान्तासिद्धिरतस्तन्निवेश इत्याहुः । तादृशसंशयस्वीकारे तत्र प्रतिबन्धकत्वास्वीकारस्यानुभवविरोधात् । प्रतिबन्धकत्वास्वीकारेऽपि पक्षधर्मत्वाभावविषयकव्याप्तिमद्भेदकोटिकसंशये प्रतिबन्धकत्वसत्त्वेन तत्र च यदभावत्वप्रकारकत्वनैयत्यविरहेण तद्दोषतादवस्थ्याच्च । अव्यभिचारनिश्चये व्यभिचारवारणाय यत्संशयत्वव्यापकत्वनिवेशः, अन्यथाऽव्यभिचारवान्नवेति संशयान्तर्भावेण यत्संशयत्वसामानाधिकरण्यस्य यदभावत्वाप्रकारताकत्वे सत्वात् तद्दोषतादवस्थ्यात् । व्यभिचारसंशयप्रतिबध्यत्वे सति स्व ( अव्यभिचारनिश्चय ) प्रतिबन्धकव्यभिचारसंशयत्वव्यापकव्यभिचाराभावत्वप्रकारताके अव्यभिचारनिश्चये व्यभिचारनिश्चयाजन्ये व्यभिचारवारणाय यद्व्यतिरेकनिश्चयप्रतिबध्यत्वोपादानमिति तूक्तप्रायम् ।

आचार्यास्तु —ननु यत्संशयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वे सति यद्व्यतिरेकनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्यैव स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशपुरस्सरं हेतुत्वमस्तु तत एव च समूहालम्बनज्ञानमादाय व्यभिचारवारणसम्भवादितिचेन्न ? पर्वतो वह्न्यभाववानितिबुद्धिम्प्रति पर्वतो महानसीयवह्निमान् पर्वतः पर्वतीयवह्निमान् इति सामान्यघटितविशेषवत्तानिश्चयस्यापि प्रतिबन्धकत्वेन तत्तद्वह्नित्वावच्छिन्नविषयताशालिनिश्चयत्वेन प्रतिबन्धकत्वे गौरवं स्यादतो वह्नित्वावच्छिन्नविषयताशालिनिश्चयत्वेन, एवम् पर्वतो वह्निमानित्यनुमितौ धूमो वह्निव्याप्यो नवा ? धूमो वह्निव्याप्यभाववान् इतिज्ञानद्वयस्यैव प्रतिबन्धकत्वेन व्याप्तित्वावच्छिन्नविषयताकसंशयत्वेन संशयस्य व्याप्तिव्यतिरेकनिश्चयत्वेन व्याप्तिव्यतिरेकनिश्चयस्य च प्रतिबन्धकत्वे गौरवं स्यादत उभयोर्व्याप्यभावत्वावच्छिन्नविषयताशालिज्ञानत्वेनैव प्रतिबन्धकत्वम् ।

( प्रभा ) इत्थञ्च व्याप्तित्वावच्छिन्नविषयताकसंशयत्वे प्रतिबन्धकत्वीयस्वरूपसम्बन्धरूपावच्छेदकत्वाभावात् तादृशसंशयत्वावच्छिन्नत्वस्य प्रतिबन्धकतायामसत्त्वादिति। ननु व्यभिचारी धूम इति निश्चयस्यापि प्रतिबन्धकतया तस्य च व्यभिचारत्वावच्छिन्नविषयताशालिज्ञानत्वेन प्रतिबन्धकताया व्याप्त्यभाववान् धूम इति ज्ञानस्यापि लाघवाद् व्यभिचारत्वावच्छिन्नविषयताशालिज्ञानत्वेनैव प्रतिबन्धकतया व्याप्त्यभावत्वावच्छिन्नविषयत्वस्यापि न प्रतिबन्धकतावच्छेदकत्वमिति चेन्न ? व्यभिचारस्य व्याप्त्यभावरूपत्वाभावात्। अन्यथा तस्य हेत्वाभासान्तरता न स्यात् व्याप्यत्वासिद्धावन्तर्भावात्। अत एव मणिकृता "नचैवं व्यभिचारस्य व्याप्त्यभाववत्त्वेनासिद्धिः स्यात् इत्याशङ्क्य 'साध्यसामानाधिकरण्यं हि व्याप्तिः, साध्याभाववद्वृत्तित्वं हि व्यभिचारः" इत्युक्तमिति वदन्ति।

पण्डितप्रवरास्तु एतत्कल्पे यद्धर्मावच्छिन्नविशेष्यकत्वप्रतिबन्धकीभूतयद्रूपावच्छिन्नव्यतिरेकनिश्चयत्वे सति यद्रूपावच्छिन्नव्यतिरेकत्वावच्छिन्नप्रकारतानियतत्वप्रतिबन्धकयद्धर्मावच्छिन्नविशेष्यकयद्रूपावच्छिन्नकोटिकसंशयसामान्यकं यद् भवति तत् तद्धर्मावच्छिन्नविशेष्यकतद्रूपावच्छिन्नवत्त्वनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवत्येनेति व्याप्तिशरीरम्। यद्व्यतिरेकनिश्चये यदभावत्वप्रकारतानियतत्वकल्पे तु स्वप्रतिबन्धकयद्रूपावच्छिन्नविशेष्यकयद्रूपावच्छिन्नकोटिकसंशयसामान्यप्रतिवध्यत्वे सति यद्धर्मावच्छिन्नाभावत्वप्रकारतानियतयद्रूपावच्छिन्नाभावावगाहिताप्रयुक्तप्रतिबन्धकताकयद्धर्मावच्छिन्नविशेष्यकयद्रूपावच्छिन्नव्यतिरेकनिश्चयसामान्यकं यद् भवति तत् तद्धर्मावच्छिन्नविशेष्यकतद्रूपावच्छिन्नवत्तानिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवतीति व्याप्त्याकारः।

अथैतत्कल्पे पक्षधर्मताविरहत्वेन व्याप्त्यभावावगाहिधूमः पर्वतवृत्तित्वाभाववानिति व्याप्त्यभावावगाहिताप्रयुक्तानुमितिप्रतिबन्धकताकनिश्चये व्याप्त्यभावत्वप्रकारताकत्वविरहाद् यदभावावगाहिताप्रयुक्तप्रतिबन्धकतानिवेशेऽपि न दृष्टान्तासिद्धिवारणमिति। नच यदभावावगाहिताप्रयुक्तत्वपदेन यन्निष्ठप्रतियोगित्वसंसर्गावच्छिन्नप्रकारतानिरूपिताभावनिष्ठप्रकारताप्रयुक्तत्वमेव विवक्षणीयम्. उक्तनिश्चयप्रतिबन्धकतायां व्याप्तिनिष्ठप्रकारतानिरूपिताभावनिष्ठप्रकारताप्रयुक्तत्वविरहादेव तद्वारणमिति वाच्यम्, पक्षधर्मतात्वेन व्याप्त्यवगाह्युक्तनिश्चयमादाय तद्दोषस्यैव सत्त्वात्।

नच यद्रूपावच्छिन्नप्रकारतानिरूपिताभावनिष्ठप्रकारताप्रयुक्तत्वविवक्षया तद् वारणीयमिति वाच्यम्, तथा निवेशे शुद्धव्यभिचारनिश्चयेऽव्यभिचारत्वावच्छिन्नविषयतानिरूपिताभावप्रकारताप्रयुक्तप्रतिबन्धकत्वासत्त्वात् निरुक्तप्रतिबन्धकताको योऽव्यभिचाराभाववानितिनिश्चयस्तत्राव्यभिचाराभावत्वप्रकारतानियतत्वसत्त्वादव्यभिचारनिश्चयाजन्येऽव्यभिचारनिश्चये व्यभिचारापत्तेः। अतो यथाश्रुतयदभावावगाहिताप्रयुक्तत्वस्यैव निवेशनीयतयां प्रागुक्तदोषवारणासम्भवात्, मैवम् ? यदभावावगाहिताप्रयुक्तप्रतिबन्धकताकयद्व्यतिरेकनिश्चये भ्रमभिन्नत्वस्य निवेशनीयत्वात्। तदर्थश्च मुख्यविशेष्यताभिन्ना स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यता तदनिरूपकत्वम्। धूमो वह्निव्याप्यत्वाभाववानिति व्याप्तिव्यतिरेकनिश्चयस्य मुख्यविशेष्यीभूतधूमांशे भ्रमतयाऽनुमिति-

(प्रभा). प्रतिवन्धकीभूतभ्रमभिन्नव्याप्तिव्यतिरेकनिश्चयाप्रसिद्धया दृष्टान्तासिद्धिवारणाय मुख्यविशेष्यताभिन्नत्वघटिततदर्थानुसरणम्। तथाच पक्षवृत्तित्वाभावादिना व्याप्यभावावगाहिनिश्चये निरुक्तभ्रमभिन्नत्वविरहात् न तमादाय दृष्टान्तासिद्धिः। नच तथापि वह्न्यभावाभाववन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावरूपवह्न्यभावव्याप्यत्वादिना वह्निव्याप्यभावावगाहिनिरुक्तवह्निव्याप्तिव्यतिरेकावगाहिताप्रयुक्तानुमितिप्रतिवन्धकताशालिनिरुक्तभ्रमभिन्ने पर्वतो वह्न्यभावव्याप्यवानितिनिश्चये वह्निव्याप्यभावत्वप्रकारताकत्वविरहात् तद्दोषतादवस्थ्यमिति वाच्यम्, यदभावावगाहिताप्रयुक्तत्वमित्यत्रावगाहितायां विशेषणताविशेषसम्बन्धावच्छिन्नत्वनिवेशादेव तद्वारणसम्भवात्। अथवा धूमत्वावच्छिन्नविशेष्यकनिरुक्तस्वप्रतिवन्धकताकव्यतिरेकनिश्चयसामान्ये व्याप्यभावत्वप्रकारतानियतत्वसत्त्वात् प्रकृतेऽपि धूमत्वावच्छिन्नविशेष्यकव्याप्तिनिश्चयजन्यत्वात् दृष्टान्तघटकतया पर्वतविशेष्यकतादृशनिश्चये तदसत्त्वेऽपि क्षत्यभावात्। तथा च तद्धर्मावच्छिन्नविशेष्यतानिरूपितयदभावावगाहिताप्रयुक्तत्वमेव निवेशनीयमिति न समूहालम्बनज्ञानमादायोक्तदोष इति मन्तव्यम्।

अथ घटादिव्यतिरेकनिश्चयप्रतिवध्ये घटादिविशिष्टवोधे घटादिनिश्चयाजन्ये व्यभिचारवारणाय यत्संशयप्रतिवध्यत्वं निवेशनीयम्, तन्न सङ्गच्छते, घटवद्वृत्तित्वेन घटाभावावगाहिनि घटाभावावगाहिताप्रयुक्तस्वप्रतिवन्धकताशालिनि च घटवद्वृत्तिमद्भूतलमितिनिश्चये घटाभावत्वप्रकारतानैयत्यविरहादेव व्यभिचारवारणसम्भवाद् यत्संशयप्रतिवध्यत्वनिवेशो व्यर्थः। नच गगनादिनिश्चयाजन्ये गगनादिव्यतिरेकनिश्चयप्रतिवध्ये गगनादिविशिष्टवोधे व्यभिचारवारणाय तन्निवेश आवश्यकः तत्र गगनादिमद्वृत्तित्वेन गगनाभावावगाहिनिश्चयस्य प्रागुक्तभ्रमभिन्नत्वविरहादेव तादृशनिश्चयमादाय व्यभिचारवारणासम्भवादिति वाच्यम्? प्रमेयवान् गगनाभाववान् प्रमेयवाँश्च देश इति प्रमेयत्वेन गगनाभावावगाहिताप्रयुक्तस्वप्रतिवन्धकताशालिनि केवलप्रमेयवान् देश इति निश्चये गगनाभावत्वप्रकारतानैयत्यविरहादेव तत्रापि व्यभिचारवारणसम्भवादिति चेन्न? अनुमितिम्प्रति व्याप्तिसंशयव्याप्तिव्यतिरेकनिश्चययोरिव व्याप्यभावावच्छेदकत्वेन गृहीतधर्मवत्तानिश्चयस्यापि तुल्ययुक्त्या प्रतिवन्धकतया प्रमेयवान् व्याप्यभाववानितिनिश्चयकालीनं यद् व्याप्यभावावगाहिताप्रयुक्तस्वप्रतिवन्धकताशालिव्याप्यभावत्वप्रकारताशून्यप्रमेयत्वेन व्याप्यभावावगाहिप्रमेयवाँश्च धूम इतिनिश्चयात्मकं ज्ञानं तदा दृष्टान्तासिद्धिपरिहाराय निरुक्तस्वप्रतिवन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्यावश्यकतया तत एव व्यावर्त्तकधर्मदर्शनविधया प्रतिवन्धकत्ववारणसम्भवात्। गगनादिनिश्चयाजन्ये गगनादिव्यतिरेकनिश्चयप्रतिवध्ये गगनादिविशिष्टवोधे व्यभिचारवारणाय यत्संशयप्रतिवध्यत्वनिवेशस्यावश्यकत्वात्। नच व्याप्यभावावच्छेदकत्वेन गृहीतधर्मनिश्चयस्यानुमितिम् प्रति प्रतिवन्धकत्वस्वीकारे तुल्ययुक्त्या व्याप्यावृत्तिधर्मवत्त्वनिश्चयस्यापि प्रतिवन्धकत्वं स्वीकरणीयम्, तथाच ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशाद् व्यावर्त्तकप्रतिबन्धकतामादाय दृष्टान्तासिद्धिवारणेऽपि व्याप्तिमदवृत्तित्वेन व्याप्यभावावगाहिनिश्चय-

( गा० ) यद्यपि प्रमेयत्वादिना व्याप्त्यभावावगाहिनि पक्षधर्मत्वाभावत्वाद्यवच्छिन्नविषयकज्ञानेऽनुमितिप्रतिबन्धके व्याप्त्यभावत्वादिप्रकारकत्वाभावात् दृष्टान्तासिद्ध्यादिवारणाय यदभावावगाहिताप्रयुक्तप्रतिबन्धकताशालिसंशयादौ यदभावत्वप्रकारतानैयत्यं विवक्षणीयम्। तथा च व्यभिचारसंशयप्रतिबध्ये तद्व्यतिरेकनिश्चये व्यभिचारनिश्चयाजन्ये व्यतिरेकनिश्चयपदोपादानव्यावृत्त्यसङ्गतिः, अव्यभिचारनिश्चयम् प्रति प्रतिबन्धकताया व्यभिचाराभावावगाहित्वाप्रयुक्ततया यत्पदेन व्यभिचारोपादानासम्भवात्, तथापि व्यतिरेकनिश्चये यदभावत्वप्रकारतानियतत्वनिवेशपक्ष एव प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वं निवेशनीयम्, नतु संशये तद्विशेषणनिवेशपक्षे, अनुमित्यादिप्रतिबन्धकव्याप्त्यादिसंशये व्याप्त्यभावत्वाप्रकारकत्वायोगेन दृष्टान्तासिद्ध्याद्यनवकाशात्। तथाच सति व्यभिचारावगाहिताप्रयुक्तानुमिति प्रतिबन्धकतावति व्यभिचारसंशये व्यभिचाराभावत्वप्रकारतानैयत्येनैव यत्पदेन व्यभिचारोपादानसम्भवात् व्यतिरेकनिश्चयोपादानव्यावृत्तिश्शक्यते संगमयितुम्,

---

( प्रभा ) मादाय दृष्टान्तासिद्धितादवस्थ्यमिति वाच्यम्? तद्वद्वृत्तिधर्मवत्तानिश्चयस्यापि निश्चयविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वम् नतु निरूप्यनिरूपकभावापन्नविषयताशालिनिश्चयत्वेन, एवञ्च प्रोक्तविशेषणेनैव तस्यापि वारणसम्भवात्।

अथवा यदभावावगाहितायाम् अभावत्वावच्छिन्नावच्छेदकत्वानिरूपकत्वनिवेशेनैव तद्वारणसम्भवादिति विभावनीयम्।

ननूक्तरीत्या यदभावत्वप्रकारतानियतत्वनिवेशे यद्व्यतिरेकनिश्चयप्रतिबध्यत्वदलोपादानं व्यर्थं स्यात् तथाहि प्रमेयवान् धूमः पर्वतावृत्तिरित्याकारकनिश्चयेऽपि अनुमितिप्रतिबन्धकतायाःसत्त्वेन तत्र च व्याप्त्यभावत्वप्रकारताकत्वाभावेन यत्पदेन व्याप्तेरपि धर्तुमशक्यत्वात् दृष्टान्तासिद्धिरिति तद्वारणाय प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वमवश्यं निवेशनीयम्, एवञ्च व्यभिचारसंशयनिष्ठप्रतिबन्धकताया व्यभिचाराभावविषयिताप्रयुक्तत्वाभावेन यत्पदेन व्यभिचारस्य धर्तुंशक्यतया व्यभिचारसंशयप्रतिबध्ये व्याप्तिज्ञाने व्यभिचारनिश्चयाजन्ये व्यभिचारवारणसम्भवेन यद्व्यतिरेकनिश्चयपदोपादानस्य निष्प्रयोजनत्वात् इत्याशयेन शङ्कते यद्यपीत्यादिना। दृष्टान्तासिद्ध्यादीति। आदिना स्वरूपासिद्धिपरिग्रहः। प्रमेयत्वेन प्रामाण्याभावावगाहिनि कृत्यसाध्यत्वादिनिश्चये प्रवृत्तिप्रतिबन्धके प्रामाण्याभावत्वप्रकारताकत्वनियतप्रामाण्यव्यतिरेकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वविरहादिति। समाधत्ते तथापीत्यादिना। अत्रायमाशयः, व्यतिरेकनिश्चये यथोक्तयदभावत्वप्रकारतानियतत्वविशेषणनिवेशपक्षे एव यदभावावगाहिताप्रयुक्तत्वविशेषणं देयं नतु संशये तन्निवेशपक्षे, प्रयोजनविरहात्। संशये यदभावत्वप्रकारतानिवेशेऽपि दृष्टान्तासिद्ध्याद्यनवकाशेन यदभावावगाहिताप्रयुक्तत्वनिवेशस्यानावश्यकत्वात्। एवञ्च यत्संशयपदेन व्यभिचारसंशयमादाय व्याप्तिबुद्धौ व्यभिचारवारणाय

( चि० म० ) तन्निश्चयस्तद्धेतुः अनुमितौ व्याप्तेरिवेति वाच्यम्,

( दी० ) तन्निश्चय इति। तद्व्यतिरेकज्ञानमात्रस्य प्रतिबन्धकत्वे तत्संशयात् कार्यानुत्पत्तेस्तन्निश्चयत्वेनैव तद्धेतुत्वात्।

( गा० ) यदभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तप्रतिबन्धक-

( प्रभा ) यद्व्यतिरेकनिश्चयपदोपादानं सार्थकमेवेति। अनुमित्यादीति। आदिना प्रवृत्तिपरिग्रहः। व्याप्त्यभावत्वाप्रकारकत्वायोगेनेति। इदमुपलक्षणम्, प्रामाण्याभावत्वाप्रकारकत्वायोगेनेत्यपि वोध्यम्। दृष्टान्तासिद्ध्याद्यनवकाशादिति। आदिना स्वरूपासिद्धिपरिग्रहः। अनुमितौ व्याप्त्यभावत्वप्रकारतानियतव्याप्तिसंशयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वरूपहेतोः सत्त्वान्न दृष्टान्तासिद्धिः।

एवम् प्रवृत्तौ प्रामाण्याभावत्वप्रकारतानियतप्रामाण्यसंशयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वरूपहेतोः सत्त्वान्न स्वरूपासिद्धिरिति भावः[१]।

यदभावत्वाप्रकारकेति। पूर्वोक्तरीत्या नैयत्यनिवेशे गौरवमाशंक्याह यदभावत्वेत्यादि। यदभावत्वाप्रकारकज्ञाननिष्ठेति अवगाहिताविशेषणम्। यदभावत्वानव-

१ ननु प्रमेयत्वेन व्याप्त्यभावावगाहिपक्षधर्मत्वावच्छिन्नविषयकेऽनुमितिप्रतिबन्धकज्ञाने व्याप्त्यभावत्वप्रकारकत्वनैयत्याभावात् दृष्टान्तासिद्धिवारणाय प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वनिवेशनमावश्यकम्। परन्तु संशये यदभावत्वप्रकारतानैयत्यनिवेशपक्षे दृष्टान्तासिद्ध्याद्यनवकाशेन यदभावावगाहिताप्रयुक्तत्वनिवेशनमनर्थकम्। एवञ्च व्यभिचारसंशयप्रतिबध्ये व्याप्तिनिश्चये व्यभिचारवारणार्थम् व्यतिरेकनिश्चयोपादानं सार्थकमिति यदुक्तन्तन्न सङ्गच्छते, संशये यदभावत्वप्रकारतानैयत्यनिवेशकल्पेऽपि तद्व्यक्तित्वेन व्याप्त्यवगाहितद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वेन व्याप्त्यभावावगाहिव्याप्त्यंशे संशयात्मकपक्षधर्मत्वाभावत्वावच्छिन्नविषयकनिश्चये पक्षधर्मत्वाभावावगाहिताप्रयुक्तानुमितिप्रतिबन्धकताके व्याप्त्यभावत्वप्रकारताकत्वनैयत्यविरहाद् दृष्टान्तासिद्धिवारणाय अवश्यं संशयप्रतिबन्धकतायामपि यदभावावगाहिताप्रयुक्तत्वं निवेशनीयम्। तथाच व्यभिचारसंशयप्रतिबध्यव्याप्तिनिश्चये न व्यभिचारः। तत्प्रतिबन्धकतायां व्यभिचाराभावावगाहिताप्रयुक्तत्वाभावादेव यदभावावगाहिताप्रयुक्तत्वप्रतिबन्धकताशालियदभावत्वप्रकारतानियतसंशयप्रतिबध्यत्वरूपहेतोरभावात् इति कथं यद्व्यतिरेकनिनिश्चयोपादानव्यावृत्तिसङ्गतिरिति चेन्न ? यत्संशये प्रकारतावच्छेदकांशे भ्रमभिन्नत्वनिवेशेनैव तद्दोषवारणात्। तथाच प्रकारतावच्छेदकांशे भ्रमभिन्नस्वप्रतिबन्धकयत्संशयत्वव्यापकयदभावत्वप्रकारताकत्वे सति यदभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताशालियद्व्यतिरेकनिश्चयत्वव्यापकयदभावत्वप्रकारताको यः स तन्निश्चयजन्य इति फलति।

यद्वा एतदस्वरसादेव यदभावत्वाप्रकारकेत्यादिकल्पानुसरणम्।

(प्रभा) च्छिन्नेति तदर्थः। तथाच यदभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तप्रतिबन्धकतानिरूपितप्रतिबध्यतावद् यद् यत् तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वे सति यत्संशयत्वव्यापिका सती यद्व्यतिरेकनिश्चयत्वव्यापिका या प्रतिबन्धकता तन्निरूपितप्रतिबध्यतावद् यत् तत् तन्निश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवतीति व्याप्तिस्वरूपम् फलितमित्यवगन्तव्यम्। तथाच व्याप्त्यभावत्वाप्रकारकं तद्व्यक्तित्वेन व्याप्त्यभावावगाहि यद् ज्ञानम् तद्व्यक्तिमान् धूम इत्याकारकं तादृशज्ञाननिष्ठा या व्याप्त्यभावावगाहिता तत्प्रयुक्तप्रतिबन्धकतानिरूपितप्रतिबध्यतावत् यत् तद्व्यक्त्यभाववान् धूमः इत्याकारकं ज्ञानम् तद्भिन्नत्वस्यानुमितौ सत्त्वेन सत्यन्तदलस्य व्याप्तिसंशयव्याप्तिव्यतिरेकनिश्चयत्वव्यापकप्रतिबन्धकताकत्वस्य च तत्र सत्त्वेन विशेष्यदलस्य च सत्वात् न दृष्टान्तासिद्धिः। एवम् प्रमात्वाभावत्वाप्रकारकप्रमात्वाभावव्यक्तित्वावच्छिन्नप्रकारकं यज्ज्ञानम् तद्व्यक्तिमत्प्रयोजनवत्त्वज्ञानं तन्निष्ठप्रमात्वाभावविषयित्वाप्रयुक्तप्रतिबन्धकतानिरूपितप्रतिबध्यतावत् यत् प्रमात्वाभावव्यक्तित्वावच्छिन्नाभावविषयकं तद्व्यक्त्यभाववत् प्रयोजनवत्त्वज्ञानं तदन्यत्वस्य च प्रवृत्तौ सत्त्वेन तस्याः सत्यन्तदलाक्रान्ततया प्रमात्वसंशयप्रमात्वव्यतिरेकनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य सत्त्वेन विशेष्यदलाक्रान्ततया च न स्वरूपासिद्धिः।

अत्र यदभावत्वाप्रकारकज्ञाननिष्ठत्वस्य यदभावावगाहितायामविशेषणत्वे दृष्टान्तासिद्धिः व्याप्त्यभावत्वेन व्याप्त्यभावावगाहिज्ञानीयव्याप्त्यभावावगाहिताप्रयुक्तप्रतिबन्धकताकत्वस्यैवानुमितौ सत्त्वेन तस्याः सत्यन्तदलाक्रान्ततया यत्पदेन व्याप्तेर्धर्तुमशक्यत्वात् अतस्तन्निवेशः। एवम् यदभावावगाहिताप्रयुक्तत्वानिवेशे पुनर्दृष्टान्तासिद्धिः व्याप्त्यभावत्वाप्रकारकं यत् प्रमेयत्वेन व्याप्त्यभावावगाहिप्रमेयवान् धूमः पर्वतावृत्तिरित्याकारकं ज्ञानं तन्निष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्यैवानुमितौ सत्त्वेन तस्याः सत्यन्तदलानाक्रान्ततया यत्पदेन व्याप्तेर्धर्तुमशक्यत्वात्। नच यदभावत्वप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तप्रतिबन्धकताकत्वे सतीत्येव कुतो नोक्तम् किमत्र द्वयोपादानेनेति वाच्यम्। तथा सति यत्पदेनाव्यभिचारस्याप्युपादानसम्भवात् व्याप्तिनिश्चये व्यभिचारापत्तेः। तथाहि अव्यभिचाराभावत्वप्रकारकाव्यभिचाराभावत्वेनाव्यभिचाराभावावगाहिज्ञाननिष्ठाव्यभिचाराभावविषयिताप्रयुक्तप्रतिबन्धकताकत्वस्य व्याप्तिनिश्चये सत्त्वेन सत्यन्तदलस्य अव्यभिचारसंशय-अव्यभिचारव्यतिरेकनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य च सत्त्वेन विशेष्यदलस्यापि सत्त्वात् तत्रापि व्यभिचारनिश्चयजन्यत्वविरहात्। नत्र द्वयोपादाने तु नोक्तव्यभिचारावसरः। अव्यभिचाराभावत्वाप्रकारकं यद् व्यभिचारत्वेन व्यभिचारज्ञानं तदीयाव्यभिचाराभावविषयिताप्रयुक्तप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य च तत्र सत्त्वेन तदन्यत्वस्य व्याप्तिनिश्चये विरहात् तस्य सत्यन्तदलानाक्रान्तत्वात्।

इदमत्रावधेयम्। घटव्यतिरेकनिश्चयसामान्यप्रतिबध्ये घटवत्त्वनिश्चयाजन्ये घटवत्त्वग्रहे व्यभिचारवारणाय यत्संशयोपादानम्। तत्रापि च व्यापकत्वानिवेशे घटज्ञाने व्यभिचारः। समूहालम्बनघटाभावनिश्चयात्मकव्याप्तिसंशयादिनिष्ठप्रतिबन्धकता-

(गा०) ताकान्यत्वे सति यत्संशयव्यतिरेकनिश्चयसामान्यप्रतिबध्यत्वं वा हेतुः, अव्यभिचाराभावत्वानवच्छिन्नाव्यभिचारविषयिताप्रयुक्तप्रतिबन्धकताकव्याप्तिनिश्चये सत्यन्ताभावात् अव्यभिचारनिश्चयत्वावच्छिन्नाजन्यत्वेऽपि न व्यभिचारः। व्यभिचारसंशयमात्रप्रतिबध्यस्य व्याप्तिनिश्चयस्य व्यभिचाराभावत्वानवच्छिन्नाव्यभिचाराभावविषयिताप्रयुक्तप्रतिबन्धकताकान्यत्वं तत्प्रतिबन्धकतायां व्यभिचाराभावविषयित्वाप्रयुक्तत्वादेवाक्षतमिति व्यतिरेकनिश्चयोपादानसार्थक्यम्। व्यभिचाराभावत्वानवच्छिन्नतदभावविषयिताप्रयुक्तत्वं च तदभावव्यक्तित्वावच्छिन्नाभावज्ञानप्रतिबन्धकतायामेव प्रसिद्धम्,

---

(प्रभा) निरूपितप्रतिबध्यताया घटज्ञाने सत्त्वेन विशेष्यदलस्य व्याप्यभावत्वाप्रकारकव्याप्यभावव्यक्तित्वावच्छिन्नप्रकारकज्ञाननिष्ठव्याप्यभावविषयिताप्रयुक्तप्रतिबन्धकतानिरूपितप्रतिबध्यतावत् यद् व्याप्यभावव्यक्तित्वावच्छिन्नज्ञानम् तदन्यत्वस्यापि घटज्ञाने सत्त्वेन सत्यन्तदलस्य च तत्र सत्त्वात् तत्र व्याप्तिनिश्चयजन्यत्वविरहात्। व्यापकत्वनिवेशे तु असमूहालम्बनात्मकव्याप्तिसंशयादौ घटज्ञानप्रतिबन्धकत्वविरहेण न तत्र व्यभिचारावकाशः। भेदकूटघटितसत्यन्तार्थविवक्षणे यत्पदेनाव्यभिचारमादाय व्याप्तिनिश्चय एव व्यभिचारः, अव्यभिचाराभावत्वाप्रकारकतद्व्यक्तित्वेनाव्यभिचाराभावावगाहिज्ञाननिष्ठाव्यभिचाराभावविषयिताप्रयुक्तप्रतिबन्धकतानिरूपितप्रतिबध्यतावत् यत् यत्किञ्चित्-अव्यभिचाराभावव्यक्त्यभाववान् इत्याकारकं ज्ञानम् तद्भिन्नत्वस्य व्याप्तिनिश्चये सत्त्वात्। वीप्सया तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटनिवेशे तु अव्यभिचाराभावत्वाप्रकारकज्ञाननिष्ठव्यभिचारत्वावच्छिन्नविषयिताप्रयुक्तप्रतिबन्धकतानिरूपित प्रतिबध्यताविशिष्टत्वस्य व्याप्तिनिश्चये सत्त्वेन तस्यापि यद्यद्व्यक्त्यन्तर्गततया तद्भेदस्य व्याप्तिनिश्चये विरहेण सत्यन्तदलानाक्रान्ततया न व्यभिचारः।

सत्यन्तदलप्रयोजनमाह अव्यभिचाराभावत्वानवच्छिन्नेति। तथा च सत्यन्तदलानुपादाने अव्यभिचारसंशय-अव्यभिचारव्यतिरेकनिश्चयप्रतिबध्ये अव्यभिचारनिश्चये व्यभिचारस्स्यात् विशेष्यदलाक्रान्तत्वात्। तदुपादाने तु अव्यभिचाराभावत्वाप्रकारकं यज् ज्ञानम् तन्निष्ठाव्यभिचाराभावरूपव्यभिचारविषयिताप्रयुक्तप्रतिबन्धकताकत्वस्यैव अव्यभिचारनिश्चये सत्त्वेन न व्यभिचारावसर इति।

व्यतिरेकनिश्चयपदोपादानं सार्थकयति व्यभिचारसंशयमात्रेति। मात्रपदेन व्यभिचारव्यतिरेकनिश्चयस्य व्यवच्छेदः। अत्रापि व्यभिचारसंशयसामान्यप्रतिबध्ये घटाभावप्रकारकनिश्चयात्मकव्यभिचारव्यतिरेकनिश्चयप्रतिबध्ये व्यभिचारनिश्चयाजन्ये घटज्ञानात्मकव्याप्तिग्रहे व्यभिचारवारणाय सामान्यपदम्। तथाच समूहालम्बनानात्मकव्यभिचारव्यतिरेकनिश्चयाप्रतिबध्यत्वान्न व्यभिचारः। प्रतिबन्धकतायां व्यभिचाराभावत्वानवच्छिन्नव्यभिचाराभावविषयिताप्रयुक्तत्वं नाप्रसिद्धमित्याशयेन प्रसिद्धिं सम्पादयति व्यभिचाराभावत्वानवच्छिन्नेति।

( गा० ) स्वप्रतिवन्धकतानवच्छेदकयदभावत्वानवच्छिन्नयदभावविषयिता-मान्यकत्वे सतीति वा वक्तव्यमित्याहुः ।

---

( प्रभा ) अथ अभावांशे व्याप्तित्वेन घटावगाहि अभावत्वेन व्याप्त्यभावावगाहिव्याप्ति-मान्नवेत्याकारकव्याप्त्यभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताकान्य-त्वविरहेणाप्रसिद्धितादवस्थ्यम् इति चेन्न ? यदभावावगाहितापदेन यन्निरूपितप्रतियो-गितावच्छेदकावच्छिन्नाभावावगाहिताया विवक्षणीयतया पूर्वोक्तदोषवारणसम्भवात् ।

ननु व्याप्तिमद्भेदाभावस्य व्याप्तिस्वरूपत्वे व्याप्त्यभावत्वाप्रकारकव्याप्तिमान् व्याप्तिमद्भेदवान् वेत्याकारकसंशयनिष्ठव्याप्तिनिरूपितप्रतियोगितावच्छेदकीभूतव्याप्तिमद्-भेदत्वावच्छिन्नावगाहिताप्रयुक्तप्रतिवन्धकताकान्यत्वविरहेणानुमितेर्दृष्टान्तत्वमनुपपन्नम् अतः कल्पान्तरमाह स्वप्रतिवन्धकतानवच्छेदकेति । इदंच विषयिताविशेषणम् । स्वपदम् प्रतिवध्यत्वेनाभिमतानुमित्यादिपरम् ।

परेतु भेदकूटघटितसत्यन्तार्थविवक्षणे गौरवमित्यतःकल्पान्तरमाह स्वप्रतिवबन्धके-त्यादीत्यवतारयन्ति ।

तथाच यदभावत्वानवच्छिन्नयदभावविषयितात्वव्यापकस्वप्रतिवन्धकतावच्छेदकत्वा-भावकत्वे सति यत्संशयत्वव्यापिका सती यद्व्यतिरेकनिश्चयत्वव्यापिका या प्रतिबन्धकता तन्निरूपितप्रतिवध्यतावद् यद् भवति तत् तन्निश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद् भवतीति व्याप्तेः स्वरूपम् फलितम् , तेन न दृष्टान्तासिद्धिः । व्याप्त्यभावत्वानवच्छिन्न-तद्व्यक्तित्वेन व्याप्त्यभावविषयितात्वव्यापकधूमलिङ्गकानुमितिप्रतिबन्धकतावच्छेदक-त्वाभावकत्वस्य व्याप्तिसंशयव्याप्तिव्यतिरेकनिश्चयप्रतिवध्यत्वस्य धूमलिङ्गकानुमितौ सत्त्वात् । एवम् प्रमात्वाभावत्वानवच्छिन्नतद्व्यक्तित्वेन प्रमात्वाभावविषयितात्वव्यापकप्रवृत्तिप्रति-बन्धकतावच्छेदकत्वाभावकत्वस्य प्रमात्वसंशयप्रमात्वव्यतिरेकनिश्चयप्रतिवध्यत्वस्य च प्रवृत्तौ सत्त्वान्न स्वरूपासिद्धिः । ननु यन्निरूपितप्रतिबन्धकतावच्छेदकत्वाभावः यदभावत्वानवच्छिन्न-यदभावविषयितात्वसमानाधिकरण इत्यादिरीत्यैवोच्यतां किम् व्यापकत्वार्थकसामान्यप-दोपादानेनेति चेत् न ? यत्पदेनाव्यभिचारमादाय व्याप्तिनिश्चये व्यभिचारापत्तेः, अव्य-भिचाराभावत्वानवच्छिन्नतद्व्यक्तित्वेनाव्यभिचाराभावावगाहिज्ञानीयव्यभिचाराभावविषयिता-याम् व्याप्तिनिश्चयप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वेन स्वपदेन व्याप्तिनिश्चयस्य धर्तुं शक्य-त्वात् । सामान्यपदोपादाने तु तादृशविषयितासामान्यान्तर्गतव्यभिचारत्वावच्छिन्न-विषयितायाम् व्याप्तिज्ञानप्रतिबन्धकतानवच्छेदकत्वविरहेण स्वपदेन व्याप्तिज्ञानस्य धर्तुमश-क्यतया सत्यन्ताभावान्न व्यभिचारः । यदभावविषयितायां यदभावत्वानवच्छिन्नत्वानिवेशे दृष्टान्तासिद्धिः, व्याप्त्यभावत्वेन व्याप्त्यभावविषयिताया अपि यदभावविषयितासामान्या-न्तर्गततया तत्रानुमितिप्रतिबन्धकतानवच्छेदकत्वविरहेण स्वपदेनानुमितेर्धर्तुमशक्यत्वात् । यदभावविषयितायां तदुपादाने तु व्याप्त्यभावत्वानवच्छिन्नतद्व्यक्तित्वेन व्याप्त्यभावविष-यिताया एव तादृशविषयितासामान्यान्तर्गततया तत्रानुमितिप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वात् अनुमितेः स्वपदेनोपादानसम्भवाद् दृष्टान्तासिद्धेरभावात् ।

(प्रभा) ननु यदभावत्वानवच्छिन्नविषयितामात्रं निवेश्यताम् विषयितायां यदभावविशेषणं किमर्थमिति चेन्न ? व्याप्त्यभावत्वानवच्छिन्नपक्षवृत्तित्वाभावादिविषयिताया अपि यदभावत्वानवच्छिन्नविषयितासामान्यान्तर्गततया तत्र चानुमितिप्रतिबन्धकतावच्छेदकत्वस्यैव सत्त्वेन पुनर्दृष्टान्तासिद्ध्यापत्तेः । यदभावनिवेशे तु तद्व्यक्तित्वावच्छिन्नविषयिताया एव धर्त्तव्यतया दोषविरहात् । नन्वेवम् यदभावत्वानवच्छिन्नयदभावविषयितात्वव्यापकस्वप्रतिबन्धकत्वाभावकत्वमात्रमेव निवेश्यतां किमवच्छेदकत्वानुसरणेनेति चेत्न ? व्याप्त्यभावत्वानवच्छिन्नव्याप्त्यभावविषयितायास्तद्व्यक्तित्वेन व्याप्त्यभाववद्विषयकपक्षधर्मत्वाभावविषयकसमूहालम्बनज्ञानेऽपि सत्त्वेन तत्र चानुमितिप्रतिबन्धकत्वाभावविरहेण स्वपदेनानुमितेर्धर्तुमशक्यतया दृष्टान्तासिद्ध्यापत्तेः । अवच्छेदकत्वाभावानुसरणे तु तद्व्यक्तित्वेन तादृशव्याप्त्यभावविषयितायाम् अनुमितिप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वात् न दृष्टान्तासिद्धिः । नञ्द्वयोपादानव्यावृत्तिश्च पूर्ववदेवेति । अथात्र यत्संशयप्रतिबध्यत्वनिवेशो व्यर्थः । घटादिव्यतिरेकनिश्चयप्रतिबध्येऽपि घटविशिष्टज्ञाने घटाभावत्वानवच्छिन्नघटाभावविषयितासामान्यान्तर्गतायाः तद्व्यक्तिमान् घटाभाववान् इति निश्चयकालीनतद्व्यक्तिमान् इति निश्चयीयतद्व्यक्तित्वावच्छिन्नविषयितायाः घटवत्त्वधीप्रतिबन्धकतानवच्छेदकत्वविरहेण सत्यन्ताभावेनैव व्यभिचाराप्रसक्तेः । एवम् व्यभिचारसंशयप्रतिबध्येऽपि व्याप्तिज्ञाने व्यभिचाराभावत्वानवच्छिन्नव्यभिचारविषयितासामान्यान्तर्गतायाः अभाववान् व्यभिचारवान् इति निश्चयकालीनाभाववान् इतिनिश्चयीयाभावत्वावच्छिन्नविषयितायाःव्याप्तिधीप्रतिबन्धकत्वानवच्छेदकत्वविरहेण सत्यन्तदलानाक्रान्ततया व्यभिचाराप्रसक्त्या तद्व्यतिरेकनिश्चयप्रतिबध्यत्वदलं च व्यर्थम् । नच स्वप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्य नैष दोष इति वाच्यम्, ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्य व्यभिचारं सम्पाद्य पुनर्व्यभिचारवारणाय दलान्तरनिवेशस्य 'प्रक्षालनाद्धि' इतिन्यायेनायुक्तत्वात् । एवमपि प्रतियोगितासम्बन्धेन घटाभावांशे घटत्वेन पदार्थान्तरावगाहिभ्रमीयघटाभावविषयितायाःव्यभिचारत्वेनाव्यभिचारवद्वृत्तित्वेन वा व्यभिचाराभावावगाहिभ्रमीयव्यभिचाराभावविषयितायास्तादृशविषयितासामान्यान्तर्गतायाःस्वपदग्राह्यघटवत्त्वज्ञान - व्याप्तिज्ञानप्रतिबन्धकतानवच्छेदकत्वविरहेण सत्यन्ताभवेन व्यभिचाराप्रसक्त्या तद्वैयर्थ्यस्य दुर्वारत्वात् । नच यदभावत्वानवच्छिन्नयदभावविषयितायां भ्रमान्यवृत्तित्वं निवेश्यमिति वाच्यम् ? तथापि घटवद्वृत्तित्वेन घटाभावावगाहिघटवद्वृत्तिमान् इतिनिश्चयीयघटाभावविषयितायाः तादृशविषयितासामान्यान्तर्गतायाः घटज्ञानप्रतिबन्धकतानवच्छेदकत्वविरहेण यत्संशयप्रतिबध्यत्वदलवैयर्थ्यस्य दुर्वारत्वात् । यदि च पक्षधर्मताविरहत्वेन व्याप्त्यभावावगाहिज्ञानवारणाय प्रतिबन्धकतायां तदवच्छेदकविषयितायां वा भ्रमावृत्तित्वं प्रवेश्यते, तथाच घटवत्त्वप्रमायाम् व्यभिचारः तत्र घटवदवृत्तिमानितिज्ञानस्य भ्रमात्मकस्यापि सम्भवेन तादृशघटाभावविषयितायाः भ्रमावृत्तिप्रतिबन्धकतानवच्छेदकत्वेन सत्यन्तार्थसत्त्वात् तादृशप्रतिबन्धकतायाः कामिनीजिज्ञासादौ प्रसिद्धेरितिसंशयपदमित्युच्यते तदा प्रमात्मकव्यभिचारनिश्चये व्यभिचारो दुर्वार एव, अव्यभिचाराभावत्वानवच्छिन्नव्यभिचारविष-

( प्रभा ) यितासामान्यस्य भ्रममात्रवृत्तिप्रतिबन्धकतावच्छेदकत्वात् । एवं भ्रमान्यवृत्तित्वरूप-तद्विशेषणेऽपि ।

अथ यदभावविषयितापदेन यन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नविषयिता विवक्षणीया, घटवदवृत्तित्वावच्छिन्नविषयितायाः घटनिरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वाभावेन तत्प्रतिबन्धकतानवच्छेदकताद्दशविषयिताकत्वं घटवत्त्वज्ञानस्याक्षतमिति तत्र व्यभिचारवारणाय यत्संशयेत्यादेः सार्थक्यम् । नचैवं दृष्टान्तासिद्धिः व्याप्त्यभावत्वावच्छिन्नविषयितायां व्याप्तिनिरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वाभावादिति वाच्यम् ? आधेयत्वाभावत्वस्यापि हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिनिरूपितप्रतियोगितावच्छेदकतया तदवच्छिन्न-विषयितायां व्याप्त्यभावत्वावच्छिन्नत्वेन स्वप्रतिबन्धकतानवच्छेदकताद्दशविषयिताकत्वेनानुमितेर्दृष्टान्तत्वसम्भवात् इति चेन्न ? द्रव्याभावत्वस्यापि घटनिरूपितप्रतियोगितावच्छेदकतया घटवदवृत्तिद्रव्याभाववान् इति ज्ञानीयद्रव्याभावत्वावच्छिन्नविषयितायाः घटाभावत्वानवच्छिन्नत्वेन घटनिरूपितप्रतियोगितावच्छेकावच्छिन्नत्वेन च ताद्दश्याः प्रतिबन्धकतावच्छेदकताया घटवत्त्वज्ञानप्रतिबन्धकत्वानवच्छेदकताद्दशविषयिताकत्वाभावेन व्यभिचाराप्रसक्त्या संशयपदवैयर्थ्यस्य दुर्वारत्वात् । नच यदभावत्वानवच्छिन्नयदभावविषयितायाम् तद्वदवृत्तित्वानवच्छिन्नत्वमपि निवेशनीयम्, तथाच घटवदवृत्तिद्रव्याभाववानितिज्ञानमादाय न दोष इति वाच्यम् ? तद्वदवृत्तित्वानवच्छिन्नत्वमधिकं निवेश्य घटवत्त्वज्ञाने व्यभिचारं सम्पाद्य तद्वारणाय यत्संशयेत्यादिदलसार्थक्यस्य प्रक्षालनाद्धि इतिन्यायेन अयुक्तस्यानुपदमेव वर्णितत्वात् । नच दृष्टान्तासिद्धिवारणाय तद्वदवृत्तित्वानवच्छिन्नत्वनिवेश आवश्यकः अन्यथा व्याप्त्यभावत्वानवच्छिन्नव्याप्तिमदवृत्तित्वावच्छिन्नव्याप्त्यभावविषयिताया अनुमितिप्रतिबन्धकतावच्छेदकतया स्वप्रतिबन्धकतानवच्छेदकताद्दशविषयिताकत्वाभावेनानुमितेर्दृष्टान्तत्वासम्भवादिति वाच्यम् ? अनुमितौ व्याप्तिमदवृत्तिधर्मवत्त्वज्ञानस्य प्रतिबन्धकत्वे मानाभावात् । अन्यथा तन्निवेशस्यावश्यकतया व्यावृत्तिसङ्गतिरिति ध्येयम् ।

कालीशङ्करास्तु— व्याप्त्यंशे तद्घटकपदार्थांशे वा भ्रमात्मकस्य व्याप्त्यभाववत्त्वज्ञानस्य व्याप्त्यभावत्वानवच्छिन्नस्वप्रतिबन्धकतावच्छेदकविषयताकतया दृष्टान्तासिद्धिर्दुर्वारैवेत्यतः स्वप्रतिबन्धकतावच्छेदकतानवच्छेदकयदभावत्वानवच्छिन्नविषयतानिष्ठयन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वसामान्यकत्वस्य सत्यन्तेन विवक्षणादेव सामञ्जस्यात् । तथाचाव्यभिचाराभावत्वानवच्छिन्नविषयितानिष्ठस्य अव्यभिचारनिरूपितप्रतियोगितावच्छेदकीभूतव्यभिचारत्वावच्छिन्नत्वस्याव्यभिचारग्रहप्रतिबन्धकतावच्छेदकतया सत्यन्तविरहान्न व्याप्तिग्रहे व्यभिचारः । अव्यभिचाराभावत्वानवच्छिन्ना या पूर्वक्षणवृत्तित्वविशिष्टाव्यभिचाराभावत्वावच्छिन्नविषयिता तन्निष्ठस्याव्यभिचारनिरूपितप्रतियोगितावच्छेदकीभूतपूर्वक्षणवृत्तित्वविशिष्टस्याव्यभिचारस्याभावत्वावच्छिन्नत्वस्याव्यभिचारधीप्रतिबन्धकतावच्छेदकतानवच्छेदकतया व्यभिचारतादवस्थ्यमतः सामान्यपदम् । तथाच सति निरुक्तप्रतियोगितावच्छेदकावच्छिन्नत्वसामान्यान्तर्गतव्यभिचारविषयितानिष्ठव्यभिचारत्वावच्छिन्नत्वस्यातथात्वान्न व्यभिचारः । घटाभावत्वानवच्छिन्नविषयितानिष्ठस्य घटनिरूपितप्रतियोगितावच्छेदकीभूततत्तद्व्यक्त्यभाव-

(गा० ) दीधितिकृतस्तु अन्योन्याभावादिगर्भव्याप्तिबुद्धौ अत्यन्ताभावादिगर्भव्यभिचारधियो विरोधित्वमस्वीकुर्वन्तो मणिमन्त्रादिवत् व्यभिचारज्ञानस्य प्रतिबन्धकत्वं नानुमन्यन्ते, अपितु ग्राह्याभावावगाहित्वेनैवेति न तेषां व्यभिचारसंशयस्य व्याप्तिनिश्चयप्रतिबन्धकतेति यथाश्रुतमेव साधु। उक्तव्याप्तावनुकूलतर्कमुपदर्शयति *तद्व्यतिरेकेति*। मात्रपदं कृत्स्नार्थकम्। हेतुत्वात् = हेतुत्वौचित्यात्। अन्यथा संशये स्वरूपयोग्यताकल्पनेन गौरवादित्याशयः।

---

(प्रभा) त्वावच्छिन्नत्वस्य घटविशिष्टधीप्रतिबन्धकतावच्छेदकतानवच्छेदकतया घटविशिष्टज्ञाने व्यभिचारवारणाय यत्संशयप्रतिवध्यत्वोपादानम्। व्याप्यभावत्वानवच्छिन्नविषयितानिष्ठस्य व्याप्तिनिरूपितप्रतियोगितावच्छेदकीभूततत्तद्व्यक्त्यभावत्वावच्छिन्नत्वस्यानुमितिप्रतिबन्धकतावच्छेदकतानवच्छेदकतया न दृष्टान्तासिद्धिः। यदभावत्वानवच्छिन्नत्वं च यदभावत्वविषयितानिरूपितत्वम्, भ्रमप्रमासाधारणयदभावत्वविषयतात्वेन वास्तवयदभावत्वविषयताया निरूपकतया न तदसंग्रहः। स्वप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमपि निवेशनीयम्, तेन द्रव्याभाववान् घटाभावान् इतिनिश्चयकालीनद्रव्याभाववद्भूतलमितिनिश्चयीयघटाभावत्वानवच्छिन्नविषयितानिष्ठस्य घटनिरूपितप्रतियोगितावच्छेदकीभूतद्रव्यत्वानवच्छिन्नत्वस्य घटविशिष्टधीप्रतिबन्धकतावच्छेदकतावच्छेदकत्वेऽपि न व्यभिचार इति संक्षेपतः प्राहुः।

दीधितिकृतस्त्विति। अयमाशयः, व्यभिचारस्य व्याप्तिसमसंख्याकत्वेनासमानाकारकव्यभिचारनिश्चयस्य न प्रतिबन्धकत्वम्। नापि मणिमन्त्रादिन्यायेन तत्त्वम्, किन्तु ग्राह्याभावावगाहितया। एवं च यथा घटसंशयस्यापि ग्राह्यसंशयत्वेन न घटज्ञानप्रतिबन्धकत्वम् तथा व्यभिचारसंशयस्यापि ग्राह्यसंशयत्वाविशेषेण न प्रतिबन्धकत्वम्। एवञ्च अत्यन्ताभावगर्भव्यभिचारग्रहकालेऽन्योन्याभावगर्भव्याप्तिग्रहोदयात् कथञ्चित् जायमानानुमितौ अप्रामाण्यग्रहसम्पादकत्वमेव। यथाश्रुतमेव साध्विति। तथाच ग्राह्यसंशयस्याप्रतिबन्धकतया अव्यभिचारव्यतिरेकज्ञानत्वस्य व्याप्तिज्ञानप्रतिबन्धकतायामसत्त्वेन व्यभिचारविरहेण यदभावत्वप्रकारकत्वनैयत्यविशेषणन्तन्मूलकं यदभावावगाहिताप्रयुक्तत्वविशेषणं च व्यर्थमेव। उक्तव्याप्ताविति। यद् यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिवध्यतावत् तत् तन्निश्चयजन्यमितिव्याप्तावित्यर्थः। अनुकूलतर्कमिति। तद्व्यतिरेकज्ञानप्रतिवध्यत्वं यस्य तस्य यदि तद्ज्ञानजन्यत्वं स्यात् तदा प्रतिबन्धकीभूतात् तत्संशयादपि कार्योत्पत्तिः स्यादित्याकारकः, यद्व्यतिरेकज्ञानसामान्यप्रतिवध्यत्वं यदि तन्निश्चयजन्यत्वव्यभिचारि स्यात्तदा संशयव्यापकानुत्पादप्रतियोगिवृत्ति न स्यात् इत्याकारको वा तर्कः। तथाच प्रवृत्तिः न प्रामाण्यज्ञानजन्या प्रामाण्यसंशयाजन्यत्वात् इत्यापाद्याभावेनापादकाभावसिद्धिः। प्रवृत्तिः प्रामाण्यनिश्चयजन्या न स्यात् प्रामाण्यव्यतिरेकज्ञानप्रतिवध्या न स्यात् इत्यपि तर्काकारः।

दीधितौ तन्निश्चयत्वेनैवेति। एवकारेण तज्ज्ञानत्वव्यवच्छेदः। अन्यथेति। तज्ज्ञानत्वेन हेतुत्वे इत्यर्थः। संशये इति। व्याप्त्यादिसंशये इत्यर्थः। नच यत्संशय-

( चि० म० ) तत्सन्देहे सत्यर्थसन्देहेन अर्थानिश्चयादेवाप्रवृत्तेः तत्र तयोरप्रतिबन्धकत्वादिति चेत् ? न

---

( दी० ) प्रवृत्तीति प्रकृताभिप्रायम् । यत्प्रतिबन्धकाविन्यर्थः । तत्सन्देह इति ।

---

( गा० ) इदमापाततः, कारणतावच्छेदकलाघवानुरोधेन फलानुपधायकसाधारणस्वरूपयोग्यताकल्पने क्षतिविरहात् । तद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकत्वे तज्ज्ञानत्वेन हेतुताकल्पनेऽपि क्षतिविरहादुक्तयुक्त्या निश्चयत्वेन हेतुतासिद्धेरसम्भवदुक्तिकत्वाच्च ।

विशेषतः प्रवृत्तेर्व्याप्तावन्तर्भावेऽनुमितेर्दृष्टान्तत्वासङ्गतिरिति विशेषतस्तदन्तर्भावो नाभिप्रेतः अपितु यत्त्वतत्त्वमात्रेणेत्याह *प्रवृत्तीति* । ननु प्रामाण्यसंशयदशायाम् अर्थानिश्चयादेव प्रवृत्त्यभावनिर्वाहात् प्रामाण्याभावज्ञानस्य कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वासिद्धेरुक्तानुमानं स्वरूपासिद्ध्या दुष्टमिति मूलोक्तं न सङ्गच्छते, प्रवृत्तावर्थनिश्चयस्येव प्रामाण्या-

---

( प्रभा ) यद्व्यतिरेकनिश्चययोर्यत्र प्रतिबन्धकता तत्र तद्व्यतिरेकज्ञानत्वेनैव हेतुता युक्ता नतु तन्निश्चयत्वेनेति वाच्यम् ? अभावस्य हेतुत्वपक्षे व्यतिरेकज्ञानस्य प्रतिबन्धकत्वे अप्रामाण्यनिश्चयानास्कन्दितत्वं निवेशनीयम् इति गौरवापत्तेः निश्चयस्य हेतुत्वेऽप्रामाण्यज्ञानानास्कन्दितत्वनिवेशेन लाघवात् । यद्वा व्याप्तिज्ञानाभावदशायां तद्व्यतिरेकज्ञानाभावसत्त्वेऽपि अनुमित्यनुत्पादात् प्रमात्वज्ञानजन्यत्वसिद्धावपि न क्षतिः, प्रमात्वसंशये सति प्रवृत्त्यनुत्पादेन स्वरूपयोग्यताकत्वकल्पनेऽपि न दोष इतः स्वाभिप्रेतार्थमाह गदाधरः इदमापातत इति । इदम् = निश्चयजन्यत्वम् । कारणतावच्छेदकलाघवानुरोधेनेति । निश्चयत्वेन कारणत्वे संशयान्यत्वज्ञानत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतावच्छेदकगौरवम्, । तदपेक्षया ज्ञानत्वस्य कारणतावच्छेदकत्वे लाघवमिति भावः । क्षतिविरहादिति । अस्य च असम्भवदुक्तिकत्वेन सम्बन्धः । तथाच यतः क्षतिविरहः अतः दीधितिकारोक्तयुक्त्या निश्चयत्वेन हेतुत्वसिद्धिरसम्भवदुक्तिकेति फलितार्थः । उक्तयुक्त्येति । तत्संशयात्तत्कार्यानुत्पत्तेरिति दीधितिकृद्युक्त्येत्यर्थः ।

माध्यमिकशङ्कां तटस्थो निराकुरुते तत्सन्देहे सति इतिचि०म० प्रयोजनवत्त्वज्ञानधर्मिकप्रामाण्यसन्देहे सतीत्यर्थः । अर्थसन्देहेनेति । अर्थनिश्चयोत्तरार्थसंशयम् प्रति अर्थनिश्चयधर्मिकाप्रामाण्यसंशयस्य हेतुतया इष्टसाधनत्वसन्देहस्यैवोत्पादेनेत्यर्थः । अर्थानिश्चयादेवेति । इदम् इष्टसाधनम् एव इत्याकारकनिश्चयाभावादेवेत्यर्थः । तत्र = प्रवृत्तौ । तयोः = प्रमात्वसंशयप्रमात्वव्यतिरेकनिश्चययोः । अप्रतिबन्धकत्वादिति । तथा च स्वरूपासिद्धिरितिभावः । इति चिन्तामणेः स्थूलार्थः ।

उक्तानुमानमिति । प्रवृत्तिः प्रामाण्यव्यतिरेकनिश्चयजन्या प्रामाण्यव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वादित्यनुमानमित्यर्थः । स्वरूपासिद्ध्येति ।

(दी०) क्लृप्तकारणसद्भावे यत्सत्त्वे कार्यानुत्पादः अनायत्या तस्यैव प्रतिबन्धकत्वं कल्प्यते, नचेह तथा।

---

(गा०) भावज्ञानाभावस्यापि कारणताग्राहकनियतान्वयव्यतिरेकसत्त्वेन कारणतायादुरपह्नवत्त्वादित्याशङ्कां निराकरोति *क्लृप्तेत्यादिना। तस्य प्रतिबन्धकत्वम्* = तदभावस्यानन्यथासिद्धत्वम् कल्प्यते। नचेह *तथेति*। प्रकृते क्लृप्तापरसकलकारणसत्त्वे प्रामाण्यसंशयादिसत्त्वे प्रवृत्त्यनुत्पाद इति नेत्यर्थः।

प्रामाण्यसंशयाद्यभावेऽपि विनाऽर्थनिश्चयमप्रवृत्तेः तद्धेतुताया आवश्यकत्वात्। प्रामाण्यसंशयदशायां च तदसत्त्वेनाप्रवृत्तेः इतरसकलकारणासम्पत्तेरिति भावः। तथाच नियतान्वयव्यतिरेकेऽपि प्रामाण्याभावज्ञानाभावस्यान्यथासिद्धत्वमेवेति न तज्ज्ञानस्य कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं शङ्कास्पदमपीति मूलसङ्गतिः।

अथार्थनिश्चयकाले तद्द्वितीयक्षणे वा यत्र प्रामाण्यसंशयः तत्र तादृशार्थनिश्चयद्वितीयक्षणे तत्तृतीयक्षणे वा प्रवृत्त्यापत्तिवारणाय प्रामाण्यसंशयस्य

---

(प्रभा) तथाचार्थनिश्चये यदि प्रमात्वसंशयो वर्त्तते तदार्थस्य संशय एव जायते, तत्सन्देहे च अर्थनिश्चयरूपकारणविरहादेव प्रवृत्त्यभावोपपत्तौ प्रवृत्तिम् प्रति प्रामाण्यव्यतिरेकज्ञानाभावस्याहेतुत्वात् कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य प्रामाण्यव्यतिरेकज्ञाने विरहाद् भवेत् स्वरूपासिद्धिरिति भावः।

तदसत्त्वेनेति। अर्थनिश्चयासत्त्वेनेत्यर्थः। अर्थनिश्चयोत्तरार्थसंशयम्प्रति अर्थनिश्चयधर्मिकप्रामाण्यसंशयस्य हेतुत्वेन प्रामाण्यसंशयस्य अर्थसंशयसम्पादकतया अर्थनिश्चयविरहप्रयोजकत्वादितिभावः। स्वरूपासिद्धिपरिहाराय प्रामाण्यसंशयस्य प्रतिबन्धकत्वं व्यवस्थापयति *अथेत्यादिना*। अयम् भावः, प्रवृत्तौ प्रमात्वव्यतिरेकज्ञानस्य प्रतिबन्धकत्वं यदि नाङ्गीक्रियते तदा घटादिरूपार्थनिश्चयक्षण एव तन्निश्चयधर्मिकसमूहालम्बनप्रमात्वसंशयो यदा तदा तादृशनिश्चयद्वितीयक्षणे प्रवृत्त्युत्पादापत्तिः, पूर्वक्षणेऽर्थनिश्चयादिघटितप्रवृत्तिकारणसमुदायस्य सत्त्वात्। अतः प्रामाण्यव्यतिरेकज्ञानस्यापि प्रवृत्तौ प्रतिबन्धकत्वं वाच्यम्, तथासति च पूर्वक्षणेऽर्थनिश्चयसत्त्वेऽपि प्रामाण्यव्यतिरेकज्ञानरूपप्रतिबन्धकस्य सत्त्वात् न प्रवृत्त्युत्पादापत्तिरिति। प्रामाण्यसंशय इति। प्रामाण्यव्यतिरेकनिश्चयस्यचेति शेषः। प्रामाण्यसंशयसामग्र्याः अर्थनिश्चयविरोधित्वेऽप्याह[1] तद्द्वितीयक्षणे वेति। प्रवृत्त्यापत्तिवारणायेति। तथाच प्रमाणतत्त्वज्ञानम् इष्टसाधनम् इति ज्ञानम् तादृशज्ञानधर्मिकप्रामाण्यसंशयस्य समूहालम्बनरूपं यत्र तत्र द्वितीयक्षणे प्रवृत्त्यापत्तिवारणाय, यत्र च क्रमेण तौ तत्र तृतीयक्षणे प्रवृत्त्यापत्तिवारणायेत्यर्थः।

नच कार्यसहभावेन अर्थनिश्चयस्य हेतुत्वोपगमात् नेयमापत्तिरिति वाच्यम्? तथासति यत्र प्रथममर्थनिश्चयः ततो द्वितीयक्षणे कुतश्चित् प्रतिबन्धकवशात् न प्रवृत्त्युत्पत्तिः तत्र तृतीयक्षणे प्रवृत्त्यभावापत्तेः। प्रामाण्यसंशयस्येति। प्रामाण्यव्यतिरेकज्ञानस्ये-

---

१ यदि प्रथमक्षणेऽर्थनिश्चयधर्मिकसंशयो वर्त्तते तदा अर्थसंशयसमुदायकारण-

( दी० ) नच प्रयोजकीभूताभावप्रतियोगित्वमेव वाच्यम्,

( गा० ) प्रतिबन्धकत्वमावश्यकमिति चेन्न ? अगृहीताप्रामाण्यकार्थनिश्चयत्वेन हेतुतयैव निर्वाहात्, गौरवेणाप्रामाण्यज्ञानाभावस्य पृथक् कारणत्वाकल्पनात्। मूले स्वरूपासिद्धिप्रदर्शनं दृष्टान्तासिद्धेरप्युपलक्षणं बोध्यम्।

प्रमात्वाभावग्रहाभावस्य प्रवृत्तिकारणत्वाभावेऽपि न स्वरूपासिद्धिः, अन्यविधप्रतिबन्धकताया एव विवक्षणीयत्वादित्याशङ्क्य निराचष्टे नचेति। यद्यपि प्रयोजकत्वमिदं न नियतपूर्ववृत्तित्वरूपम्, व्याप्त्यभावसंशयद्वितीयक्षणे व्याप्तिनिश्चयोत्पत्तौ तृतीयक्षणेऽनुमित्युत्पत्त्या व्याप्त्यभावग्रहाभावस्यानुमित्यप्रयोजकत्वेन दृष्टान्तासिद्धेः। नापि जनकजनकत्वम्, ग्राह्यसं-

( प्रभा ) त्यपि बोध्यम्। आवश्यकमिति। तथाच न स्वरूपासिद्धिरिति भावः। उत्तरयति इति चेन्नेति। तथाच अप्रामाण्यज्ञानविरहविशिष्टार्थनिश्चयत्वेन प्रवृत्तिकारणत्वोपगमात् न तादृशस्थले प्रवृत्त्युत्पादापत्तिः, तत्राप्रामाण्यज्ञानविशिष्टार्थनिश्चयसत्त्वेनाप्रामाण्यज्ञानविरहविशिष्टार्थनिश्चयरूपप्रवृत्तिकारणस्यासत्त्वादिति भावः।

कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्याङ्गीकारपक्षे प्रामाण्याभावज्ञानाभावस्याकारणत्वेन प्रामाण्याभावज्ञाने कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वविरहात् अस्तु स्वरूपासिद्ध्यवसरः किन्तु इदानीम् प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वमेवाङ्गीक्रियते, तथाच न स्वरूपासिद्धिः। प्रमाण्याभावज्ञानाभावविशिष्टार्थनिश्चयस्य प्रवृत्तिम् प्रति हेतुतायास्त्वयापि स्वीकृतत्वेन प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य तत्र सत्त्वात् प्रामाण्याभावज्ञानाभावस्याकारणत्वेऽपि कारणतावच्छेदकत्वेन प्रयोजकत्वेऽविवादात् इत्याशयेनाह प्रमात्वाभावग्रहाभावस्येति। अन्यविधप्रतिबन्धकताया एवेति। एवकारेण कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वव्यवच्छेदः। ननु प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वनिवेशेऽपि दृष्टान्तासिद्धिर्दुर्वारैव व्याप्तिव्यतिरेकसंशयस्य ग्राह्यसंशयत्वेन व्याप्तिज्ञानाविरोधित्वादन्यथोक्तरीत्या व्याप्तिनिश्चये व्यभिचारापत्तेः। एवञ्च व्याप्तिव्यतिरेकसंशयाभावस्यानुमितिप्रयोजकताया दुर्घटत्वात् नियतपूर्ववर्त्तित्वरूपप्रयोजकत्वविवक्षणे व्याप्तिव्यतिरेकसंशयस्य व्याप्तिज्ञानाप्रतिबन्धकत्वेऽपि व्याप्तिनिश्चयजन्यानुमितौ व्याप्तिव्यतिरेकसंशयाभावस्य नियतपूर्ववर्त्तिताया अक्षततया दृष्टान्तासिद्धिपरिहारेऽपि तस्य नियतपूर्ववर्त्तित्वमेव नास्तीत्याशंकते यद्यपीत्यादिना। अनुमित्यप्रयोजकत्वेनेति। अनुमितिपूर्वक्षणे व्याप्तिव्यतिरेकसंशया-

संवलनात् तदुत्तरमर्थसंशय एव भवति, प्रवृत्तिज्ञानयोरयौगपद्यात् तदानीम् प्रवृत्त्युत्पादनासम्भवादिति चेदत्राह तद्द्वितीयक्षण इति। तथाच प्रथममर्थनिश्चयः ततः तद्धर्मिकप्रामाण्यसंशयस्तदनु प्रवृत्त्यापत्तिः, प्रामाण्यसंशयक्षणेऽर्थनिश्चयकारणीभूतस्य कस्यचिद् विशेषणज्ञानस्य नाशादर्थनिश्चयतृतीयक्षणेऽर्थसंशयोदयासम्भवादिति भावः।

(गा०) शयस्याप्रतिबन्धकत्वेन तदभावस्यानुमितिजनकव्याप्तिनिश्चयाजनकत्वेनतद्दोषतादवस्थ्यात्। तथापि जनकतावच्छेदकप्रविष्टत्वमेव तत्, व्याप्तिसंशयभेदस्य निश्चयत्वघटकतयाऽनुमितिजनकतावच्छेदकत्वात्। व्याप्तिसंशयस्यानुमितिप्रतिबन्धकत्वान्न दृष्टान्तासिद्धिः। उक्तयुक्त्या अगृहीताप्रामाण्यकत्वस्य अर्थनिश्चयनिष्ठप्रवृत्तिहेतुतावच्छेदकताया आवश्यकत्वान्न स्वरूपासिद्धिः।

अथवा यन्निश्चयविरहविशिष्टस्य यद्धर्मिकयद्व्यतिरेकज्ञानस्याभावो यद्विशेष्यकयत्प्रकारकयज्जातीयकार्यनियताव्यवहितपूर्ववृत्तिः तद्धर्मिकतन्निश्चयः तद्विशेष्यकतत्प्रकारकतज्जातीयकार्यजनक इति समुदायार्थः।

---

(प्रभा) भावस्यासत्त्वेन अनुमितिनियतपूर्ववर्त्तित्वासिद्धेः। ग्राह्यसंशयस्येति। व्याप्तिव्यतिरेकसंशयस्येत्यर्थः। तदभावस्य = व्याप्तिव्यतिरेकनिश्चयाभावस्य। प्रयोजकत्वम्। व्याप्तिसंशयभेदस्य। व्याप्तिव्यतिरेकसंशयभेदस्य इत्यपि बोध्यम्। निश्चयत्वघटकतयेति। व्याप्तिनिश्चयत्वघटकतयेत्यर्थः। न दृष्टान्तासिद्धिरिति। व्याप्तिनिश्चयस्यानुमितौ हेतुत्वं निर्विवादम्, व्याप्तिनिश्चयत्वं च व्याप्तिसंशयान्यज्ञानत्वम् व्याप्तिव्यतिरेकसंशयान्यज्ञानत्वञ्च। एवञ्च व्याप्तिसंशयभेदवत् व्याप्तिव्यतिरेकसंशयभेदस्यापि अनुमितिकारणतावच्छेदकतया प्रयोजकीभूताभावप्रतियोगित्वरूपम् प्रतिबन्धकत्वं व्याप्तिव्यतिरेकसंशयस्याक्षतमिति न दृष्टान्तासिद्धिरिति भावः। स्वरूपासिद्धिम्परिहरति उक्तयुक्त्येति। अप्रामाण्यज्ञानानास्कन्दितार्थनिश्चयस्य प्रवृत्तौ हेतुत्वस्वीकारे प्रामाण्यव्यतिरेकज्ञानाभावविशिष्टार्थनिश्चयस्य प्रवृत्तिहेतुत्वपर्यवसायितया प्रामाण्यव्यतिरेकज्ञानाभावेऽपि कारणतावच्छेदकत्वरूपप्रयोजकत्वसत्त्वेन प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वसत्त्वादिति भावः।

यन्निश्चयविरहेति। धूमधर्मिकव्याप्तिनिश्चयविरहविशिष्टस्येत्यर्थः। यद्धर्मिकयद्व्यतिरेकज्ञानस्याभावः = धूमधर्मिकव्यतिरेकज्ञानस्याभावः। यद्विशेष्यकयत्प्रकारकयज्जातीयकार्यनियताव्यवहितपूर्ववृत्तिः = पर्वतविशेष्यकवह्निप्रकारकधूमलिंगकानुमितित्वजातीयकार्यनियताव्यवहितपूर्ववृत्तिः। तद्धर्मिकतन्निश्चयः = धूमधर्मिकव्याप्तिनिश्चयः। तद्विशेष्यकतत्प्रकारकतज्जातीयकार्यजनकः = पर्वतविशेष्यकवह्निप्रकारकधूमलिंगकानुमितित्वजातीयकार्यजनकः। एवम् यागधर्मिकप्रयोजनवत्त्वज्ञानधर्मिकप्रामाण्यनिश्चयविरहविशिष्टस्य यागधर्मिकप्रयोजनवत्त्वज्ञानधर्मिकप्रामाण्यव्यतिरेकज्ञानस्याभावः यागविशेष्यकयागत्वप्रकारकप्रवृत्तित्वजातीयकार्यनियताव्यवहितपूर्ववृत्तिः, अतः यागधर्मिक-

---

१. न दृष्टान्तासिद्धिरिति। नच व्याप्तिव्यतिरेकज्ञानसामान्यस्य प्रतिबन्धकत्वमसिद्धम् विरोधावगाहिव्याप्तिव्यतिरेकज्ञानस्यैव निश्चयत्वघटकतया कारणतावच्छेदकत्वेन विरोधावगाहिव्याप्तिव्यतिरेकज्ञानस्यैव प्रतिबन्धकत्वादिति वाच्यम्, विरोधावगाहिव्यतिरेकज्ञानस्यैव व्याप्तौ निवेशनीयत्वात्।

( गा० ) व्याप्त्यभावसंशयद्वितीयक्षणोत्पन्नव्याप्तिनिश्चयात् यत्र तदनन्तरक्षणेऽनुमितिः तत्र तत्पूर्वक्षणे विशेषणाभावाद् विशिष्टाभावोऽक्षत एवेति न दृष्टान्तासिद्धिः ।

एतेन अप्रामाण्यग्रहाभावस्य कारणतावच्छेदकत्वोपगमे विशेष्यविशेषणभावे विनिगमनाविरहात् तस्य कारणत्वमपि अनपवादमिति कारणीभूताभावप्रतियोगित्वघटितहेतुरप्यविकल इति प्रयोजकताघटितसाधनानुसरणाशंकाया असंगतिरिति दूषणमनवकाशम् ।

---

( प्रभा ) प्रयोजनवत्त्वज्ञानधर्मिकप्रामाण्यनिश्चयः यागविशेष्यकयागत्वप्रकारकप्रवृत्तित्वजातीयकार्यजनकः । प्रकृते च प्रमाणतत्त्वज्ञानधर्मिकनिःश्रेयससाधनत्वप्रकारकनिश्चयविरहविशिष्टस्य तादृशनिश्चयधर्मिकप्रामाण्यव्यतिरेकज्ञानस्याभावः प्रमाणतत्त्वज्ञानधर्मिकतादृशज्ञानत्वप्रकारकप्रवृत्त्यव्यवहितपूर्ववर्त्ती तादृशनिश्चयधर्मिकप्रामाण्यनिश्चयः तादृशप्रवृत्तिजनक इति । तथाच यद्विशेष्यकयत्प्रकारकयज्जातीयं यत् कार्यम् स्वनियताव्यवहितपूर्ववर्त्तियन्निश्चयविरहविशिष्टयद्धर्मिकयद्व्यतिरेकज्ञानाभावकं तत् तद्धर्मिकतन्निश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावदिति पर्यवस्यति ।

यन्निश्चयविरहविशिष्टस्यानुपादाने दृष्टान्तासिद्धिः[1] सामान्यतो धूमधर्मिकव्याप्तिव्यतिरेकज्ञानाभावस्य तादृशानुमितित्वजातीयकार्यनियताव्यवहितपूर्ववर्त्तित्वाभावात् अतस्तदुपादानमित्याशयवानाह व्याप्त्यभावसंशय इत्यादि ।

अत्र व्यतिरेकज्ञाने यद्धर्मिकत्वानिवेशे घटादिधर्मिकव्याप्तिव्यतिरेकज्ञानस्य प्रकृतहेतुभिन्नधर्मिकत्वात् तदभावस्य अनुमितिनियतपूर्ववर्त्तित्वाभावेन दृष्टान्तासिद्धिः, अन्यधर्मिकाप्रामाण्यज्ञानसत्त्वेऽपि[2] प्रवृत्त्युत्पत्त्या प्रामाण्यव्यतिरेकज्ञानाभावस्य प्रवृत्त्यव्यवहितपूर्ववर्त्तित्वाभावात् स्वरूपासिद्धिश्च स्यादतस्तन्निवेशः । साध्यकोटौ तद्विशेष्यकत्वानिवेशे सामान्यतोऽनुमितित्वजात्यवच्छिन्ने कस्यापि व्याप्तिव्यतिरेकज्ञानाभावस्य नियतपूर्ववर्त्तित्वाभावात् दृष्टान्तासिद्धिरिति तद्विशेष्यकेत्युक्तम् । पटादिनिश्चयाजन्यघटादिज्ञानाव्यवहितपूर्वमपि कदाचित् पटादिनिश्चयविरहविशिष्टपटव्यतिरेकज्ञानाभावसत्त्वात्

---

१ धूमधर्मिकव्याप्तिनिश्चयाजन्यान्यलिङ्गकानुमितौ व्यभिचाराद् धूमलिङ्गकानुमितेर्दृष्टान्तता बोध्या ।

२. इष्टसाधनत्वज्ञानधर्मिकप्रामाण्यनिश्चयविरहविशिष्टेष्टसाधनत्वज्ञानधर्मिकाप्रामाण्यज्ञानाभावग्रन्थाध्ययनविशेष्यकतादृशाध्ययनत्वप्रकारकप्रवृत्तित्वजातीयनियताव्यवहितपूर्ववर्त्तीति तादृशप्रवृत्तित्वजातीयम् तादृशाध्ययनंजन्यमिति तत्र साध्यहेत्वोः सत्त्वनिर्वाहः ।

( दी० ) अप्रयोजकत्वात्, यत्तदर्थयोरननुगमाच्चेतिभावः ।

---

( गा० ) अप्रयोजकत्वादिति । प्रामाण्यव्यतिरेकज्ञानाभावस्य अर्थनिश्चयनिष्ठकारणतावच्छेदकतया अर्थसंशयकारणाभावतया अर्थनिश्चयसम्पादकत्वेन वा प्रवृत्तावपेक्षणीयत्वेन तत एवातिप्रसङ्गभङ्गे प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वास्वीकारेऽनिष्टप्रसङ्गरूपविपक्षवाधकाभावादित्यर्थः । अप्रयोजकत्वं च कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकताया हेतुघटकतापक्षेऽपि वोध्यम् ।

---

( प्रभा ) व्यभिचारवारणाय नियतत्वनिवेशः[1] । प्रथमजातीयपदानुपादाने[2] व्याप्त्यभावज्ञानाभावविषयकमानसप्रत्यक्षव्यक्तौ व्यभिचारः । आत्मविशेष्यकताहशाभावविषयकप्रत्यक्षवृत्तित्वावच्छिन्नम्प्रति व्याप्तिव्यतिरेकज्ञानाभावस्यापि विषयविधया नियतपूर्ववर्त्तितया तत्प्रत्यक्षव्यक्तौ हेतुसत्त्वेऽपि व्याप्तिनिश्चयजन्यत्वरूपसाध्यस्य विरहात् । द्वितीयजातीयपदम् हेतुघटकसाध्यघटकीभूतंजात्योरेकत्वलाभार्थम् । यद्वा ईश्वरीयप्रमात्वनिश्चयनिष्ठजनकतानिरूपितकार्यत्वावच्छिन्नजन्यतामादाय सिद्धसाधनवारणाय द्वितीयं जातीयेति ।

अप्रयोजकत्वादिति दीधितिः । प्रवृत्तिर्यदि प्रामाण्यनिश्चयजन्या न स्यात् तर्हि प्रामाण्यव्यतिरेकज्ञानप्रतिवध्या न स्यात् इत्याकारकानुकूलतर्कासम्भवादित्यर्थः । तथा च यत्संशययद्व्यतिरेकनिश्चयौ यत्प्रयोजकीभूताभावप्रतियोगिनौ तन्निश्चयस्तद्धेतुरिति व्याप्तिरप्यप्रयोजिकेत्यर्थः ।

प्रामाण्यव्यतिरेकज्ञानाभावस्येति । अप्रामाण्यज्ञानाभावविशिष्टार्थनिश्चयस्य कारणतयेत्यादिः । अर्थसंशयकारणाभावतयेति । ननु विनिगमकाभावादर्थनिश्चयविशिष्टप्रामाण्यव्यतिरेकज्ञानाभावस्य हेतुत्वमेवास्त्वित्यतः पूर्वकल्पम्परित्यज्य कल्पान्तरमाह अर्थसंशयेत्यादि । अर्थसंशयस्य कारणीभूतो यः प्रामाण्यसंशयः तदभावतयेत्यर्थः । अर्थसंशयसामग्र्यभावतयेति यावत् ।

---

१. यत्किञ्चिद्घटादिव्यक्तिमादाय तद्व्यक्तिनियताव्यवहितपूर्वं व्याप्तिनिश्चयविरहविशिष्टव्याप्तिव्यतिरेकज्ञानाभावसत्त्वाद् व्याप्तिनिश्चयाजन्यतद्व्यक्तौ व्यभिचारवारणाय प्रथमजातीयेति अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वलाभाय ।

२. अत्र नियतत्वकथनेन यद्धर्मिकयद्व्यतिरेकज्ञानस्याभावे व्यापकत्वमावश्यकमिति सूचितम् । तथाच व्यापकत्वानिवेशे 'काशीमरणान्मुक्तिः' इतिज्ञानधर्मिकप्रामाण्यनिश्चयविरहविशिष्टस्य काशीमरणान्मुक्तिरितिव्याप्तिव्यतिरेकज्ञानाभावस्यापि कदाचित् यागत्वप्रकारकयागविशेष्यकप्रवृत्तित्वजातीयकार्यपूर्ववर्त्तितया अथ च तत्र यागप्रवृत्तिजनकत्वाभावेन व्यभिचारापत्तिरतो व्यापकत्वार्थकनियतत्वनिवेश इत्यपि केचित् ।

( चि० म० ) प्रामाण्यसंशयानन्तरम् इदम् इत्थमेवेत्यवधारणस्य निष्कम्पप्रवृत्त्यङ्गस्य प्रामाण्यनिश्चयाधीनत्वात् ।

( दी० ) अभ्युपेत्य समाधत्ते प्रामाण्येति । तथाच कारणत्वाभावेऽप्यवश्यमपेक्षणीयत्वमितिभावः ।

(गा०) अनुमाने दूषणान्तरमाह यत्तदर्थयोरिति । तथाच यत्पदेन प्रामाण्योपादाने दृष्टान्तासिद्धिः, व्याप्त्युपादाने च स्वरूपासिद्ध्यादिः ।

ननु प्रामाण्याभावज्ञानाभावस्य उक्तयुक्त्याऽर्थज्ञाननिष्ठकारणतावच्छेदकत्वं विनिगमनाविरहभयेन स्वतन्त्रकारणत्वं वाऽवश्यमङ्गीकर्त्तव्यम्, तथाच प्रामाण्यनिश्चयस्यैव हेतुना युक्तेति हेतुविधयैव प्रामाण्यनिश्चयापेक्षाया एव सम्भवादर्थनिश्चयसम्पादकतया तदपेक्षाभिधानं प्रामाण्यसंशयानन्तरमित्यादिना मणिकृतो न युक्तमित्यत आह अभ्युपेत्येति । परेण व्यवस्थाप्यमानं प्रामाण्यनिश्चयस्य प्रवृत्त्यहेतुत्वमभ्युपेत्यैवेत्यर्थः । समाधत्ते = प्रामाण्यनिश्चयापेक्षां व्युत्पादयति । अथवा प्रवृत्तौ प्रामाण्यनिश्चयानपेक्षायामपि नन्वित्याद्याक्षेपकर्त्तुरभिप्रेतया प्रमात्वस्य प्रमाणतत्त्वघटकतया तदवधारणे प्रमात्वावधारणापेक्षयैवोद्देश्यसिद्धेः प्रवृत्तौ प्रामाण्यनिश्चयस्य परम्परयापेक्षणीयत्वव्यवस्थापनमयुक्तमित्याशंक्याह अभ्युपेत्येति । प्रवृत्तौ प्रामाण्यनिश्चयापेक्षयैव तदसम्भवेन शास्त्रस्य निःश्रेयसोपयोगित्वानिर्वाह इत्येव स्वाभिप्रेतमिति स्वीकृत्यैवेत्यर्थः । इदमित्थमेवेत्यर्थनिश्चये प्रामाण्यनिश्चयापेक्षायामपि प्रवृत्तौ तत्कारणत्वासिद्धौ नोद्देश्यसिद्धिरित्याशङ्कां निराकुरुते तथाचेति । अवश्यापेक्षणीयत्वं कारणसम्पादकतया । तादृशापेक्षायामपि तदसम्भवे शास्त्रश्रवणे प्रवृत्त्यनुपपत्त्या शास्त्रस्य निष्फलत्वे नाक्षेपसङ्गतेरिति भावः

( प्रभा ) ननु निरुपाधिकत्वमेव प्रयोजकत्वमित्याशंक्याह यत्तदर्थयोरिति ।

तटस्थमतम् पुनर्माध्यमिको निराचिकीर्षति इदमित्थमिति चिन्तामणिः । तथाच सफलप्रवृत्तिम् प्रति इदमित्थमेवेत्यवधारणात्मकज्ञानस्य जनकतया तस्य च प्रामाण्यनिश्चयाधीनत्वेन अवश्यन्तस्य प्रवृत्तावपेक्षणीयतया तम् विना प्रवृत्तेरनुत्पादापत्तिरितिप्रामाण्यनिश्चयस्य स्वतो वा परतो वाऽसम्भवात् पूर्वपक्षसङ्गतिरिति । उक्तयुक्त्येति गादाधरी । अर्थनिश्चयकाले तद्द्वितीयक्षणे वा यत्र प्रामाण्यसंशयस्तत्र प्रवृत्त्यापत्तिवारणायेत्यादिपूर्वोक्तयुक्त्येत्यर्थः । विनिगमनाविरहभयेनेति । विशेष्यविशेषणभावे विनिगमनाविरहभयेनेत्यर्थः । कारणतावच्छेदकगौरवादित्यपि शेषः ।

ननु इत्याद्याक्षेपमन्यथा बुद्ध्वा कृताया अथकिमित्याशङ्कायाः स्वाभिप्रायप्रकटनेनैव निरसितुं शक्यत्वात् तत्प्रकटनमेव कथं न कृतमित्याशंक्याह अथवेति । नन्वित्याद्याक्षेपकर्तुः = माध्यमिकस्य । तदवधारणे = प्रमाणतत्वावधारणे । तदसम्भवेन = प्रामाण्यावधारणासम्भवेन । आक्षेपसङ्गतेरिति । तथाच ग्रन्थाध्ययनधर्मिकप्रयोजनवत्त्वज्ञानधर्मिकप्रमात्वनिश्चयविरहेण कथं निःश्रेयससाधनप्रमाणतत्त्वज्ञानजनकत्वरूपपरम्परया शास्त्रस्य निःश्रेयसरूपफलसम्बन्धित्वमिति मूलाक्षेपसङ्गतेरिति भावः ।

---( चि० म० ) ननु[1] स्वत एवास्तु तन्निरूपणम् ?

( दी० ) स्वतः = स्वस्मात् स्वकीयात् । तत्र स्वप्रकाशतया[2] तेनैव तत्प्रामाण्यं गृह्यते इति गुरवः ।

( गा० ) ननु स्वत एवेति मीमांसकत्रयस्यैव प्रत्यवस्थानम्, ननु गुरोरेव मिश्रभट्टयोरेव वा मतत्रयसाधारणविप्रतिपत्तेरग्रे दर्शनीयत्वात्, अनुव्यवसायेनानुमित्या स्वप्रकाशेन वा गृह्यते इत्यादिना मतत्रयसाधारणस्वतस्त्वस्य व्यवस्थापनीयत्वाच्च,[3] एवं च स्वपदस्य प्रामाण्याश्रयमात्रपरत्वे तदीयमात्रपरत्वे वा न मतत्रयसाधारण्यमतस्तदुभयपरतया व्याचष्टे स्वत इति । *स्वस्मादिति* । प्रामाण्याश्रयव्यवसायादित्यर्थः । *तन्निरूपणमिति* मूलस्य च प्रामाण्यव्यवहार इत्यर्थः, तावता च व्यवसायस्यैव स्वप्रामाण्यविषयकत्वलाभः, तावतैव व्यवहर्त्तव्यज्ञानविधया प्रामाण्यव्यवहारहेतुतायाःस्वस्य निर्वाहात् । एतच्च गुरुमतानुसारेण । मिश्रभट्टयोरनुसारेणाह *स्वकीयादिति* । स्वप्रयोज्यादित्यर्थः । मिश्रमते व्यवसायजन्योऽनुव्यवसाय एव तत्प्रयोजकतया विवक्षितः, भट्टमते च व्यवसायजन्यज्ञाततारूपहेतुजन्यानुमितिरेवेति मतद्वयोपसंग्रहः ।

( प्रभा ) मीमांसकत्रयस्यैवेति । गुरुमिश्रभट्टाख्यत्रयस्येत्यर्थः । अतः = मतत्रयसाधारण्यायेतिभावः । तदुभयपरतया = स्वपरतया स्वकीयपरतया चेत्यर्थः ।

पूर्वग्रन्थेन प्रवृत्तिम् प्रति प्रामाण्यनिश्चयस्य अपेक्षणात् तस्य स्वतः परतो वाऽसम्भवेन तदनुपपत्तिस्तदवस्थैवेति माध्यमिकमतमुपन्यस्तम् । इदानीम् मीमांसकमतनिरासद्वारा माध्यमिकमतं निराचिकीर्षुः मीमांसकमतमुत्थापयति चिन्तामणौ नन्वित्यादिना ।

---

१ स्वत इति मूले स्वपदमात्मपरम्, प्रकृते चात्मपदेन प्रामाण्याश्रय एव । प्रयोज्यत्वम् पञ्चम्यर्थः, तत्पदस्य च प्रकृतपरामर्शकतया तन्निरूपणमित्यत्र तत्पदेन प्रामाण्यस्य परामर्शः, निरूपणं व्यवहारः सच इदं ज्ञानम्प्रमा इत्याकारकशब्दप्रयोगरूपः, एवकारोऽन्ययोगव्यवच्छेदार्थः, तथाच स्वेतरप्रयोजकतानिरूपितप्रयोज्यत्वाभाववत्त्वे सति स्वप्रयोज्यतावान् प्रामाण्यव्यवहार इति न युक्तम् ? प्रामाण्याश्रयव्यवसायेतरेण संवादिप्रवृत्तिजनकत्वलिंगकानुमित्यापि मीमांसकैरपि प्रामाण्यनिश्चयेन प्रमात्वव्यवहारस्वीकारात् । किंतु अयोगव्यवच्छेदार्थकं एवेह एवकारः, तथाच प्रमाण्याश्रयनिष्ठप्रयोजकतानिरूपितप्रयोज्यत्वसम्बन्धाभावाभाववान् प्रामाण्यव्यवहार इत्येव बोधः ।

२ स्वप्रकाशतया प्रामाण्यं गृह्यते इति गुरव इति दीधितिः । स्वप्रकाशतया इत्यत्र तृतीयार्थः प्रयोज्यत्वम्, तेनैव इत्यत्र तृतीयार्थोऽभेदः, तथाच स्वप्रकाशताप्रयोज्यतदभिन्नग्रहविषयतावत् प्रामाण्यम् ।

३ व्यवस्थापनीयत्वाच्चेति । पंचमविप्रतिपत्तौ चिन्तामणौ 'विशेष्ये तद्धर्मवत्त्वं च व्यवसायस्य अनुव्यवसायेनानुमित्या स्वप्रकाशेन वा गृह्यते' इत्यादिना व्यवस्थापितत्वं बोध्यम् ।

(गा०) केचित्तु *तन्निरूपणम्* = प्रामाण्यग्रहः। *स्वस्मात्* = व्यवसायात्, व्यवसायप्रयोज्य इति यावत्, सच मिश्रमतेऽनुव्यवसायरूपः, भट्टमते ज्ञाततालिंगकानुमितिरूपः। गुरुमतानुसारेणाह *स्वकीयादिति*। स्वोत्पत्तिप्रयोजककारणसमुदायादित्यर्थः। एतावता स्वसामग्रीजन्यत्वेन स्वस्यैव स्वप्रामाण्यग्रहरूपता लभ्यते इति व्याचक्रुः। तच्चिन्त्यम्[1]? तथा सति 'तत्र स्वप्रकाशतया' इत्यादिना प्रथमतो गुरुमतविवरणस्यायुक्तत्वापातात्। *स्वप्रकाशतया* = व्यवसायस्य स्वविषयकतया। *तेनैव प्रामाण्यं गृह्यत इति*। तस्यैव प्राथमिकज्ञानग्रहत्वात् सर्वेषामेव मीमांसकानाम् प्राथमिकज्ञानग्राह्यतायाः स्वतो ग्राह्यतारूपत्वादिति भावः।

---

(प्रभा) तावताचेति। निरूपणपदस्य प्रामाण्यव्यवहारपरतया चेत्यर्थः। व्यवसायस्य प्रामाण्यविषयकत्वे हेतुमाह तावतैवेत्यादि। तावतैव = व्यवसायस्य प्रामाण्यविषयकत्वेनैवेत्यर्थः। स्वस्य = व्यवसायस्य। निर्वाहादिति। अत्रायमाशयः, तद्व्यवहारम् प्रति तज्ज्ञानस्यैव कारणतया प्रामाण्याश्रयीभूतव्यवसायात्मकं ज्ञानम् प्रामाण्यविषयकं न स्याच्चर्हि तस्य प्रामाण्यरूपव्यवहर्त्तव्यविषयकज्ञानत्वाभावात् प्रामाण्यव्यवहारहेतुतैव न स्यात्। तस्मात् प्रामाण्यव्यवहारहेतुत्वसिद्धये प्रामाण्यविषयकत्वं व्यवसायस्याङ्गीकर्त्तव्यमिति भावः। एतच्चेति। व्यवसायस्य प्रामाण्यविषयकत्वं चेत्यर्थः। मतद्वयोपसंग्रह इति। तथा च प्रामाण्याश्रयो व्यवसायः तज्जन्योऽनुव्यवसायः तत्प्रयोज्यः प्रामाण्यव्यवहार इति भट्टमते व्यवसायजन्या ज्ञातता तज्जन्यप्रथमज्ञानविषयकानुमितिः तज्जन्यःप्रामाण्यव्यवहार इति फलितम्। एतेन च मिश्रमतेऽनुव्यवसायस्य प्रामाण्यविषयकत्वम्, भट्टमते च ज्ञातताlिङ्गकानुमितेः प्रामाण्यविषयकत्वमित्यागतम्, तयोरेव व्यवहर्त्तव्यज्ञानस्वरूपत्वात्। स्वस्मादिति। मिश्रभट्टमतानुसारेणैवोक्तम् इति जगदीशमतमुपक्षिपति केचित्तु इति। सच = प्रामाण्यग्रहश्च। अयुक्तत्वापातादिति। स्वस्मादित्यादिना मिश्रभट्टयोरेव मतयोः संग्रहे पूर्वम् मिश्रभट्टमतयोर्निरूपणस्यैवावश्यकतया गुरुमतस्य तु मिश्रभट्टमतनिरूपणानन्तरं निरूपणौचित्येन प्रथमं तन्मतनिरूपणस्यायुक्तत्वापातादित्यर्थः।

तत्रेतिदीधितिः। मतत्रये इत्यर्थः। स्वप्रकाशतयेति। स्वम् व्यवसायः तद्विषयकतयेत्यर्थः। तथाच गुरूणाम् मते स्वविषयकत्वमेव ज्ञानस्य स्वप्रकाशत्वम्। तन्मते चक्षुस्संयोगाद्यनन्तरम् अयं घटः घटमहं जानामि इत्याकारकप्रत्यक्षस्यैवोत्पत्त्या

---

१ तच्चिन्त्यमितिगादा०। निपूर्वकरूपधातोः ज्ञानानुकूलव्यापार एव शक्तिःनतु ज्ञाने, तथाच निरूपणपदस्य ज्ञानार्थकत्वं जगदीशोक्तमयुक्तमिति केचित् चिन्ताबीजमाचक्षते तन्न सम्यक्? व्यापारांशमोषपूर्वकम् ज्ञानमात्रे लक्षणया तदर्थकल्पने बाधकाभावात्। अत एव भट्टाचार्येण प्रसिद्धमेतं दोषम्परित्यज्य दोषान्तरानुधावनं कृतम्, अन्यथा तन्न्यूनत्वस्य दुर्वारत्वात्।

(प्रमा) 'मितिमातृमेय' एतत्त्रितयविषयकत्वमेव। तत्र च ज्ञानम् स्वस्वरूपतया स्वं गृह्णाति, आश्रयतया चात्मानं विषयतया च घटम् अवगाहते। दीधितौ तेनैवेति। व्यवसायेनैवेत्यर्थः। तथा च व्यवसायस्य स्वप्रकाशतया तेनैव तद्ग्रहणे तद्गतप्रमात्वस्य ग्रहणात् सिद्धं स्वतोग्राह्यत्वम्। ननु ज्ञानस्य स्वप्रकाशत्वे मानाभावः ज्ञानस्य तद्गतप्रामाण्यस्य वा ज्ञानान्तरग्राह्यत्वे तादृशज्ञानान्तरस्य तद्गतप्रामाण्यस्य वा ग्रहार्थम् पुनर्ज्ञानान्तरापेक्षणेऽनवस्था स्यात् अतः स्वप्रकाशरूपतायामेव तन्मतप्रसरात्। तस्यैव = व्यवसायस्यैव।

प्राथमिकज्ञानग्रहत्वादितिगा०। ननु प्राथमिकत्वं ज्ञाने ज्ञानग्रहे वा विशेषणम्? यदि च ज्ञाने तर्हि मीमांसकानाम् प्राथमिकज्ञानविषयकग्रहविषयत्वस्यैव प्रमात्वे स्वतोग्राह्यत्वेन "विषयनिरूपितं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः" इति सिद्धान्तेन तृतीयतुरीयज्ञानयोरपि प्रथमज्ञानविषयकग्रहरूपतया तद्विषयत्वम् अयं घट इत्याकारकप्रथमज्ञानगतप्रमात्वेऽपि ततो लभ्येत यच्च न सिद्धान्तसंगतम्। मीमांसकैः घटमहं जानामीत्याकारकानुव्यवसायमात्रेणैव अयं घट इत्याकारकज्ञानगतप्रमात्वग्रहणाङ्गीकारात् नतु तृतीयचतुर्थज्ञानाभ्याम्। अतः प्राथमिकत्वस्य ज्ञानग्रहे एवान्वयः। तथा च प्राथमिको यो ज्ञानग्रहः तत्त्वादिति तदर्थः। ज्ञानग्रहे प्राथमिकत्वं च ज्ञानग्रहविशिष्टान्यत्वम्, वैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वध्वंसकालीनत्वैतदुभयसम्बन्धेन। मुरारिमिश्रमते अनुव्यवसायो हि प्राथमिको ज्ञानग्रहः तत्र लक्षणसमन्वयश्चेत्थम्-स्वम् चैत्रीयानुव्यवसायरूपो ज्ञानग्रहः तत्सामानाधिकरण्यस्य तद्ध्वंसकालीनत्वस्य च तृतीयतुरीययोर्ज्ञानयोः सत्त्वेन तयोस्तद्विशिष्टतया तदन्यत्वस्यानुव्यवसाये सत्त्वात्। चैत्रीयप्रथमानुव्यवसायो हि न केनापि ज्ञानग्रहेण विशिष्ट इति तत्र ज्ञानग्रहविशिष्टभेदस्सुलभ एव। स्वसामानाधिकरण्यानुपादाने ज्ञानग्रहपदेन मैत्राद्यनुव्यवसायमादाय चैत्रीयानुव्यवसायस्यापि तद्विशिष्टत्वापत्तिः। द्वितीयसम्बन्धानुपादाने स्वपदेन तृतीयादिज्ञानग्रहमादाय तद्वैशिष्ट्यस्य प्राथमिकानुव्यवसाये सत्त्वेन तस्यापि प्राथमिकज्ञानग्रहत्वानुपपत्तिः।[1]

प्राथमिकज्ञानग्राह्यताया इति। गुरुमते ज्ञानग्रहो व्यवसाय; मिश्रमतेऽनुव्यवसायः, भट्टमते ज्ञाततालिङ्गकानुमितिःतद्विषयताया इत्यर्थः। अयमाशयः, गुरुमते ज्ञानमात्रस्य यथार्थत्वेन अप्रमात्मकं ज्ञानमेव नास्ति इति या सामग्री ज्ञानं जनयिष्यति सैव तादृशज्ञाने प्रामाण्यमपि ग्राहयिष्यति, तन्मते ज्ञानत्वस्य ज्ञानधर्मिकप्रामाण्यज्ञानत्वस्य च समनियततया समनियतधर्मावच्छिन्नकार्योत्पादिका सामग्री समनियतधर्मान्तरावच्छिन्नकार्योत्पादिकेति सिद्धान्तात्। तथाच गुरुमते अयं घटः घटमहं जानामि इत्याकारकज्ञानस्य जायमानत्वेन स्वस्यैव स्वनिष्ठप्रामाण्यविषयकतया तद्विषयत्वस्य प्रमात्वे सत्त्वेन प्राथमिकज्ञानग्राह्यत्वरूपस्वतस्त्वोपपत्तेः।

मिश्रमते च चक्षुस्संयोगाद्यनन्तरम् यद् घट इत्याकारकं व्यवसायात्मकं ज्ञानन्तद्विषयकं यद् घटमहं जानामि इत्यनुव्यवसायात्मकं लौकिकमानसप्रत्यक्षं तद्विषयत्वस्य प्रमात्वे सत्त्वेन तादृशस्वतस्त्वोपपत्तिः।

---

१ तस्यैव प्राथमिकज्ञानग्रहत्वादिति। अत्र प्राथमिकं यज् ज्ञानन्तद्ग्रहेति।

( चि० म० ) तथाहि तत्र विप्रतिपत्तयः—

( दी० ) तदनुव्यवसायेनेति मिश्राः ।

( गा० ) *तदनुव्यवसायेनेति* = तद्विषयकलौकिकमानसेनेत्यर्थः । तत्प्रा-

(प्रभा) भट्टमते च ज्ञानमतीन्द्रियम् अतो न मिश्रमतवत् अनुव्यवसायेन प्रामाण्यभानोपपत्तिःकिन्तु ज्ञानेन विषये ज्ञाततानामकः कश्चिद् धर्मविशेषो जन्यते सच ज्ञातो घट इति-प्रतीतिसाक्षिको विषयताविशेषः प्राकट्यापरपर्यायो वा,तथा च ज्ञाततया ज्ञानमनुमीयते। तथाच प्रयोग इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानसाध्या घटवृत्तिघटत्वप्रकारकज्ञाततात्वात् या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञान'साध्या यथा पटे पटत्वप्रकारकज्ञातता पटविशेष्यकपटत्वप्रकारकज्ञानसाध्येति सामान्यतो व्याप्तिराश्रीयते । अत्र व्याप्तौ यत्त्वतत्त्वप्रवेशेन एकोपादानेऽन्यस्यासंग्रहः स्यादितिचेत्तर्हि घटवृत्तिघटत्वप्रकारकज्ञाततात्वं यत्र तत्र घटविशेष्यकघटत्वप्रकारकज्ञानसाध्यतात्वरूपेण विशेषणात् । अत्र दृष्टान्तः पटविशेष्यकपटत्वप्रकारकज्ञानानन्तरजन्यज्ञातता । प्राथमिकघटत्वादिप्रकारकप्रमासाध्यत्वसाधकानुमितौ च जन्मान्तरानुभूतव्याप्तिस्मरणमेव गतिः । एवञ्च अपूर्वचैत्रत्वादिप्रकारघटितप्रामाण्यविषयकानुमित्यनुपपत्तिरेवेति एतन्मते दूषणमेव । अतीतानागतविषयज्ञानेन ज्ञाततायाः एवाजननात् । असन्निकृष्टविषयकानुमित्यादिना ज्ञातताजननेऽपि तस्याःप्रत्यक्षासम्भवात् ज्ञानान्तरोपायाभावात् लिङ्गज्ञानासम्भवात् भट्टमते ज्ञानस्यातीन्द्रियत्वेऽपि ज्ञातताप्रत्यक्षसिद्धेति व्यवसायेन द्वितीयक्षणे ज्ञाततायां जनितायां तृतीयक्षणे घटत्वप्रकारकत्वेन तत्प्रत्यक्षे जायमाने घटवृत्तिभानस्यावश्यकतया प्रमात्वापकतावच्छेदकप्रकारेण हेतुग्रहध्रौव्यम् ।

ननु ज्ञातताप्रकारेण भासमाने घटे घटत्वभानेऽपि ज्ञाततायां घटवृत्तित्वं न भासते, व्यवसायद्वितीयक्षणे ज्ञातो घट इत्येव प्रत्यक्षोदयात् इति कुतो दर्शितहेतुग्रहनैयत्येन ज्ञातता-लिङ्गकानुमित्या प्रमात्वग्रहोक्तिसंगतिः इतिचेन्न ? अयंघटो घटत्वेन ज्ञात इति प्रत्यक्षे च घटे ज्ञाततावत्त्वमिव ज्ञाततायां घटवृत्तित्वस्यापि भानात् आधारत्वाधेयत्वयोः समानसंवित्-संवेद्यत्वात् प्रत्यक्षस्थले तदुभयभासकसामग्रीसमनैयत्येन तत्सम्भवात् ।

दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरित्यग्रे व्यक्तीभविष्यति । एवंच उक्तरीत्या ज्ञाततालिङ्गकानुमितिविषयत्वस्य प्रमात्वे सत्त्वात् स्वतोग्राह्यत्वसिद्धिः ।'

तदनुव्यवसायेनेति दीधितिः । तृतीयार्थोऽभेदः तस्य गृह्यत इत्यत्र ग्रहेऽन्वयः, तदनुव्यवसायेन तत्प्रामाण्यमित्यत्र च तत्पदेन व्यवसायग्रहणम् तथाच तदनुव्यवसायाभिन्नज्ञानविषयीभूतं ज्ञाननिष्ठप्रामाण्यमित्यर्थः । स्वोत्तरवर्त्तिस्वविषयकलौकिकप्रत्यक्षविषयीभूतं स्वनिष्ठप्रामाण्यम् इति यावत् । तद्विषयकलौकिकमानसेनेति । लौकिकत्वनि-

यथार्थत्वेनेति । सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात् सम्प्रतिपन्नप्रत्ययवत् इत्यन्यत्र विस्तरः ।

(दी०) ज्ञानस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमित्येतिभट्टाः ।

(गा०) माण्यं गृह्यते इत्यनुषज्यते। एवमग्रेऽप्यनुषङ्गो बोध्यः। उपनीतप्रामाण्यस्य न्यायमतेऽपि ज्ञानमानसे भानाल्लौकिकत्वविशेषणम्। नच ज्ञानांशे लौकिक-मानसेऽपि उपनीतप्रामाण्यभानात् तद्विशेषणेनापि न न्यायमताद् विशेष इति वाच्यम्, स्वांशे लौकिकत्वस्य विवक्षणीयत्वात्। तच्च स्वविषयकज्ञाना-जन्यत्वम्। स्वाश्रयग्राह्यत्वरूपगुरुमतसिद्धस्वतस्त्वेऽपि स्वविषयकज्ञाना-जन्यत्वेन स्वाश्रयो विशेषणीयः, अन्यथा प्रामाण्याश्रयज्ञानेऽपि कदाचिदुपनीत-प्रामाण्यभानस्य न्यायमतसिद्धतया तद्विशेषापत्तेः। *ज्ञानस्यातीन्द्रियतयेति*।

(प्रभा) वेशस्य फलमाह उपनीतप्रामाण्यस्येति। प्रमितो घट इत्याद्याकारकज्ञाने ज्ञानलक्षणया भासमानस्येत्यर्थः। न्यायमतेऽपीति। प्रामाण्यस्य स्वतस्त्वानङ्गीकर्त्तृमतेऽपि। ज्ञान-मानस इति। उक्तालौकिकज्ञानमानस इत्यर्थः। अयम्भावः, नैयाकिमतेऽपि अद्य अयं घट इतिज्ञानानन्तरं सफलप्रवृत्तौ सत्याम् इदं ज्ञानम् प्रमा संवादिप्रवृत्तिजनकत्वात् इत्यनुमित्या-त्मकप्रमात्वानुभवजन्यसंस्कारवशात् प्रमात्वस्मरणरूपज्ञानलक्षणया नैयायिकैरपि प्रमात्वस्य भानमङ्गीक्रियते इति न्यायमतसाधारणतया तदविशेषापत्तिरिति लौकिकत्वविशेषणम्। तथाच प्रमितो घट इत्याकारकज्ञानस्य प्रमात्वांशेऽलौकिकतया तद्व्यावृत्तिः। ननु प्रमितो घटःप्रमात्वकालीनघटज्ञानवानहमित्यादिज्ञानानामपि ज्ञानांशे लौकिकत्वमेव तादृशज्ञानेषु ज्ञानभानम्प्रति मनस्सन्निकर्षस्यैव प्रयोजकत्वेन ज्ञानलक्षणासन्निकर्षस्य अप्रयोजकतया लौकिकमानसपदेनापि तद्ग्रहणेन तद्विषयत्वस्य प्रमात्वे सत्त्वेन लौकिकत्वोपादानेऽपि नो न्यायमतवैलक्षण्यमित्याशङ्कते नचेति। उत्तरयति स्वांश इति। अंशो विषयित्वम्, तथाच स्वविषयकत्वावच्छेदेन यत् लौकिकत्वं तद्विशिष्टमानसप्रत्यक्षविष-यत्वम् मिश्रमते स्वतोग्राह्यत्वम्। तच्चेति। प्रामाण्यांशे लौकिकत्वं चेत्यर्थः। स्ववि-षयकज्ञानाजन्यत्वमिति। स्वम् प्रामाण्यम्। तथाच उपनीतस्थले प्रामाण्यभान-स्य ज्ञानलक्षणासन्निकर्षप्रयोज्यतया तादृशज्ञानस्य प्रामाण्यज्ञानाजन्यत्वविरहात्। अनुव्यवसाये तु न प्रामाण्यविषयकज्ञानजन्यत्वम्, तस्यैव प्रामाण्यविषयकत्वेन स्वस्य स्वजन्यत्वविरहात्। अत्र स्वाश्रयविषयकं यत् स्वाश्रयं तदादाय गुरुमतादविशेषापत्तेः। ननु एवमपि कदाचिदुपनीतप्रामाण्यभानस्य न्यायमतसिद्धतया गुरुमतस्य न्यायमतादविशे-षापत्तिः इत्याशंक्याह स्वाश्रयग्राह्यत्वरूपेति। स्वम् प्रमात्वम्, मिश्रमते स्वाश्रयज्ञान-ग्राह्यत्वस्य स्वतस्त्वरूपत्वेऽपि गुरुमते ज्ञानानिवेशेऽनुचितगौरवापत्तेरित्याशयेन स्वाश्रय-ग्राह्यत्वमुक्तम्। अन्यथा = स्वविषयकज्ञानाजन्यत्वानिवेशे, तदविशेषापत्तेः = न्यायमताद-विशेषापत्तेः।

ज्ञानस्यातीन्द्रियतयेति। भट्टानामयमाशयः, यत्सविकल्पकं ज्ञानमपि न प्रत्यक्षं यदि सविकल्पस्य प्रत्यक्षं स्यात्तर्हि निर्विकल्पस्यापि प्रत्यक्षं दुर्निवारं स्याज्ज्ञानत्वाविशेषात्। तथाच निर्विकल्पकस्य प्रत्यक्षवारणाय निष्प्रकारकत्व-निर्विशेष्यकत्व-निस्संसर्गकत्वादीनां त्रयाणां विनिगमकाभावेन प्रतिबन्धकत्वकल्पने गौरवापत्तेः।

(प्रभा) नच विशिष्टवैशिष्ट्यप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुतया तदभावान्न निर्विकल्पकप्रत्यक्षापत्तिरिति वाच्यम्, विशेष्ये विशेषणमिति रीत्या एकत्रोभयमितिरीत्या वा तादृशप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वाभावेन तद्रीत्या निर्विकल्पकप्रत्यक्षापत्तेर्दुर्वारत्वात्। एवञ्च गुरुभूतप्रतिबध्यप्रतिबन्धकभावकल्पनमपेक्ष्य आत्मनिष्ठगुणप्रत्यक्षे तादात्म्येन ज्ञानस्यैव धर्माधर्मभावनानामिव ज्ञानभावनाऽदृष्टसाधारणवैजात्यं कल्पयित्वा तज्जात्यवच्छेदेनैव प्रतिबन्धकत्वकल्पनमुचितम्। जानामीत्यनुभवानामपि अनुभवामीत्युपनीतभानत्वम्। एवञ्च विषयनिष्ठज्ञाततया तन्निष्ठज्ञानमेवानुमीयते घटो ज्ञानवान् ज्ञाततावत्त्वात् इति। तत्र घटत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन ज्ञानानुमितौ तादृशप्रकारतानिरूपितविशेष्यतारूपप्रामाण्यग्रहः। नच ज्ञाततायाः प्रमात्वाव्याप्यतया तदनुमापकत्वासम्भव इति वाच्यम्, प्रमात्वस्याननुमेयत्वात् ज्ञानानुमाने समानसंवित्संवेद्यतया ज्ञानत्ववत्प्रमात्वस्यापि स्वतस्त्वसम्भवात्। न च ज्ञाततायाम्मानाभावः, तस्या विषयज्ञानातिरिक्तायाः आवश्यकत्वात्। तथाहि विषयता न तावज् ज्ञानस्वरूपा, घटप्रकारकभूतलविशेष्यकज्ञानाद् भूतलप्रकारकघटविशेष्यकानुव्यवसायापत्तेः। नापि विषयस्वरूपा, विशिष्टज्ञानसमूहालम्बनज्ञानयोर्वैलक्षण्यापत्तेः। अत उभयातिरिक्ता सा नित्या लाघवात्।

अन्यथा अनन्ततत्तद्विषयकज्ञानैरनन्ततत्तद्विषयतोत्पत्तिनाशकल्पने गौरवापत्तेः। एवञ्च नष्टयुधिष्ठिरादिविषयकज्ञानोत्पत्तिरपि सुलभेति युक्तम्।

अन्ये तु ज्ञातताविषये एव मातुः तत्तज्ज्ञानजन्या तत्तद्विषयनिष्ठा ज्ञातता सा च नष्टभाविविषयनिष्ठाऽपि। नचासतोर्नष्टभाविनोः कथं कार्योत्पत्तिरिति वाच्यम्, द्वित्वादिकमिव तदुत्पत्तौ बाधकाभावात्। नच तत्र नष्टद्वित्वस्य स्मरणमिति वाच्यम्, अननुभूततद्द्वित्वस्य स्मरणानुपपत्तेः। नच यावदाश्रयप्रत्यक्षं विना कथं द्वित्वप्रत्यक्षमिति वाच्यम् लाघवेन संयोगप्रत्यक्षे तस्य हेतुत्वाङ्गीकारेण व्यासज्यवृत्तिधर्मप्रत्यक्षे तस्य हेतुत्वाभावेन तत्प्रत्यक्षस्य सुवचत्वात्। वायुप्रत्यक्षाभावेऽपि तद्गतस्पर्शप्रत्यक्षस्य त्वयाङ्गीकारात्। अतो द्वित्वबहुत्वयोर्भाविभूतपदार्थनिष्ठत्ववत् तज्ज्ञानोत्पाद्यविषयताया अपि भाविभूतपदार्थनिष्ठत्वम्। नच द्वित्वादिगुणस्य समवायिकारणाभावेन भाविभूतयोः कथमुत्पत्तिरिति वाच्यम्, समवायेन भावकार्योत्पत्तौ तादात्म्येन द्रव्यस्य जनकता इति समवायिकारणकार्यभावस्यैव वक्तव्यत्वेन संख्यायाःपदार्थान्तरत्वेन विषयतावत् समवायेनोत्पत्त्यभावात् समवायिकारणानावश्यकत्वात् संख्याया विषयतायाश्चाभावं जानामीति, अभावौ द्वौ, चतुर्विंशतिर्गुणा इतिप्रतीत्या अभावादिनिष्ठतया स्वरूपसम्बन्धेनैवोत्पत्त्यङ्गीकारेण समवायिकारणानावश्यकत्वात्।

न च द्वित्वादीनामाकस्मिकत्वप्रसङ्गः, अपेक्षाबुद्धेरेव जनकतया नियामकत्वात्। अपेक्षाबुद्धेरपि व्यंजकत्वे तु नित्यतया न तदापत्तिप्रसङ्गोऽपि।

कार्यसमवेतगुणत्वेनानित्यत्वानुमानात्कथं नित्यत्वमिति वाच्यम्, एकत्वेनाङ्गीकृतारूपव्यक्तिषु व्यभिचारात् अनुकूलतर्काभावेनाप्रयोजकत्वाच्च। नचाश्रयाभावे विषयता-

( दी० ) तत्र = मतत्रयसाधारणस्वतस्त्वे ।

---

( गा० ) एतेन भट्टानां ज्ञाततालिङ्गकानुमितेर्मिश्रमतसिद्धानुव्यवसायवत् प्राथमिकज्ञानग्रहरूपतेति सूचितम् , तेन न्यायमतेऽपि अनुमित्या प्रामाण्यं गृह्यते, परन्तु तन्मते ज्ञाततायाः अप्रसिद्धतया तल्लिङ्गकानुमित्या ग्राह्यत्वासम्भवः, एवञ्च ज्ञाततायामेव विवादपर्यवसानम् नतु स्वतोग्राह्यत्व इति दृश्यानवकाशः ।

नच ज्ञाततालिङ्गकानुमितिग्राह्यत्वे ज्ञानातीन्द्रियत्वस्याप्रयोजकतया ज्ञानस्यातीन्द्रियतयेति हेत्वनन्वयः, अनुमित्येत्यस्य सावधारणपरतया तल्लभ्यप्रत्यक्षाग्राह्यत्वे हेत्वन्वयस्य विवक्षितत्त्वात् । मूलस्थं तत्रेत्युपादाय व्याचष्टे *मतत्रयसाधारणस्वतस्त्व इति* । एतेन प्रथमावधि विप्रतिपत्तित्रयस्य मतत्रयसाधारण्यं मूलस्थतच्छब्दलभ्यमेवेति तदभिधानमयुक्तमिति निरस्तम् । तुरीयविप्रतिपत्तेः प्रत्येकमेवेत्यनेन यथा एकमतसिद्धस्वतस्त्वकोटिकत्वमभिहितम् तथा प्रथमादिविप्रतिपत्तीनां मतद्वयमात्रासिद्धस्वतस्त्वादिकोटिकत्वशङ्कावारणाय युक्तं त्रितयसिद्धस्वतस्त्वकोटिकत्वाभिधानम्, तद् विना न्यूनत्वस्यापरिहारः । *तत्रेति* । सप्तम्यर्थविषयतायाःसंशयजनकवाक्यरूपविप्रतिपत्तिपदार्थैकदेशे संशयेऽन्वयो वोध्यः ।

---

( प्रभा ) द्वित्वादेःक्वावस्थानमिति वाच्यम्, कपालादिनाशे क्षणमात्रं घटादेरिव विषयताया अपि सत्त्वे वाधकाभावात् । अतो नष्टघटादावपि घटो ज्ञातइत्यनुभवात् भूतभाविनिष्ठत्वमित्यन्यत्र विस्तरः ।

एतेनेति । ज्ञानातीन्द्रियत्वकथनेनेतिभावः । एवञ्च = अनुमितिग्राह्यत्वे च । दृश्यानवकाशः = पूर्वपक्षानवकाशः । भट्टमते ज्ञानस्यातीन्द्रियत्वेऽपि विवादादिति तात्पर्यम् । इदमुपलक्षणम्, मीमांसकमते स्वाश्रयज्ञानग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वम्, तच्च नैयायिकमते न सम्भवति, तादृशग्रहत्वस्यानुव्यवसायेऽपि सत्त्वात् तत्र प्रामाण्यविषयिताया अभावादिति ध्येयम् ।

ननु ज्ञानं ज्ञाततालिङ्गकानुमितिग्राह्यमित्यत्रातीन्द्रियत्व हेतुरप्रयोजकः, ज्ञानस्य ऐन्द्रियकत्वेऽपि अनुमितिग्राह्यत्वसम्भवात् इत्याशङ्कते नचेति । तल्लभ्येति अवधारणलभ्येत्यर्थः । तथाच प्रत्यक्षाग्राह्यत्वांशे अतीन्द्रियत्वस्य प्रयोजकतया प्रत्यक्षाग्राह्यत्वविशिष्टतादृशानुमितिग्राह्यत्वम् प्रत्यपि तत्प्रयोजकत्वसम्भवः ।

---

अत्रेदं वोध्यम् । गुरुमिश्रयोर्मते विषयोपधानेनैव ज्ञानभानात् विषयानुपधानेन ज्ञानप्रत्यक्षस्यालीकतया विषयपुरस्कारेण तद्भानात् भट्टमते च ज्ञाततालिंगकानुमितावपि तथैवांगीकारात् प्रमाण्यघटकीभूतघटघटत्ववतद्वैशिष्ट्यभानेन प्रामाण्यभानस्य निरावाधत्वादिति ।

( चि० म० ) ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा ?

---

( दी० ) विचाराङ्गसंशयजननीविप्रतिपत्तीराह ज्ञानेत्यादिना ।

---

( गा० ) विप्रतिपत्तेरुपयोगितां दर्शयितुमाह *विचारांगेति* । विचारो जल्पः विपरीतोद्भावकपरविजिगीषया न्यायप्रयोगरूपः, जिज्ञासासम्पादनेन तदंगस्य तदुपयोगिनो मध्यस्थसंशयस्य जननीरित्यर्थः । अत्र च नन्वित्यादिवक्तुर्मीमांसकस्यैव न 'तथाहि' इत्याद्यभिधानम् तथासति विधिकोटिमात्रस्य तदभिधेयतया निषेधादिबोधक 'नवा' इत्याद्यभिधानासङ्गतेः, स्वसंशयज्ञापनाय मध्यस्थस्यैव तथाभिधानौचित्यात् इति 'स्वत एवास्तु तन्निरूपणम्' इत्यनन्तरम् 'इतिमीमांसकानां स्वमतपरिष्कारेण नैयायिकेन विचारप्रसक्तिः' इतिपूरणीयम्, तथाच ग्रंथकृत एवोक्तिरियम् । तथाच स एव विचारो विप्रतिपत्त्यभावे न घटत इत्यालोच्य ग्रन्थकृतैव 'तथाहि' इत्यादिना विप्रतिपत्तयो दर्शिताः । उत्तरवत् पूर्वपक्षोऽपि परिष्करणीय इत्यवधेयम् ।

पक्षे ज्ञानपदोपादानं प्रामाण्यपदस्य प्रमाकरणत्वार्थपरत्वभ्रमनि-

---

( प्रभा ) तदङ्गस्य = विचाराङ्गस्य । तदुपयोगिनः = विचारोपयोगिनः । नन्वित्यादिवक्तुरिति । ननु स्वत एवास्तु निरूपणमित्यादिवक्तुरित्यर्थः । तदभिधेयतया = नन्वित्यादिवक्तुरभिधेयतया । उत्तरवत् = उत्तरग्रन्थवत् । पूर्वपक्षः = पूर्वपक्षग्रन्थः । पूर्वपक्षग्रंथस्य यथावदनिरूपणे पूर्वपक्षस्य यथावदज्ञाने सति उत्तरस्य (उत्तरग्रंथस्य) यथार्थतोऽज्ञेयत्वेनानुपादेयत्वापत्तेरिति भावः ।

पक्षे = पक्षबोधकवाक्ये इत्यर्थः, तेन अर्थरूपस्य पक्षस्य ज्ञानपदघटितत्वाभावेऽपि न क्षतिः । प्रमाकरणत्वार्थपरत्वेति । प्रमाकरणत्वबोधेच्छयोच्चरितत्वभ्रमे इत्यर्थः । सच भ्रमःप्रामाण्यपदमनेन प्रमाकरणत्वबोधेच्छयोच्चरितम् इत्याकारकः । निरासपरतयेति । ननु तस्य निरासस्तन्निवृत्तिःसाच यदि ध्वंसरूपा तर्हि तृतीयक्षणे स्वत एव तद्ध्वंसस्य सिद्धतया तदर्थं ज्ञानपदोपादानादिप्रयासस्य व्यर्थत्वापत्तिरतःप्रमाकरणत्वार्थपरत्वभ्रमनिरासः प्रमाकरणत्वार्थभ्रमेऽप्रामाण्यग्रहसम्पादनम्, तादृशभ्रमप्रतिबन्धो वा । तथा च पक्षघटकप्रामाण्यपदम् प्रमाकरणत्वबोधेच्छयोच्चरितं स्यात् तर्हि स्वसमभिव्याहृतपदार्थान्वितार्थबोधकं स्यात्, नचैवम्, तस्मात् प्रमाकरणत्वबोधेच्छयोच्चरितत्वाभाववत् स्वसमभिव्याहृतपदार्थान्वितार्थबोधकत्वाभावात् इत्याद्यनुमानेन प्रमाकरणत्वार्थपरत्वभ्रमप्रतिबन्धःतादृशभ्रमेऽप्रामाण्यग्रहो वा सम्भवति । स्वम् प्रामाण्यपदम् तत्समभिव्याहृतं पदं ज्ञानपदम् तदर्थः ज्ञानवृत्तित्वम् तदन्वितोऽर्थः प्रमाकरणत्वरूपः तद्बोधकत्वाभावादित्यर्थः ।

---

ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीग्राह्यं ज्ञानमात्रवृत्तिधर्मत्वाद् ज्ञानत्ववदित्यादिकमन्यत्राधिकमनुसन्धेयम् ।

( दी० ) अत्र च तात्पर्यवशात् तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टं ज्ञानं प्रशब्दोपसंहितेन माधातुना प्रत्याय्यते, भावल्युटा च तादृशज्ञानत्वम्, करणल्युटा तादृशज्ञानकरणत्वं तद्धितान्तेनोपस्थाप्यते, तत्र तादृशज्ञानकरणत्वस्य निरासाय ज्ञानेति सावधारणम्। तच्च न ज्ञानत्वनियतम्,

---

(गा०) रासपरतया सार्थक्यिष्यन् तत्पदस्य प्रमात्वतत्करणत्वोभयार्थकतां व्युत्पादयति *अत्रचेति*। अत्र = पञ्चबोधके ज्ञानप्रामाण्यपदे। ज्ञानेतिपदं ज्ञानकरणत्वनिरासाय, तात्पर्यभ्रमविषयितावारणायेत्यन्वयः। तद्वति तत्प्रकारकत्वरूपं याथार्थ्यमिवान्योऽपि प्रकर्षः प्रशब्दार्थ इति कुतोऽस्यैव लाभ इत्यत आह *तात्पर्यवशादिति*। माधातुपूर्वप्रशब्दस्य याथार्थ्यरूपप्रकर्ष एवानादितात्पर्यादित्यर्थः। प्रशब्दस्य वाचकत्वे विवादात् पदत्वं सविवादमिति प्रशब्देत्यभिधानम्। तदुपसन्धानं च तदव्यवहितोत्तरत्वम्। *माधातुना* = ज्ञानत्वविशिष्टार्थकमाधातुना। तद्धितान्तेनेत्यस्य भावल्युटा करणल्युटा इत्युभयत्र सम्बन्धः तद्धितश्च भावार्थकःष्यञ्प्रत्ययः तस्य प्रकृत्यर्थतावच्छेदकबोधकत्वव्युत्पत्तेरितिभावः। *तत्र* = तयोरर्थयोर्मध्ये। ज्ञानपदादेव कथं तन्निरास इत्यपेक्षायामाह *सावधारणमिति*। ज्ञानस्यैव यत्प्रामाण्यमित्यर्थपरम्। *तच्च* = प्रमाकरणत्वं च। *न ज्ञानत्वनियतम्* = न ज्ञानमात्रवृत्ति इत्यर्थः। तथाच प्रमाकरणत्वे समभिव्याहृतज्ञानमात्रवृत्तित्वान्वयानुपपत्त्या प्रामाण्यपदे तत्परत्वभ्रमनिरासः। गङ्गायां घोष इत्यादौ प्रवाहे घोषाद्यन्वयानुपपत्त्या गङ्गापदे तत्परत्वभ्रमनिरा-

---

(प्रभा) तत्पदस्य = प्रामाण्यपदस्येत्यर्थः। अन्योऽपि = विशेष्यावृत्त्यप्रकारकत्वरूपोऽगृहीताप्राहित्वरूपोऽर्थीत्यर्थः। अस्यैव लाभ इति। तद्वति तत्प्रकारकत्वस्य लाभ इत्यर्थः। तात्पर्यादिति। प्रवृत्तिम् प्रति तद्वति तत्प्रकारकत्वरूपप्रमात्वग्रहस्य हेतुतया तादृशप्रकर्ष एवानादितात्पर्यादिति भावः। तात्पर्येऽनादित्वं च स्वप्रागभावाधिकरणकालत्वव्यापकस्वसमानविषयकतात्पर्यकत्वम्। ईश्वरीयतात्पर्यमादाय समन्वयो बोध्यः। आधुनिकलक्षणास्थलीयतात्पर्ये व्यापकत्वस्वसमानविषयकत्वनिवेशः। गङ्गायां घोष इत्यत्र तात्पर्येऽनादित्वम्।

दीधितौ ज्ञानेतीति। ज्ञानपदानुपादाने प्रामाण्यस्यैव पक्षत्वे बाधः, प्रमात्वे स्वतोग्राह्यत्वसत्त्वेऽपि प्रमाकरणत्वे स्वतोग्राह्यत्वाभावादिति भावः। कथन्तन्निरास इति गादा०। तादृशज्ञानकरणत्वस्य व्याप्तिज्ञानादिषु सत्त्वात् तत्र ज्ञानवृत्तित्वस्य अक्षतत्वादितिभावः। न ज्ञानमात्रवृत्तीति। प्रमाकरणत्वस्य मनश्चक्षुरादीन्द्रियेष्वपि सत्त्वात्। उभयविधार्थे शक्तिकल्पने गौरवेण एकविधार्थे एव शक्तिकल्पनस्यौचित्यम्, तत्र च करणरूपार्थे एव प्रमाणशब्दस्य भूरिशःप्रयोगदर्शनात् तत्र शक्तिकल्पनस्य युक्ततया प्रमात्वरूपेऽर्थे गंगादिपदवत् अन्वयाद्यनुपपत्त्यधीना लक्षणैवेति सूचितं गङ्गायां घोष इत्यादिना।

( दी० ) मनःप्रभृतिवृत्तित्वात् ।

---

(गा०) सर्वादितिभावः । *मनःप्रभृतीति* । यद्यपि परामर्शादिनिष्ठमनुमित्यादिप्रमाकरणत्वं ज्ञानत्वनियतमेव तथापि विशेष्यतावच्छेदकावच्छेदेन विशेषणान्वयस्यौत्सर्गिकत्वात् प्रमाकरणत्वत्वावच्छेदेन ज्ञानत्वनैयत्यान्वयानुपपत्त्या तद्वति तत्प्रकारकज्ञानत्वत्वावच्छेदेन तदन्वयसम्भवेन तत्परतैव गृह्यत इति भावः ।

अथैवं ज्ञानस्यैव इत्यवधारणपरत्त्वादरो व्यर्थः, मनःप्रभृतिनिष्ठज्ञानकरणतायाः परामर्शादिनिष्ठकरणतातो भिन्नतया तत्र ज्ञानवृत्तित्वस्य बाधेन प्रमाकरणतापरत्वभ्रमनिरासासम्भवादिति चेत् सत्यम्, सावधारणमित्यस्य अन्वयितावच्छेदकावच्छेदेन स्वार्थसम्बन्धपरमित्यर्थः, तच्च न ज्ञानत्वनियतमित्यस्य तत्त्वं च न ज्ञानवृत्तित्वव्याप्यमित्यर्थ इति न दोषः । एतेन ज्ञानप्रामाण्यपदस्य ज्ञानस्यैव यत् प्रामाण्यमित्यर्थपरत्वनिर्णायकाभावात् नोक्तभ्रमनिरासासम्भवः, नह्यवच्छेदकावच्छेदेनान्वयपरतावदेतादृशार्थपरताया अपि औत्सर्गिकत्वमित्यपि परास्तम् ।

---

( प्रभा ) ननु करणत्वं न जातिर्जातावपि सत्त्वात् किन्तु उपाधिरेव, एवञ्च परामर्शनिष्ठकरणतायाःमनःप्रभृतिनिष्ठकरणतातो भिन्नतया तादृशपरामर्शनिष्ठकरणताया ज्ञानत्वव्याप्यत्वमेवेति भाव इत्याह यद्यपीति । समाधत्ते तथापीति । असति बाधके उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासते इति नियमादित्यर्थः ।

एवमिति । असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्वीकारे इति भावः । अन्वयितावच्छेदकावच्छेदेन' स्वार्थसम्बन्धपरम् इति । अन्वयितावच्छेदकावच्छेदेन = प्रामाण्यत्वावच्छेदेन । स्वम् ज्ञानपदम्-तदर्थो ज्ञानवृत्तित्वम्. तत्सम्बन्धः ज्ञानवृत्तित्वप्रतियोगिकस्वरूपसम्बन्ध इत्यर्थः । तथाच प्रमाकरणत्वत्वव्यापकत्वम् न ज्ञानवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धे । ज्ञानवृत्तित्वव्याप्यमिति । एतेन तुल्यवित्तिवेद्यतया उद्देश्यतावच्छेदकव्यापकत्वस्य विधेयसंसर्गे भानमिव विधेयव्याप्यत्वमपि उद्देश्यतावच्छेदके भासते । एतेनेति । अन्वयितावच्छेदकावच्छेदेन स्वार्थसम्बन्धपरत्वमङ्गीकृत्य ज्ञानवृत्तित्वव्याप्यत्वार्थकरणेनेत्यर्थः ।

---

अन्वयितावच्छेदकेति । अन्वयि प्रामाण्यम्, अन्वयितावच्छेदकम् प्रामाण्यत्वम् स्वार्थसम्बन्धपरमिति । स्वम् ज्ञानपदम् तदर्थः ज्ञानवृत्तित्वम्, सम्बन्धश्च व्याप्तिरूपोऽत्र ज्ञानवृत्तित्वव्याप्तिपरमिति संघातार्थः । तत्त्वं चेति = प्रमाकरणत्वत्वं चेति । तथा च ज्ञानपदोपादाने प्रामाण्यत्वे ज्ञानवृत्तित्वव्याप्यत्वलाभे प्रमाकरणत्वरूपार्थो नात्र प्रामाण्यपदेन विवक्षितः, प्रमाकरणत्वत्वरूपान्वयितावच्छेदके ज्ञानवृत्तित्वव्याप्यत्वविरहात्, प्रमाकरणत्वत्वस्य अन्वयितावच्छेदकरूपस्य मनोनिष्ठप्रमाकरणत्वेऽपि सत्त्वेन तत्र ज्ञानवृत्तित्वविरहात् । एवञ्च उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इति व्युत्पत्तिबललभ्य एव तादृशोऽर्थ इति ध्वनितम् ।

( गा० ) यत्तु प्रमात्वप्रमाकरणत्वयोःप्रामाण्यपदार्थत्वव्युत्पादनं तेन रूपेण पक्षत्वमिति प्रदर्शनाय, 'तादृशज्ञानकरणत्वस्य निरासाय' इति तस्य व्यावर्त्तनायेत्यर्थः । तथाच ज्ञानमात्रवृत्तिप्रामाण्यपदार्थत्वेन ज्ञानान्यवृत्तितानवच्छेदकप्रामाण्यपदार्थतावच्छेदकवत्त्वेन पक्षत्वात् प्रमाकरणत्वत्वरूपप्रामाण्यपदार्थतावच्छेदकस्य च मनःप्रभृतिवृत्तित्वावच्छेदकत्वात् न प्रमाकरणत्वस्य पक्षान्तर्भाव इति नांशतो बाधादिरिति व्याख्यानम्, तन्न ? तथासति ज्ञानपदस्य करणव्युत्पत्त्या ज्ञानजनकार्थकत्वात् तत्समभिव्याहारेणापि न भ्रमनिरास इत्याशङ्काया असम्भवेन ज्ञानपदस्य ज्ञप्तादेव भूरिप्रयोगदर्शनात् न ज्ञानकरणत्वपरत्वशङ्केत्यर्थपराया ज्ञानपदेनेत्याद्यग्रिमफक्किकाया अवतारासम्भवात् ।

---

( प्रभा ) स्वमते प्रमात्वत्वेनैव पक्षता ज्ञानपदं तूक्तशङ्कानिरासार्थम् । ये तु ज्ञानस्य पक्षान्तर्भावमन्यन्ते तन्मतमुत्थापयति यत्त्विति । तेन रूपेण = प्रामाण्यपदार्थत्वेन रूपेणेत्यर्थः ।

तथाच प्रामाण्यपदार्थः तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीग्राह्यो न वेति विप्रतिपत्तिस्वरूपम् ।

अत्रहि प्रमाकरणत्वत्वरूपपक्षतावच्छेदकावच्छिन्ने प्रमाकरणत्वात्मकप्रामाण्यपदार्थरूपपक्षे साध्यं नास्ति प्रमात्वत्वरूपपक्षतावच्छेदकावच्छिन्ने प्रमात्वात्मकप्रामाण्यपदार्थरूपपक्षे साध्यमस्तीति आंशिको बाधो बोध्यः । पक्षतावच्छेदकसामानाधिकरण्येन साध्याभावस्यांशिकबाधरूपत्वात् इति । तस्य = प्रमाकरणत्वस्य । व्यावर्त्तनायेति । पक्षबहिर्भूतत्वसम्पादनायेत्यर्थः ।

ननु प्रामाण्यपदार्थत्वसामानाधिकरण्येन पक्षीकृत्य तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीजन्यज्ञानविषयत्वसाधने नांशतो बाध इति चेन्न ? अयंघटइत्यत्र प्रमात्वे स्वतोग्राह्यत्वविरहेऽपि सुखविशेष्यकमानसप्रत्यक्षानन्तरमहंसुखी नवेति संशयानुदयेन सर्वमते एव सुखविषयकमानसप्रत्यक्षे प्रामाण्यस्य स्वतोग्राह्यत्वं सिद्धम्, तथाच नैयायिकमते सिद्धसाधनं स्यादतः प्रामाण्यपदार्थत्वसामानाधिकरण्येन पक्षत्वं न वक्तुं शक्यते । अतएव क्वचिद्धर्मविशेष्यकत्वप्रामाण्ये न कदाचिदपि तादृशसंशयसम्भवस्तदा तत्पक्षाद् बहिर्भावनीयम्" इति दीधितिकृता वक्ष्यते, सुखादिप्रत्यक्षे तत्तात्पर्य्यम् । ज्ञानमात्रवृत्तिप्रामाण्यपदार्थत्वेन पक्षत्वे अनुमितिकरणत्वस्य पक्षत्वापत्तिर्दुर्वारेत्यंशतो बाधो दुर्वार एवेत्यत आह ज्ञानान्यवृत्तितानवच्छेदकेत्यादि ।

तथाच ज्ञानान्यवृत्तितानवच्छेदकप्रामाण्यपदार्थतावच्छेदकवत्त्वेन पक्षत्वे ज्ञानान्यवृत्तितानवच्छेदकमथच प्रामाण्यपदार्थतावच्छेदकप्रमात्वत्वमेव ननु प्रमाकरणत्वमिति ।

अत्र च ज्ञानान्यवृत्तितानवच्छेदकत्वदलानुपादाने प्रमाकरणत्वत्वस्य वारणं न स्यात् । ज्ञानान्यवृत्तितानवच्छेदकत्वस्यैवोपादाने पुनरनुमितिकरणत्वत्वस्य संग्रहापत्त्या अंशतो बाधापत्तिरित्यतःप्रामाण्यपदार्थतावच्छेदकेति दलम् ।

( दी० ) ज्ञानपदेनोत्सर्गतो ज्ञप्तिरेवोपस्थाप्यते । तद्वति तत्प्रकारकज्ञानत्वन्तु फलितार्थः । तद्वति तत्प्रकारकज्ञानत्वस्य तत्तदर्थभेदेन भिन्नत्वात् कस्यापि प्रामाण्यस्य च यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावात् तत्तज्ज्ञानप्रामाण्यम् तत्तज्ज्ञानग्राहकयावद्ग्राह्यम् नवेति लाभार्थं तत्तज्ज्ञानपरं ज्ञानपदमिति तु तत्त्वम् ।

---

( गा० ) ज्ञानपदार्थत्वेन ज्ञाननिवेशे प्रयोजनाभावात् ज्ञानकरणरूपज्ञानपदार्थमात्रवृत्तितायाःप्रमाकरणत्वे सत्त्वेऽपि अंशतो बाधाशङ्कानवकाशेन तादृशफक्किकाया अवतारयितुमशक्यत्वात् । ज्ञानपदार्थत्वेन ज्ञाननिवेशे ज्ञप्तेरेवौत्सर्गिकज्ञानपदाधीनोपस्थितिविषयत्वेऽपि ज्ञानकरणस्य ज्ञानपदार्थत्वानपायेन अंशतो बाधवारणासम्भवेन ज्ञानपदेनेत्यादेर्दुरसङ्गतापत्तेश्चेति ।

विशिष्य तद्वति तत्प्रकारकज्ञानत्वस्य पक्षत्वे ज्ञानत्वनियतत्वस्य पक्षतावच्छेदकानुप्रवेशो व्यर्थ इत्याशंकां निराकर्तुमभिमतार्थतात्पर्यनिरवद्यार्थमेव ज्ञानत्वनियतत्वांशोपादानम् नतु तदपि पक्षतावच्छेदकघटकमित्याशयेनाह *तद्वति* इति । प्रवर्त्तकज्ञानविषयप्रामात्वात्मकप्रामाण्यपदार्थमधिकृत्य विचारादेव प्रमाजनकत्वपरताभ्रमो न सम्भवतीत्यालोच्य ज्ञानपदोपादाने प्रयोजनान्तरमाह *तद्वतीति* । तत्तदर्थभेदेन = प्रकारीभूतघटत्वपटत्वादिभेदेन । *तत्तज्ज्ञानेति* । यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षस्तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साधनीयम् नतु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वम् । तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वंवेति नवेति विप्रतिपत्तिलाभायेत्यर्थः । तत्तज्ज्ञानपरम् = विशिष्य साध्यघटकघटत्वादिज्ञानपरम् । तादृशज्ञानस्य च न पक्षतावच्छेदकान्तर्भावः, प्रामाण्यपदेन घटत्ववतीत्यादेः विशेषरूपेण वोपस्थित्याऽव्यावर्त्तकत्वात्, अपि तु ताद्रूप्येणैव घटत्ववतीत्यादिकं घटत्वादिप्रकारकज्ञानघटितसाध्यसाधने पक्ष इत्यवधेयम् ।

---

तथाच अनुमितिकरणत्वं न प्रामाण्यपदार्थतावच्छेदकम् प्रमाकरणत्वत्वावच्छिन्न एव प्रामाण्यपदस्य शक्तिसत्त्वात् अनुमितिकरणत्वत्वावच्छिन्ने तदभावात् ।

ज्ञानान्यवृत्तितानवच्छेदकप्रामाण्यपदार्थतावच्छेदकेत्यत्र ज्ञानपदार्थत्वेन ज्ञाननिवेशस्यापि सम्भवेन ज्ञानपदार्थान्यवृत्तितानवच्छेदकप्रामाण्यपदार्थतावच्छेदकेत्यादिरीत्या निवेशे पुनरपि प्रमाकरणत्वस्य वारणं न सम्भवतीत्याशङ्क्य ज्ञानपदेन ज्ञप्तिरेवोपस्थाप्यते इति दीधितिकृतां ग्रन्थ इत्येवंरीत्या यत्तुवादिना स्वपक्षे समर्थिते तत्खण्डनायाह भट्टाचार्यः ज्ञानपदार्थत्वेन ज्ञाननिवेशे प्रयोजनाभावादित्यादि । ज्ञानान्यवृत्तितानवच्छेदकप्रामाण्यपदार्थतावच्छेदकेत्यत्र ज्ञानपदार्थत्वेन निवेशे प्रयोजनाभावादिति तदर्थः । तुष्यतु दुर्जनन्यायेन कल्पान्तरमाह ज्ञानपदार्थत्वेनेत्यादि ।

तद्वति तत्प्रकारकज्ञानत्वं तु फलितार्थः । तद्वति तत्प्रकारकज्ञानत्वस्य तत्तदर्थभेदेन भिन्नत्वादिति दीधितिः । तत्त्वस्याननुगतत्वेन एकस्यैव कस्य चिद् घटत्वस्य

( दी० ) यत्तु मिश्रादिमते अगृहीतज्ञानप्रामाण्यविशेषे बाधवारणाय ज्ञानपदम् ।

---

( गा० ) मिश्रोक्तज्ञानपदव्यावृत्तिमुपन्यस्य दूषयति यत्तु इत्यादिना । मिश्रादीत्यादिना भट्टपरिग्रहः । *अगृहीतेति* । निर्वाच्ययानुव्यवसायसामग्र्या अगृहीतं यद्धर्मप्रकारकज्ञानसामान्यं तद्धर्मवति तद्धर्मप्रकारकज्ञानत्वरूपप्रामाण्य इत्यर्थः ।

---

( प्रभा ) किंवा घटत्वस्य संग्रहे तद्घटितप्रमात्वस्यैव संग्रहःस्यान्नतु तदपरस्य । तथा च घटत्ववति घटत्वप्रकारकज्ञानत्वम् घटत्ववति घटत्वप्रकारकज्ञानधर्मिकाप्रामाण्याग्राहकज्ञानग्राहकसामग्रीग्राह्यं नवेति विप्रतिपत्तिस्वरूपपर्यवसाने वाधाद्यापत्तिःस्यात्तथाहि घटत्ववति घटत्वप्रकारकज्ञानधर्मिकाप्रामाण्याग्राहकत्वस्य सामान्यतो ज्ञानग्राहकत्वस्य च पटमठादिसकलपदार्थविषयकज्ञानग्राहकसामग्र्यां सत्त्वेन तादृशसामग्रीजन्ययावद्ग्रहविषयत्वस्य घटत्वघटितप्रमात्वे विरहात् । बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने तत्तदशक्ति स्वीकृतवताम्मते तु सुतरां वाधः । घटमहं जानामि पटमहं जानामि इत्यादिसर्वस्मिन्ननुव्यवसायादौ घटत्वादिमति घटत्वादिप्रकारकज्ञानत्वत्वेनैव घटत्वादिमति घटत्वादिप्रकारकज्ञानत्वादेरेव भानेन कुत्रचिद् ज्ञानग्रहे बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवति बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नप्रकारकज्ञानत्वत्वेन तादृशज्ञानत्वत्वस्याभानात् ।

ज्ञायते इति व्युत्पत्त्या निष्पन्नज्ञानपदस्य ज्ञायमानपरतया ज्ञायमानप्रामाण्यस्य पक्षत्वमिति वदताम्पक्षधरमिश्राणाम्मतमुत्थापयति दीधितौ यत्त्विति । अगृहीतज्ञानप्रामाण्यविशेषे इति । अगृहीतम्=अज्ञायमानं ज्ञानाविषयीभूतमिति यावत् । तादृशं यज्ज्ञानं तन्निष्ठप्रामाण्ये इत्यर्थः । यत्रायं घट इति व्यवसायोत्तरं घटमहंजानामीत्यनुव्यवसायो न जातस्तत्रायं घट इति व्यवसायस्यागृहीततया ( ज्ञानाविषयतया ) तन्निष्ठप्रामाण्यस्य पक्षत्वे इति यावत् । तदेवाह निर्वाच्ययेति । मिश्रादिमतसिद्धतयेति यावत् । अनुव्यवसायसामग्र्या । वक्ष्यमाणयेतिशेषः । तृतीयार्थो जन्यत्वं तस्यागृहीतपदार्थघटकज्ञानेऽन्वयः । अगृहीतं=ज्ञानाविषयीभूतम् । अनुव्यवसायसामग्रीजन्यज्ञानाविषयीभूतमिति यावत् । अनुव्यवसायपदं ज्ञाततालिङ्गकानुमितेरप्युपलक्षकम् । तथाच ज्ञाततालिङ्गकानुमितिसामग्रीजन्यज्ञानाविषयीभूतमित्यपि वोध्यम् । यद्धर्मप्रकारकज्ञानसामान्यमिति । घटत्वप्रकारकज्ञानसामान्यमित्यर्थः, अयंघट इतिज्ञानमिति यावत् । अङ्कुरकल्पनमिदमित्यूह्यम् । कदाचिदपि कस्यचित् तद्धर्मप्रकारकज्ञानग्रहे तद्ग्राहकसामग्र्येव तादृशी प्रसिद्धा स्यादतः सामान्यपदमप्रसिद्धिप्रयोजकतयोपात्तम् । तद्धर्मवति=घटवति । तद्धर्मप्रकारकेति=घटत्वप्रकारकेत्यर्थः । अयम्भावः, यत्र घटज्ञानानन्तरं तज्जन्यानुव्यवसायो न जातस्तत्र घटज्ञानस्य तद्गतप्रमात्वस्य वाऽज्ञायमानत्वं विषयताया ज्ञानसमानकालीनत्वात् । अनुव्यवसायानुत्पादश्च विरोधिसामग्रीप्रयुक्तः स्वसामग्र्यभावप्रयुक्तश्च । तथाच तादृशज्ञानगतप्रमात्वस्यापि पक्षान्तर्गततया तत्र तादृशयावत्सामग्रीजन्यग्रहविषयत्वरूपसाध्यविरहेण

(गा०) वाधवारणायेति। वाधस्साध्यसत्त्वानिर्वाहः तत्प्रामाण्याश्रयग्राहक-वक्ष्यमाणसामग्र्या एवाप्रसिद्ध्या प्रसक्तः, तद्वारणायेत्यर्थः। गुरुमते ज्ञान-मात्रस्यैव तथाविधस्वप्रकाशसामग्रीग्राह्यतया नैतादृशो धर्मः प्रसिध्यति यद्धर्मप्रकारकं ज्ञानं तादृशसामग्र्या न गृह्यत इति तन्मतमुपेक्षितम्। नचाप्रा-माण्यग्राहकसामग्रीकाल एव यद्धर्मप्रकारकग्रहसामग्री नान्यदा,

---

वाधस्स्यादतो ज्ञानपदं ज्ञायमानत्वार्थलाभार्थम्। ज्ञानविषयीभूतप्रमात्वस्यैव पक्षतया अज्ञायमानप्रामाण्यस्य पक्षतावच्छेदकानाक्रान्ततया तत्र साध्यविरहेऽपि न क्षतिरिति भावः।

ननु उक्तस्थले साध्यघटकज्ञानपदेन तादृशाज्ञायमानप्रामाण्याश्रयज्ञानग्रहणे तद्विषयक-ग्रहाप्रसिद्धया तादृशग्रहजनकसामग्र्यप्यप्रसिद्धैवेति साध्याप्रसिद्धिरेव, साध्याप्रसिद्धया तदभावोऽप्यप्रसिद्ध एव, अलीकप्रतियोगिकाभावानङ्गीकारात्, एवञ्च साध्याभाववत्पक्षा-प्रसिद्धया कथं वाधः किन्तु साध्याप्रसिद्धिरेवेत्यत आह साध्यसत्त्वानिर्वाह इति। साध्यसत्त्वानिर्वाहश्च साध्याप्रसिद्धिरेव। तथाच दीधितौ वाधपदं साध्याप्रसिद्धिपरम्। साध्ये साध्यतावच्छेदकाभावस्य साध्याप्रसिद्धित्वं यथा तथा साध्यतावच्छेदके साध्यतावच्छेद-काभावोऽपि साध्याप्रसिद्धिरेव। यथा पर्वतः काञ्चनमयवह्निव्याप्यधूमवान् आर्द्रेन्धनसंयो-गादित्यादौ वह्नौ काञ्चनमयत्वाभावः। अज्ञायमानप्रामाण्यरूपपक्षत्वे साध्यसत्वाभावरूपवाध इत्यपि वदन्ति। ननु मिश्रादीत्यादिना भट्टपरिग्रह इत्ययुक्तम्, गुरुमतेऽपि अज्ञायमान-ज्ञानगतप्रामाण्यस्य पक्षत्वेऽपि उक्तदोषसम्भवात् ( साध्याप्रसिद्धिसम्भवात् ) ज्ञानस्य स्वप्रकाशतया अगृहीतज्ञानमेव नास्तीत्याह गुरुमते इति। अस्य नैतादृशो धर्मः प्रसिद्धय-तीत्यनेनान्वयः। ज्ञानमात्रस्यैवेति। एवकारो भिन्नक्रमः ग्राह्यतयेत्युत्तरं योजनीयः। तथा-विधेति। चक्षुःसंयोगालोकसंयोगादिघटितसामग्रीत्यर्थः। सामग्रीग्राह्यतयेति। ननु साम-ग्र्यन्तरग्राह्यतयेति यावत्। एतादृशो धर्मः। = घटत्वादिरूपः। यद्धर्मप्रकारकं ज्ञानं = घटत्वादिप्रकारकं ज्ञानं, तादृशसामग्र्या = घटज्ञानोत्पादकसामग्र्या। गुरुमते यत्सामग्री-जन्यत्वं घटज्ञाने तत्सामग्रीमात्रग्राह्यत्वमपि तत्रेति भावः।

अत्रेदं वोध्यम्। गुरुमते ज्ञानग्रहार्थं न मिश्रभट्टयोरिवानुव्यवसायानुमितिसामग्री अपेक्षिता येन तादृशसामग्रीविरहप्रयुक्तो योऽनुव्यवसायानुमित्यभावस्तत्प्रयुक्तं घटज्ञान-स्याज्ञायमानत्वं ततः साध्याप्रसिद्धिः स्यात्, किन्तु तन्मते ज्ञानमात्रस्य स्वप्रकाशतयाऽ-ज्ञायमानज्ञानाप्रसिद्धेः, तथाच घटज्ञानोत्पादिका या सामग्री सैव प्रामाण्यग्राहिकेति स्वपदग्राह्यं यद् घटज्ञानगतप्रामाण्यं तदाश्रयो घटज्ञानं तद्विषयको ग्रहस्स्वमेव तज्जनक-सामग्रीजन्यो ग्रहस्स्वमेव तद्विषयत्वस्य प्रमात्वे सत्त्वान्न वाधाद्यवसर इति। तन्मतमुपे-क्षितम् = गुरुमतमुपेक्षितम्।

यद्धर्मप्रकारकं ज्ञानं तादृशसामग्र्या न गृह्यते स धर्मोऽप्रसिद्ध एव गुरुमते इत्युक्तं तदसहमानः शङ्कते नचेति। अप्रामाण्यग्राहकसामग्रीकाले इति = घटज्ञानधर्मिका-प्रामाण्यग्राहकसामग्रीकाले इत्यर्थः। यद्धर्मप्रकारकग्रहसामग्रीति = घटत्वप्रकारकज्ञान-सामग्रीत्यर्थः। नान्यदेति = अप्रामाण्यग्राहकसामग्रीविरहकाले इति यावत्।

(गा०) स एव तादृशो धर्मः, अप्रामाण्याग्राहकत्वस्य तादृशसामग्रीविशेषणत्वादिति वाच्यम् ? तद्धर्मघटिताप्रामाण्यग्रहस्य तत्प्रकारकज्ञानानुत्तरमसम्भवेन अप्रामाण्यग्रहसम्पादकतज्ज्ञानसामग्र्या एव तदप्रामाण्याग्राहिकायास्तज्ज्ञानग्राहकसामग्र्याः प्रसिद्धेः, वर्तमानज्ञानग्राहकसामग्र्या ज्ञाने गृह्यमाणे यथा ज्ञानत्वधर्मविषयकत्वादेर्विपरीतं न गृह्यते, तथा सविषयकत्वसप्रकारकत्वादेरपीति सर्वमतसिद्धम् ।

---

( प्रभा ) स एव = घटत्वमेव । तादृशो धर्मः = यद्धर्मप्रकारकं ज्ञानं तादृशसामग्र्या न गृह्यते तादृशो धर्म इत्यर्थः । ननूक्तस्थले अप्रामाण्यग्राहकसामग्रीकालीनायास्तद्धर्मप्रकारकज्ञानसामग्र्या एव तद्धर्मप्रकारकज्ञानग्राहकत्वात् तादृशो धर्मो न स्याद् यद्धर्मप्रकारकज्ञानं तया न गृहीतमत आह अप्रामाण्याग्राहकत्वस्येति सामग्रीविशेषणत्वादिति । तथाचाप्रामाण्यग्राहकघटज्ञानसामग्र्या अपि साध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधवारणाय तदप्रामाण्याग्राहकत्वस्यापि सामग्र्यां विशेषणीयत्वादिति उक्ताङ्कुरस्थलीयतादृशसामग्र्या ज्ञानग्राहकत्वेऽपि अप्रामाण्याग्राहकत्वादिति । अयम्भावः, यत्र घटज्ञानसामग्री नियमतो घटज्ञानगताप्रामाण्यस्य ग्राहकसामग्रीसमवहितैव तत्स्थलीयघटज्ञानगतप्रामाण्यस्य पक्षान्तर्गततया तादृशप्रमात्वाश्रयज्ञानग्राहकतादृशज्ञानधर्मिकाप्रामाण्यग्राहकसामग्र्या अप्रसिद्धया साध्याप्रसिद्धिरिति । नच तत्र ज्ञानग्राहकसामग्री भिन्ना अप्रामाण्यग्राहिका च भिन्नेति ज्ञानग्राहकसामग्र्यामप्रामाण्याग्राहकत्वं निर्विवादमेवेति वाच्यम्' तदप्रामाण्याग्राहकसामग्र्यसमवहितत्वस्यैव ज्ञानग्राहकसामग्र्यां निवेशनीयत्वात् अन्यथा वक्ष्यमाणभ्रमसामग्र्याः साध्यघटकतया वक्ष्यमाणबाधवारणासम्भवेन तदप्रामाण्याग्राहकत्वनिवेशवैफल्यापत्तेः । एवञ्च तादृशसामग्र्या अप्रामाण्यग्राहकसामग्र्या समवहितत्वाभावान्नासङ्गतिरिति ध्येयम् ।

तदप्रामाण्याग्राहकतज्ज्ञानग्राहकसामग्र्याश्चैककाले सम्बलनं न सम्भवति अप्रमात्वस्य तदभाववति तत्प्रकारकज्ञानरूपतया तत्प्रकारकज्ञानम्प्रति तज्ज्ञानस्य कारणतया तज्ज्ञानसामग्र्या एव तज्ज्ञाननिष्ठप्रमात्वग्राहकतया तादृशसामग्रीकाले तज्ज्ञानघटिताप्रमात्वग्रहसामग्र्या वर्तमानत्वासम्भवादित्यांशेन समाधत्ते तद्धर्मघटिताप्रामाण्यग्रहस्येति घटत्वघटिताप्रामाण्यग्रहस्येत्यर्थः । तत्प्रकारकज्ञानानुत्तरमसम्भवेन = घटत्वप्रकारकज्ञानानुत्तरमसम्भवेनेत्यर्थः । तद्धर्मघटिताप्रामाण्यग्रहस्य तत्प्रकारकज्ञानोत्तरमेव सम्भवेनेति यावत् । अयंभावः, अप्रमात्वं हि तदभाववति तत्प्रकारकज्ञानत्वम्, एवञ्च तत्प्रकारकज्ञानम्प्रति तज्ज्ञानस्य कारणतया तज्ज्ञानसामग्र्या एव तज्ज्ञानगतप्रमात्वग्राहकतया तादृशसामग्रीकाले तज्ज्ञानघटिताप्रमात्वग्रहसामग्र्या वर्त्तमानत्वासम्भवात्, तथाच पूर्वकालावच्छेदेन तज्ज्ञानग्राहिका या सामग्री सैव तदप्रामाण्यग्राहकसामग्र्यसमवहिता प्रसिद्धा इति न साध्याप्रसिद्धिस्तादृशसामग्रीजन्ययावद्ग्रहविषयत्वस्योक्तप्रमात्वे सत्त्वादिति । अप्रामाण्यग्रहसम्पादकतज्ज्ञानसामग्र्या इति = अप्रामाण्यग्रहसम्पादकं यत्तज्ज्ञानं तज्जनकसामग्र्या इत्यर्थः ।

( गा० ) तादृशी च सामग्री मिश्रादिमते यथाऽनुव्यवसायसामग्री तथा

---

( प्रभा ) नन्वेवं घटत्वप्रकारकज्ञानेऽप्रामाण्यं कदापि न गृह्येत तथाहि तादृशाप्रामाण्यग्रहो हि उक्तयुक्त्या घटत्वप्रकारकज्ञानानन्तरमेव भविष्यति, नचैवमपि सम्भवः, घटज्ञानोत्पादकसामग्र्या एव प्रामाण्यग्राहकतया तस्या अप्रामाण्यग्रहविरोधित्वात्, घटज्ञानस्य च नियमतः प्रामाण्यविषयकत्वात्। अतोऽप्रामाण्यग्राहकसामग्रीविरहविशिष्टतत्प्रकारकज्ञानसामग्र्या एव प्रामाण्यग्राहकत्वं स्वीकार्यम्, तथाच गुरुमते ज्ञानमात्रस्यैव यथार्थत्वेन अप्रामाण्यज्ञानानुत्पत्तेरिष्टत्वात् स्वरूपतो विषयतश्च मिथो भेदाग्रहादेव इदं ज्ञानमप्रमेति व्यवहारात्।

नन्वत्राप्रामाण्यम् प्रामाण्यविरोधि इति स्वयमेव दीधितिकृता वक्ष्यते, विरोधित्वं च तदभाववति तत्प्रकारकत्वरूपभ्रमत्वे निष्प्रकारकत्वे च, भ्रमत्वे प्रामाण्यविरोधित्वमादायाप्रसिद्धिर्वारिता किन्तु निष्प्रकारकत्वरूपप्रामाण्यविरोध्यादायाप्रसिद्धिदुर्वारैव, तथाहि-निष्प्रकारकत्वभ्रमकाले एव यद्धर्मप्रकारकज्ञानसामग्री नान्यदा, स एव तादृशो धर्मःप्रसिद्ध्यति यद्धर्मप्रकारकज्ञानं सामग्र्या न गृह्यते, तथाच यत्र घटज्ञानसामग्री नियमतो घटज्ञानगतप्रामाण्यविरोधिनिष्प्रकारकत्वग्राहकसामग्रीसमवहितैव तत्स्थलीयप्रमात्वस्यापि पक्षान्तर्गततया तत्र च प्रामाण्यविरोध्यग्राहकतज्ज्ञानग्राहकसामग्र्या अप्रसिद्ध्या साध्याप्रसिद्धिदुर्वारैवेत्याशङ्क्य समाधत्ते वर्त्तमानज्ञानग्राहकसामग्र्या इत्यादि। लौकिकत्वनियामकसन्निकर्षादिघटितसामग्र्यां ज्ञानत्वादिविपरीतविषयताप्रयोजकतत्तद्दोषसंवलनमप्रसिद्धमितिसूचयितुं वर्त्तमानपदम्। ज्ञानग्राहकसामग्र्या इति। वर्त्तमानं यज्ज्ञानं तद्विषयकज्ञानजनकसामग्र्या इत्यर्थः। साच सामग्री गुरुमते प्रथमज्ञानोत्पादिकैव। मिश्रमतेऽनुव्यवसायसामग्री भट्टमतेऽनुमितिसामग्री इत्यनुपदमेव वक्ष्यति। ज्ञाने गृह्यमाणे इति=ज्ञानग्राहकसामग्रीजन्यज्ञानविषयीभूते ज्ञाने इत्यर्थः। उत्तरस्याप्रामाणिकत्वशङ्कानिरासाय पूर्वपक्षिणःसम्मतं दृष्टान्तम्प्रथमतो दर्शयति धर्मविषयकत्वादेर्विपरीतम्=धर्मविषयकत्वाभावधर्मविषयकत्ववद्भेदौ दार्ष्टान्तिके योजयति तथेति। सविषयकत्वादेरिति। अस्यापि विपरीतं न गृह्यते इत्यनेनान्वयः सप्रकारकत्वविपरीतं निष्प्रकारकत्वम्। तथाच यथा ज्ञानग्राहकसामग्र्यां सत्यां ज्ञानत्वविरुद्धज्ञानत्वाभावग्राहकसामग्र्याः संवलनं न सम्भवति तदुत्तरं सुतरां न ज्ञानत्वाभावग्रहः। यथा धर्मविषयकत्वग्राहकसामग्र्यां सत्यां न तद्विरुद्धधर्मविषयकत्वाभावग्राहकसामग्रीसंवलनं तथैव तद्वति तत्प्रकारकत्वरूपप्रमात्वग्राहकसामग्रीकाले न तद्विरुद्धनिष्प्रकारकत्वग्राहकसामग्रीसंवलनसम्भवः। एवञ्च गुरुमते तादृशधर्मोऽप्रसिद्धो यद्धर्मप्रकारकज्ञानं तादृशसामग्र्या न गृह्यते, तथाच प्रामाण्यविरोध्यग्राहिका एवं ज्ञानग्राहिका च सैव सामग्री प्रसिद्धेति न साध्याप्रसिद्धिरिति। सर्वमतसिद्धमिति। माध्यमिकनैयायिकमतेऽपि तादृशसामग्रीकाले दोषसंवलनं नास्ति किमु मीमांसकमते इति सूचयितुं सर्वपदमिति। तादृशी चेति। वर्त्तमानज्ञानग्राहिकेत्यर्थः। मिश्रादिमते। आदिना भट्टपरिग्रहः। अनुव्यवसायसामग्रीति। अनुमितिसामग्री चेत्यपि बोध्यम्।

(गा०) गुरुमते तत्स्थानाभिषिक्ता व्यवसायसामग्री। अतः स्वप्रकाशात्मकतदंकुरादिप्रकारकज्ञानसामग्रीकाले न तत्र निष्प्रकारकत्वभ्रमसामग्रीसम्भव इति न सप्रकारकत्वग्रहविरोधिदोषघटितनिष्प्रकारकत्वभ्रमसामग्रीसमवहितस्वप्रकाशात्मकतज्ज्ञानसामग्र्यास्तादृशज्ञानप्रामाण्यविरोधिग्राहकत्वोक्तिसम्भवः । अन्यथा तेषां निर्विषयकत्वभ्रमसामग्रीकाले विषयोपरागासम्भवेन स्वप्रकाशात्मकज्ञानसामग्री विषयानुपरक्तमपि ज्ञानं गृह्णातीति स्वीकारापत्तेः।

---

( प्रभा ) तत्स्थानेति=अनुव्यवसायसामग्रीस्थाने इत्यर्थः। अतः=व्यवसायसामग्र्याः स्थानापन्नत्वात् तदुत्तरं निष्प्रकारकत्वग्रहाभावादेवेति यावत्। स्वप्रकाशात्मकेति। स्वं व्यवसायः घटत्वप्रकारकं ज्ञानमिति यावत्, अस्य तदङ्कुरत्वादिप्रकारकज्ञानेऽन्वयः। तदङ्कुरत्वादिप्रकारकज्ञानसामग्रीकाल इति=घटत्वादिप्रकारकज्ञानसामग्रीकाले इत्यर्थः। तत्र=काले। न सामग्रीसम्भव इति=न सामग्री कल्प्यते इत्यर्थः।

सप्रकारकत्वग्रहविरोधीति दोषविशेषणं, दोषस्य प्रमाविरोधित्वात्। तज्ज्ञानसामग्र्याः तदङ्कुरादिप्रकारकज्ञानसामग्र्याः। तादृशज्ञानेति। तादृशज्ञानम् घटत्वप्रकारकं ज्ञानं तन्निष्ठं यत्प्रामाण्यं तद्विरोधी यो निष्प्रकारकत्वग्रहस्तज्जनकत्वेत्यर्थः। तथाच तादृशभ्रमसामग्रीसमवहितघटत्वप्रकारकज्ञानसामग्री तादृशभ्रमजनिका विशिष्टं ज्ञानम्।

ननु गुरुमते एवं तादृशसामग्री अस्तु इत्यत आह अन्यथेति। तज्ज्ञानसामग्र्या निर्विषयकत्वग्राहकसामग्रीसमवहितत्वे इत्यर्थः। तेषां=गुरूणाम्। निर्विषयकत्वभ्रमसामग्रीकाले इति। तज्ज्ञानसामग्रीसत्त्वे चेतिशेषः। निर्विषयकत्वेति निष्प्रकारकत्वादीनामप्युपलक्षणम्, तस्यैवाशङ्क्यमानतया तदुपादानात्। एवञ्च निष्प्रकारकत्वभ्रमसामग्रीकालीनज्ञानग्राहकसामग्र्युत्तरं ज्ञानस्यैवासम्भवात्कुतस्तत्प्रामाण्यस्यैवाज्ञायमानत्वं, तादृशसामग्रीज्ञानग्राहकत्वे निर्विषयकत्वभ्रमसामग्रीकालीनसामग्र्या अपि ज्ञानग्राहकत्वसम्भवात्तज्ज्ञानेन निर्विषयकत्वस्यापि विषयीकरणाद्विषयभानासम्भवेन तज्ज्ञानेन गुरुमते विषयानुपरक्तत्वस्वीकारापत्तेः। यथा निर्विषयकत्वभ्रमसामग्रीकालीनसामग्र्या ज्ञानग्राहकत्वं नास्ति तथा निष्प्रकारकत्वभ्रमसामग्रीकालीनसामग्र्या अपि ज्ञानग्राहकत्वं नास्तीति न गुरुमतेऽज्ञायमानप्रामाण्यप्रसिद्धिरिति समुदितार्थः।

गुरूणां तु स्वातन्त्र्येणोपस्थितौ धर्मिज्ञानमिति दीधितिकृता स्वयं वक्ष्यमाणतया अप्रामाण्यग्रहपदेन तदङ्कुराभाववति तदङ्कुरप्रकारक 'इदन्त्वेन' धर्मिप्रत्यक्षस्यैव ग्रहणेन तत्सामग्र्यां तदजनकत्वाभावात्। नच तथापि गुरुमतेऽपि स्मरणं प्रति पूर्वानुभवस्य कारणतया पूर्वं तदङ्कुराभाववति तदङ्कुरप्रकारकज्ञानत्वरूपभ्रमत्वानुभवस्यावश्यकत्वेन कथं तादृशानुभव इति वाच्यम्, विसंवादीच्छायामिदं तदङ्कुरं मे स्यादित्याकारिकायां तादृशभ्रमत्वस्य मानसप्रत्यक्षेण ग्रहणात्। किञ्च तादृशेच्छाम्प्रति तदङ्कुरप्रकारकज्ञानस्य कारणतया प्रागावश्यकत्वेन सैव तङ्कुरप्रकारकज्ञानसामग्री तदप्रामाण्याग्राहकत्वेन प्रसिद्धा स्यादिति वाच्यम्, तत्रापि गुरुमते विसंवादीच्छायां तदङ्कुरविशेष्यकस्मरणात्मकभ्रमजन्य-

(गा० यद्यपि तदंकुरप्रकारकज्ञानमन्तरेणापि जातायां धर्म्यगृहीतासंसर्गकतदंकुरविशेष्यकज्ञानात्मकतदंकुरभ्रमजन्यतदंकुरप्रकारकविसंवादीच्छायां

(प्रभा) तस्यैव स्वीकारेण तदङ्कुरप्रकारकज्ञानजन्यत्वास्वीकारेण तदङ्कुरप्रकारकज्ञानस्य प्रागनावश्यकत्वात् ।

नच विसंवादीच्छाम्प्रति गुरुमते न तदङ्कुरप्रकारकज्ञानं कारणमपि तु धर्म्यगृहीतासंसर्गकतदङ्कुरविशेष्यकज्ञानमेव, तथाच साध्याप्रसिद्धिरिति यद्यपीत्यादिना शङ्कितुराशयः। तदङ्कुरप्रकारकज्ञानमन्तरेणापि जातायामिति = तदङ्कुरादिमति तदङ्कुरप्रकारकज्ञानं विनैवेत्यर्थः। इदं रजतमिति प्रमात्मकज्ञानं विनैवेति यावत्। प्रकारता चात्र तादात्म्येन ग्राह्या। यदि तङ्कुरप्रकारकप्रमात्मकज्ञानानन्तरमिच्छा स्यात्तर्हि तादृशतदङ्कुरप्रकारकज्ञानजनका सामग्र्येवाप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च प्रसिद्धा स्यादिति गुरुमते साध्याप्रसिद्धिर्न स्यादित्यत उक्तं तदङ्कुरप्रकारकज्ञानमन्तरेणापि ज्ञातायामिति। ननु तथापि तदङ्कुरप्रकारकेच्छाम्प्रति तदङ्कुरप्रकारकज्ञानस्य कारणतया गुरुमते भ्रमात्मकज्ञानमात्रस्य ज्ञानद्वयात्मकतया तत्प्रकारकत्वासम्भवस्तथाच कारणाभावात् कथं तदङ्कुरप्रकारकेच्छासम्भवः, एवमिदं रजतभिन्नमिति बाधनिश्चयोऽपि प्रतिबन्धक इत्यत आह धर्म्यगृहीतासंसर्गकेति। धर्मिणि अगृहीतः असंसर्गो यत्रेति समासः, तथाच बाधनिश्चयाभावसहकृतेत्यर्थः, तदङ्कुरविशेष्यकज्ञानात्मकेति = रजतविशेष्यकज्ञानात्मकेत्यर्थः। इदं यावत् रजतमिति ज्ञानात्मकेति। इत्यपि न शक्यते वक्तुं विशेष्यभूततज्ज्ञानसामग्र्याः तादृशभ्रमसामग्रीसमवहितत्वाभावादितिभावः।

ननु यत्र तादात्म्येन तदङ्कुरप्रकारकप्रमात्मकज्ञानसामग्री तदङ्कुराभाववति तदङ्कुरप्रकारकज्ञानत्वरूपाप्रामाण्यस्मरणप्रयोजकसामग्रीनियता तत्र तदङ्कुरादिमति तदङ्कुरप्रकारकज्ञानत्वरूपप्रमात्वस्य पक्षतायां साध्याप्रसिद्धिः, तादृशप्रमात्मकाप्रामाण्यग्राहकसामग्र्याः प्रामाण्यविरोधिग्राहकत्वेन भ्रमत्वात्मकाप्रामाण्यग्राहकत्वात्। नच घटितबुद्धौ घटकज्ञानस्य कारणतया तत्र तदङ्कुरप्रकारकज्ञानस्य पूर्वमावश्यकत्वेन तज्ज्ञानजनकसामग्र्यामेव तदप्रामाण्याग्राहकत्वं सुघटमिति वाच्यम्, घटितानुभवप्रत्येव घटकज्ञानस्य कारणत्वेन गुरुमते भ्रमस्थले धर्मिप्रत्यक्षप्रकारस्मरणेतिज्ञानद्वयस्यैव स्वीकारेण तदङ्कुरप्रकारकज्ञानस्य प्रागनावश्यकत्वात्।

नचैवं तदङ्कुरप्रकारकज्ञानरूपधर्मिणि इदन्त्वेन प्रत्यक्षप्रयोजकसामग्र्याः स्मरणप्रयोजकसामाग्र्यपेक्षया भिन्नत्वेन तत्राप्रामाण्यग्राहकत्वमस्त्येव स्मरणप्रयोजकसामाग्र्या एवाप्रामाण्यग्राहकत्वादिति वाच्यम्, अग्रे प्रामाण्यग्रहःइदं ज्ञानमप्रमेति व्यवहारजनकःसच मिश्रादिमते। अत्रेदं बोध्यम्, प्रमात्मकं यदिदं रजतमिति ज्ञानं तत्तु इदन्त्वावच्छिन्नविशेष्यकं तादात्म्येन रजतप्रकारकं, भ्रमात्मकं ज्ञानमपि इदं रजतमित्याकारकमेव, परन्तु गुरुमते भ्रमत्वास्वीकारेण इदं रजतमित्यस्य ज्ञानद्वयरूपतया उभयमपि विशेष्यमेव (प्रत्यक्षे इदं विशेष्यं स्मृतौ रजतं विशेष्यमिति प्रमातो भेदः) एवञ्च भ्रमस्य तदङ्कुरप्रकारकत्वाभावात्तदङ्कुरविशेष्यकज्ञानात्मकेत्युक्तम्। तदङ्कुरभ्रमजन्येति = रजतभ्रमजन्येत्यर्थः। एतेनेच्छासामग्री दर्शिता। तदङ्कुरप्रकारकविसंवादीच्छायामिति = इदं रजतं मे भूयादिति इदन्त्वावच्छिन्न-

(गा०) गृहीतस्य तदंकुराभाववति तदंकुरप्रकारकत्वस्योपस्थित्या तदंकुर-प्रकारकज्ञानसामग्री-दशायां नियमत उपस्थिततादृशधर्मसाकाङ्क्षतादृशज्ञान-रूपधर्मिज्ञानरूपाप्रामाण्यभ्रमसामग्रीसम्भवः, तथापि तादृशाप्रामाण्यभ्रमस्य ग्राह्याभावानवगाहितया प्रामाण्यग्रहाप्रतिबन्धकत्वेन तत्सामग्र्या अपि न प्रामाण्यग्रहप्रतिबन्धकत्वम् ।

---

(प्रभा) विशेष्यकतादात्म्येन रजतप्रकारकेच्छायामित्यर्थः । इच्छाया व्यधिकरणप्रकारकत्वस्य गुरुणा स्वीकारादिति भावः । गृहीतस्य = प्रसिद्धस्य । तदङ्कुराभाववति तदङ्कुर-प्रकारकत्वस्य = रजताभाववति रजतप्रकारकत्वस्य । उपस्थित्या अस्य सम्भव इत्यनेना-न्वयः । ननु कथं तादृशोपस्थित्या तादृशसामग्रीसम्भव इत्याकाङ्क्षायामाह तदङ्कुर-प्रकारकसामग्रीदशायामिति । इदं रजतमित्याकारकरजतादिरूपाङ्कुरप्रकारकप्रमा-प्रयोजकसामग्रीदशायामित्यर्थः । ज्ञाने व्यधिकरणप्रकारकत्वस्य गुरुणाऽनभ्युपगमेन तदङ्कुरप्रकारकज्ञानपदेन प्रमात्मकस्यैव धर्तुंशक्यत्वादिति ध्येयम् ।

ननु रजतप्रकारकज्ञानसामग्रीकाले न तदभाववति तत्प्रकारकत्वोपस्थितिसामग्रीसम्भवः, गुरुमते भ्रमस्य ज्ञानद्वयात्मकत्वेन तत्प्रकारकत्वघटितसामग्र्या अप्रसिद्धेरित्यत आह नियमत इति । अनियमे तु अप्रामाण्यग्राहकसाध्यघटकसामग्री प्रसिद्धा स्यात् । उपस्थिततादृशधर्मेति । तदङ्कुराभाववति तदङ्कुरप्रकारत्वरूपेत्यर्थः । तत्साकाङ्क्षो यस्तादृशज्ञानरूपो धर्मी । तदङ्कुराभाववति तदङ्कुरप्रकारकत्वरूपधर्मसाकाङ्क्षः अर्थादसंसर्गाग्रहनिबन्धनो यस्तादृशज्ञानरूपधर्मी इदं रजतमितिप्रमात्मकज्ञानरूपधर्मी तद्विषयकं यज्ज्ञानम् इदं रजतमिति ज्ञानं रजताभाववति रजतप्रकारकमित्याकारकम् अप्रमाण्यभ्रमरूपं तत्सामग्रीसम्भवः, तर्हि वह्निमाकाङ्क्षत्वं ह्रदादौ स्वीक्रियते आकाङ्क्षा च धर्मधर्मिणोः । विशेष्यविशेषणभावम् तथाच यत्र रजतप्रकारकज्ञानसामग्रीकाले नियमत इच्छायां प्रसिद्धस्य तदभाववति तत्प्रकारकत्वस्योपस्थितिसामग्री वर्त्तते तत इदं रजतमिति ज्ञानं रजताभाववति रजतप्रकारकमिति ज्ञानं ( ज्ञानद्वयात्मकम् ) तद्गतप्रमात्वस्यापि पक्षान्तर्गततया तत्र उपस्थितिसामग्र्या अप्रामाण्यग्राहकतया तदप्रामाण्यग्राहिका ज्ञानग्राहिका च या तदन्या सामग्री तज्जन्यग्रहविषयत्वस्याभावाद् गुरुमते बाधःस्यात् साकाङ्क्षत्वकथनं भ्रमत्वनिर्वाहकासंसर्गाग्रहज्ञाभायैवेति ध्येयम् ।

समाधत्ते तथापीति । तादृशाप्रामाण्यभ्रमस्येति । इदं तदंकुरप्रकारकं ज्ञानं तदंकुराभाववति तदंकुरप्रकारकमिति भ्रमत्वधर्मितावच्छेदककाप्रामाण्यग्रहस्येत्यर्थः । ग्राह्याभावानवगाहितयेति । ग्राह्यं तद्वति तत्प्रकारकत्वं तदभावानवगाहितयेत्यर्थः । तादृशाप्रामाण्यग्रहो न प्रमात्वविरोधी किन्तु तद्वति तत्प्रकारकत्वाभावनिश्चय एव तथा । तत्सामग्र्या अपि = तादृशाप्रामाण्यग्राहकसामग्र्या अपीत्यर्थः । न प्रामाण्यग्रहप्र-तिबन्धकत्वमिति । तादृशाप्रामाण्यग्रहस्य प्रतिबन्धकत्वविरहादिति भावः । तथाच तादृशसामग्र्याःस्वपदेन धर्तुं शक्यतया न बाधो गुरुमते इति ध्येयम् ।

( दी० ) कर्मणिल्युटा ज्ञानस्य प्रामाण्यमिति विषयत्वार्थकषष्ठ्या वा ज्ञायमानपरमिति, तन्न, तादृशप्रामाण्यत्वेन रूपेण ज्ञानाज्ञानयोर्बाधबुद्ध्यसम्भवात् ।

---

गा० पूर्वं तादृशप्रामाण्यावच्छेदेन ज्ञाने प्रामाण्यविरहग्रहोपगमेन तत्प्रतिबन्धकत्वोपपादने च तादृशप्रामाण्यग्रहस्यैव प्रामाण्यविषयकतया तत्सामग्रीग्राह्यतयैव तत्प्रामाण्ये साध्यस्वनिर्वाह इति सर्वं समञ्जसम् ।

ज्ञानपदोपादानेऽपि कथं तज्ज्ञानप्रामाण्यव्यावृत्तिरिति अपेक्षायामाह *कर्मणि ल्युटेति* । कृत्यल्युटो बहुलमिति सूत्रानुशिष्टेनेत्यादिः । *ज्ञायमानपरमिति* । निर्वाच्यसामग्रीजन्यज्ञानविषयार्थमित्यर्थः । एतदपि न पक्षतावच्छेदकघटकम्, प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे प्रमापदप्रवृत्तिनिमित्ताश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयतायाश्च क्वचिदपि प्रामाण्येऽसत्त्वात् घटत्ववति घटत्वप्रकारकताश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वादेश्च अंशतो बाधेन विशिष्य तत्तद्धर्मघटितप्रामाण्यानां पक्षत्वस्य उपगन्तव्यतया अव्यावर्त्तकत्वात्, किन्तु विशिष्य ज्ञायमानप्रामाण्यमेव पक्षो नोक्तप्रामाण्यमिति सूचनाय ज्ञानपदमिति ध्येयम् ।

*तादृशप्रामाण्यत्वेन* = तदङ्कुरादिमति तदङ्कुरविषयत्वादिप्रकारक-

---

(प्रभा) ननु तदंकुराभाववति तदंकुरप्रकारकं ज्ञानं तदंकुरादिमति तदंकुरप्रकारकत्वाभाववत् इदं च ज्ञानं तदंकुरप्रकारकमिति निश्चयविशिष्टनिश्चये तादृशप्रमात्वग्रहप्रतिबन्धकत्वसम्भवः प्रामाण्यग्रहविरोध्यग्राहकज्ञानग्राहकसामग्री चाप्रसिद्धेत्यत आह पूर्वमिति । तत्प्रतिबन्धकत्वोपपादने चेति = प्रमात्वग्रहविरोधित्वोपपादने चेत्यर्थः । तादृशप्रामाण्यग्रहस्यैवेति = तदंकुराभाववति तदंकुरप्रकारकज्ञानं तादृशप्रमात्वाभाववदित्याकारकस्यैवेत्यर्थः । प्रामाण्यविषयकतयेति । प्रमात्वाभावग्रहस्य ( प्रतियोगिकोटौ ) धर्म्यंशे तत्प्रकारकत्वावगाहितया प्रमात्वघटिततया प्रामाण्यावगाहित्वादिति भावः ।

घटत्वपटत्वादिघटितानन्तप्रामाण्यानां घटत्ववति घटत्वप्रकारकत्वत्वादिना सकलज्ञानविषयत्वासम्भवेन सर्वत्रैकदा स्वतस्त्वादिसाधनासम्भवात् प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वमिति मतं निराकर्तुमाह प्रमापदप्रवृत्तिनिमित्तत्वेनेति । अंशतो बाधेनेति । प्रमापदप्रवृत्तिनिमित्तम्— घटत्ववति घटत्वप्रकारकताश्रयज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्य घटत्वघटितप्रामाण्ये एव सत्त्वेन पटत्वादिघटितप्रामाण्येऽसत्त्वेन बाध इति भावः । विशिष्य तत्तद्धर्मघटितेति । घटत्ववति घटत्वप्रकारकज्ञानत्वमित्यादिरीत्या प्रामाण्यानाम्पक्षत्वस्योपगन्तव्यतयेत्यर्थः ।

मिश्रमतं निराकुरुते दीधितौ तन्नेत्यादिना । घटादिविशेष्यकघटत्वादिप्रकारकज्ञानत्वत्वरूपपक्षतावच्छेदकप्रकारकं ज्ञानं यद्यस्ति तदा न साध्याप्रसिद्धिसम्भवः, तादृश-

( गा० ) ज्ञानत्वत्वेन प्रकारेण । *ज्ञानाज्ञानयोरिति* । ज्ञाने तादृशसामग्र्या एव ज्ञानत्वतत्प्रकारकत्वयोर्वैशिष्ट्यादिघटकतया ज्ञानग्राहकत्वेन प्रामाण्याग्राहकतया ज्ञानग्राहकतया च भट्टमतसिद्धभिन्नसामग्रीत्वेन च तामादायैव साध्यसत्त्वोपपत्तेः, अज्ञाने च पक्षतावच्छेदकतादृशप्रामाण्यत्वेन साध्यघटकं

---

(प्रभा) ज्ञानत्वत्वप्रकारकं ज्ञानमवश्यं घटत्वादिप्रकारकत्वज्ञानत्वयोर्वैशिष्ट्यविषयकं वाच्यम्, नीलोत्पलत्वमित्यादिज्ञानस्य नीलत्वोत्पलत्वयोर्वैशिष्ट्यविषयकत्वदर्शनात् वैशिष्ट्यं च तादृशप्रकारकत्वाधिकरणवृत्तित्वरूपम् तादृशाधिकरणञ्च ज्ञानमेव नान्यत्, एवञ्च तादृशज्ञानस्य घटत्वादिमति घटत्वप्रकारकज्ञानत्वमित्याकारकस्य निरुक्तवैशिष्ट्यविषयकत्वे तद्घटकज्ञानविषयकत्वस्याप्यक्षततया निरुक्तज्ञानत्वत्वप्रकारकं यज् ज्ञानं तदेव स्वाश्रयविषयकं ज्ञानं प्रसिद्धं तज्जनिका या सामग्री सैव च स्वाश्रयज्ञानग्राहिका प्रसिद्धा, प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धसामग्रीभिन्नत्वेन च प्रसिद्धेति न साध्याप्रसिद्धिः, तादृशसामग्रीजन्यो ग्रहःस एव तादृशज्ञानत्वत्वप्रकारको ग्रहस्तद्विषयत्वस्य च निरुक्तप्रमात्वे सत्त्वात् स्वत एव सिद्धिरित्याशयेनाह तदङ्कुरादिमति ।

तदङ्कुरादिप्रकारकज्ञानत्वत्वप्रकारेणेति = घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकज्ञानत्वत्वप्रकारेणेत्यर्थः । ज्ञाने इति । सतीतिशेषः । सति ज्ञाने इति यावत् । तादृशसामग्र्या एवेति । तदङ्कुरादिमति तदङ्कुरादिप्रकारकज्ञानत्वत्वप्रकारकज्ञानजनकसामग्र्या एवेत्यर्थः । ज्ञानत्वतत्प्रकारकत्वयोर्वैशिष्ट्यघटकतयेति = ज्ञानत्वतत्प्रकारकत्वयोर्यद्वैशिष्ट्यं तदधिकरणवृत्तित्वरूपं तद्घटकत्वमधिकरणविधया स्वाश्रयज्ञानस्येति भावः । ज्ञानग्राहकत्वेनेति । एतेन ज्ञानविषयकग्रहस्य ज्ञानविषयकग्रहजनकसामग्र्याश्च प्रसिद्धिर्दर्शिता । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्नत्वरूपवक्ष्यमाणविशेषणसत्त्वं दर्शयति प्रामाण्याग्राहकतयेति । साध्यसत्त्वोपपत्तिः = तादृशज्ञानत्वत्वप्रकारकग्रहजनकसामग्रीजन्यतादृशज्ञानत्वत्वप्रकारकग्रहविषयत्वरूपसाध्यसत्त्वस्य प्रमात्वोपपत्तिरित्यर्थः ।

अयम्भावः, स्वरूपतःसाध्याप्रसिद्धिर्हि न साध्यवत्ताग्रहविरोधिनी अपि तु तज्ज्ञानमेतद्विरोधि, प्रकृते च द्वितीयग्रहे स्वाश्रयविषयकत्वाभावज्ञानमेव स्वाश्रयविषयकत्ववैशिष्ट्यग्रहविरोधितया साध्यवत्त्वग्रहविरोधीति वाच्यम्, किन्तु तदंकुरादिमति तदंकुरादिप्रकारकज्ञानत्वत्वेन रूपेण तादृशप्रमात्वाज्ञाने द्वितीयग्रहे स्वाश्रयविषयकत्वाभावग्रहासम्भवेन विरोधिनो विरहात्तादृशप्रमात्वरूपपक्षेऽपि स्वाश्रयविषयकग्रहजनकसामग्रीजन्यग्रहविषयत्वरूपसाध्यवत्त्वग्रहसम्भवात् इयञ्च साध्याप्रसिद्धिरकिञ्चित्करेत्याशयेन समाधत्ते अज्ञाने चेति । सतीति शेषः । घटत्वादिमद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वादिप्रकारकज्ञानाभावे सतीति यावत् ।

पक्षतावच्छेदकतादृशप्रामाण्यत्वेनेति । पक्षतावच्छेदकं यत् तदङ्कुरादिमद्विशेष्यकत्वावच्छिन्नत्वविशिष्टतदङ्कुरादिप्रकारकज्ञानत्वत्वेनेत्यर्थः । यत्प्रामाण्यं तदङ्कुरादि-

(गा०) यत्प्रामाण्यं तदाश्रयज्ञानविषयकत्वस्य तद्विशेष्यतया साध्यघटकीभूते ग्रहे अभावग्रहासम्भवादित्यर्थः ।

नच तत्र तदभावग्रहासम्भवेन तदंशे तद्घटितविशिष्टसाध्यज्ञानप्रतिबन्धासम्भवेपि तद्घटितविशिष्टसाध्यविषयिण्या वाद्युद्देश्यानुमितेर्भ्रमत्वं दुर्वारमेवेति वादिनिग्रहप्रसङ्ग इति वाच्यम् ? मध्यस्थादेरपि तादृक्प्रामाण्यत्वरूपपक्षतावच्छेदकप्रकारकपक्षाज्ञानेन तदवच्छिन्न उक्तसाध्यस्यानुमित्यावगाहनासम्भवात् प्रतिवादिना तदुद्भावनासम्भवाच्च । प्रामाण्यपदार्थस्य दर्शितरीत्या ज्ञानत्वघटिततया इच्छावृत्तेर्घटत्ववति घटत्वादिप्रकारकत्वादेरिच्छादिग्राहकाग्राह्यत्वात् बाधवारकतया ज्ञानपदसार्थक्यसम्पादनं मिश्राणाम् अतितुच्छमिति तन्नोपन्यस्तम् ।

---

(प्रभा) मद्विशेष्यकत्वदङ्कुरादिप्रकारकज्ञानत्वम् । तदाश्रयज्ञानविषयकत्वस्येति = अस्याभावग्रहासम्भवादित्यत्राभावेऽन्वयः । तादृशप्रमात्वाश्रयज्ञानविषयकत्वस्येत्यर्थः । तद्विशेष्यतयेति = तादृशप्रमात्वाश्रयविषयकत्वविशेष्यतयेत्यर्थः । साध्यघटकीभूते ग्रहे = साध्यघटकद्वितीयग्रहे इत्यर्थः । स्वाश्रयविषयकत्वविशेष्यकतया साध्यघटकीभूते द्वितीयग्रहे तादृशप्रमात्वाश्रयज्ञानविषयकत्वस्याभावग्रहासम्भवादिति फलितान्वयः । तथाचोक्तस्थले पक्षतावच्छेदकप्रकारकज्ञाने तादृशज्ञानजनकसामग्र्यैव स्वाश्रयविषयकज्ञानग्राहकसामग्री प्रसिद्धेति न साध्याप्रसिद्धिरिति । यदि तादृशप्रमात्वस्वरूपपक्षतावच्छेदकप्रकारकज्ञानं नास्ति तर्हि साध्याप्रसिद्धिज्ञानरूपप्रतिबन्धकविरहादेव निरुक्तप्रमात्वे साध्यवत्त्वानुमितिसम्भव इति निरुक्ताज्ञायमानप्रमात्वे साध्यवत्त्वानुमितिप्रतिबन्धोक्तिर्मिश्राणान्न सङ्गच्छते इत्यभिप्रायः । निरुक्तस्थले पक्षतावच्छेदकाज्ञाने साध्याप्रसिद्धेः साध्यवत्त्वानुमितिविरोधित्वासम्भवेऽपि वाद्युद्देश्यानुमितेर्भ्रमत्वमेव दोष इत्याशङ्कते नचेति । तत्रेति = स्वाश्रयविषयकत्वविशेष्यतया साध्यघटकीभूतद्वितीयग्रहे इत्यर्थः । तदभावग्रहासम्भवेनेति । निरुक्तप्रमात्वाश्रयविषयकत्वाभावग्रहासम्भवेनेत्यर्थः । तदंशे = साध्यघटकीभूतद्वितीयग्रहांशे । तद्घटितेति = तादृशप्रमात्वाश्रयविषयकत्वघटितेत्यर्थः । विशिष्टज्ञानप्रतिबन्धासम्भवेऽपि । साध्याप्रसिद्धिज्ञानरूपप्रतिबन्धकज्ञानविरहादिति भावः । तद्घटितेति = स्वाश्रयविषयकत्वविशिष्टग्रहघटितेत्यर्थः । वादिनिग्रहप्रसङ्ग इति । तदवच्छिन्ने । निरुक्तप्रामाण्यत्वावच्छिन्नप्रमात्वरूपपक्षे उक्तसाध्यस्यानुमित्यावगाहनासम्भवात् इति पक्षतावच्छेदकज्ञानरूपकारणविरहादुक्तसाध्यानुमितेरेवासम्भवात् । तदुद्भावनासम्भवात् = भ्रमत्वोद्भावनासम्भवादिति । इयं तवानुमितिर्भ्रमात्मिकेत्युद्भावयितुमशक्यत्वादित्यर्थः । तथाच निरुक्तप्रामाण्यत्वरूपपक्षतावच्छेदकरूपेण पक्षाज्ञानेऽनुमितेरेवासम्भवात्तादृशप्रमात्वस्य पक्षतया निरुक्तदोषदानं मिश्राणामसङ्गतमतोऽवश्यं तज्ज्ञानं वाच्यम् । तथाच वैशिष्ट्यघटकतया ज्ञानस्यापि ग्रहात् क्व साध्याप्रसिद्ध्याद्यवसर इति निष्कर्षः ।

( दी० ) विधौ सिद्धसाधनस्य निषेधे बाधस्याप्रसिद्धेर्वा वारणाय

( गा० ) *विधाविति* । मीमांसकैःसाध्य इति शेषः । *सिद्धसाधनस्येति* । प्रामाण्यानुमितिसामग्रीमादायेत्यादिः । *निषेधे* = नैयायिकैः साध्ये, तादृशसामग्रीग्राह्यत्वमादायैव बाधस्य वारणायेत्यन्वयः । घटज्ञानम् प्रमा सर्वमभिधेयम् इत्यादिज्ञानविषयत्वस्य केवलान्वयित्वेन यावत्त्वाघटितसाध्याप्रसिद्धावपि अभावसाधने पक्षे प्रतियोगिमत्त्वमेव बाध इत्याशयेनेदम् । *अप्रसिद्धेर्वेति* । समुच्चये वाकारः । उक्तबाधपक्षेऽपि साध्याप्रसिद्धिसत्त्वेन परस्परव्यवच्छेदरूपविकल्पासम्भवात् ।

अथवा उक्तमीमांसकसाध्ये पक्षनिष्ठाभावप्रतियोगित्वसाधनेनापि नैयायिकस्य कृतकृत्यतया तत्साधनाभिप्रायेण *बाधस्य* इत्युक्तम् । तदभावसाधना-

( प्रभा ) प्रामाण्यानुमितिसामग्रीमादायेति । इदं ज्ञानम्प्रमा संवादिप्रवृत्तिजनकत्वादित्यनुमितिसामग्रीमादायेत्यर्थः । तथाच यावत्पदानुपादाने स्वाश्रयग्राहकसामग्रीपदेन इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्यनुमितिसामग्रीमादाय तज्जन्यग्रहविषयत्वस्य प्रमात्वे नैयायिकैरपि स्वीकारात् सिद्धसाधनं स्यादेवेतिभावः । निषेधे = प्रमात्वे स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वाभावे । तादृशसामग्रीग्राह्यत्वमादायैवेति = संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिग्राह्यत्वमादायैवेत्यर्थः । तथाच यावत्पदानुपादाने उक्तरीत्या तादृशसामग्रीग्राह्यत्वाभावाभावरूपतादृशसामग्रीग्राह्यत्वस्यैव ज्ञानप्रामाण्ये सत्त्वेन बाधःस्यात् । यावत्त्वोपादाने च यावत्सामग्र्यन्तर्गतानुव्यवसायादिसामग्रीग्राह्यत्वाभावरूपसाध्यसत्त्वेन न बाधः । दीधितौ अप्रसिद्धेर्वेति । साध्याप्रसिद्धेर्वेत्यर्थः । घटज्ञानं प्रमा सर्वमभिधेयमित्यादिज्ञानविषयत्वस्यैव सर्वत्र सत्त्वात्तत्र तादृशविषयत्वाभावरूपसाध्याप्रसिद्धेरित्यर्थः । ननु यावत्त्वानिवेशे कथं बाधः साध्याभाववत्पक्षो हि बाधः प्रकृते च साध्याप्रसिद्ध्या साध्याभावस्याप्यप्रसिद्ध्या बाधासम्भवादित्यभावसाध्यकस्थले पक्षे साध्यात्मकाभावप्रतियोगिमत्त्वमेव बाध इति सिद्धान्तं द्रढयितुं साध्याप्रसिद्धिं ( नैयायिकसाध्ये इत्यर्थः ) दर्शयति यावत्त्वाघटितसाध्याप्रसिद्धावपीति । समुच्चये वाकारः । बाधः अप्रसिद्धिश्चेत्यर्थः । उक्तबाधपक्षेऽपि = पक्षे प्रतियोगिमत्त्वरूपबाधपक्षेऽपीत्यर्थः । उक्तमीमांसकसाध्ये = स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वरूपसाध्ये । पक्षनिष्ठाभावप्रतियोगित्वसाधनेनापि = प्रमात्वनिष्ठाभावप्रतियोगित्वसाधनेनापीत्यर्थः । कृतकृत्यतया । स्वतो ग्राह्यत्वं प्रमात्वनिष्ठाभावप्रतियोगीत्याकारकप्रतियोगित्वस्यापि साध्यत्वेन नैयायिकमतसिद्धिसम्भवात् । तत्साधनाभिप्रायेणेति = तादृशप्रतियोगित्वसाधनाभिप्रायेणेत्यर्थः । बाधस्येत्युक्तमिति । तथाच तादृशप्रतियोगित्वस्य साध्यतास्थले तादृशप्रतियोगित्वाभावरूपबाधस्य प्रसिद्ध्या बाधस्येत्युक्तिः संगता । तथाच स्वाश्रयज्ञानग्राहकसंवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिसामग्रीजन्यग्रहविषयत्वरूपस्वतोग्राह्यत्वे प्रमात्वनिष्ठाभावप्रतियोगित्वरूपसाध्यस्य विरहेण बाधसम्भवात् ।

तदभावसाधनाभिप्रायेण = स्वतोग्राह्यत्वाभावसाधनाभिप्रायेणेत्यर्थः ।

(गा०) भिप्रायेण *अप्रसिद्धेर्वेति* । प्रसिद्धसाध्यक एव वाध इत्याशयेन वाकार-सङ्गतिः । अन्यथा अप्रसिद्धिर्वाधश्च द्वयं द्वितीयपक्षे दूषणमवगन्तव्यम्

ननु सामग्र्यां यावत्त्वविशेषणमयुक्तम्, यावत्सामग्रीजन्यग्रहाप्रसिद्धेः, नहि सर्वाभिर्ज्ञानसामग्रीभिः किमपि ज्ञानं जन्यते ? यदि च यावती-स्सामग्रीः प्रातिस्विकरूपेणोपादाय तत्तज्जन्यग्रहविषयत्त्वं साध्यते तदा तदन्तर्ग-तानुमितिसामग्र्यादिजन्यत्वसाधने सिद्धसाधनादिकमेव दुर्वारम्, अनुव्यव-सायादिसामग्रीणां ताद्रूप्येण प्रवेशे मतत्रयसाधारण्यानिर्वाहः, तादृशसामग्रीत्व-

---

(प्रभा) अप्रसिद्धेर्वेति । तथाच स्वतोग्राह्यत्वाभावरूपसाध्यत्वाभिप्रायेण पूर्वोक्तरीत्या साध्याप्रसिद्धिरभिहितेत्यर्थः । उक्तवाधपक्षेऽपि = अभावसाधने पक्षे प्रतियोगिमत्त्वंवाधपक्षे-ऽपि । साध्याप्रसिद्धिसत्त्वेन – यत्किञ्चिज्ज्ञानपदेन घटज्ञानम्प्रमा सर्वमभिधेयमित्या-कारकसमूहालम्बनानुमितेरपि धर्त्तुं शक्यतया तद्विषयत्वस्य केवलान्वयित्वेन सर्वत्र सत्त्वात् तदभावरूपसाध्याप्रसिद्धिसत्त्वेनेत्यर्थः । अन्यथा = तादृशविषयत्वाभावसाधने । द्वितीयपक्षे = स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वाभावरूपनैयायिकसाध्यपक्षे इत्यर्थः । यथाश्रुतशब्दतो यावत्त्वं सामग्र्यां लभ्यते तच्च न सम्भवति पूर्वोक्तदोषताद-वस्थ्यादित्याशंकते नन्विति । यावत्सामग्रीजन्यग्रहाप्रसिद्धेः = साध्याप्रसिद्धेरित्यर्थः । संघटयति नहीति । अयम्भावः, व्यवसायानुव्यवसायसंवादिप्रवृत्तिजनकत्वलिङ्गकानुमित्यादि-सामग्रीभिः सकलाभिरेकस्य कस्य चिदनुव्यवसायादिग्रहस्यानुत्पत्तेः । प्रातिस्विकरूपेणेति = तत्तद्व्यक्तित्वेनेत्यर्थः । स्वाश्रयज्ञानविषयकग्रहजनिका यावत्यः सामग्र्यस्तादृशसामग्रीत्वसमाना-धिकरणोभयावृत्तिधर्मवत्त्वेनेति यावत् । साध्यते इति । तथाच तत्तत्सामग्रीजन्यत्वं तत्तज्ज्ञाने प्रसिद्धमेवेति । सिद्धसाधनादिकमेवेति । अयम्भावः, प्रातिस्विकरूपेण सामग्रीनिवेशे घटत्वप्रकारकज्ञानत्वम् तदप्रामाण्याग्राहकस्वाश्रयज्ञानविषयकग्रहजनकतत्तत्सामग्रीजन्यग्रहवि-षयत्वरूपसाध्यस्वरूपे पर्यवसिते तत्सामग्रीपदेन संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिसामग्री-मादाय तज्जन्यतादृशानुमित्यात्मकग्रहविषयत्वस्योक्तप्रमात्वे साधने सिद्धसाधनापत्तेः नैयायि-कैरपि तथा स्वीकारात् । आदिपदाद् वाधपरिग्रहः प्रत्येकविषयत्वस्य प्रत्येकरूपेण साध्यत्वा-दिति भावः । आदिना उद्देश्यासिद्धिपरिग्रहश्च । अत्र तादृशविषयताकूटस्य साधने न सिद्ध-साधनमिति चेन्न, वाधापत्तेः । अनुव्यवसायादिसामग्रीणामिति । आदिना भट्टमत-सिद्धज्ञाततालिङ्गकानुमितिसामग्र्याः स्वप्रकाशसामग्र्याश्च परिग्रहः । ताद्रूप्येणेति । अनु-व्यवसायादिसामग्रीत्वेन रूपेणेत्यर्थः । तथाच घटत्ववति घटत्वप्रकारकज्ञानत्वे तदप्रामाण्या-ग्राहकस्वाश्रयानुव्यवसायजनकयावत्सामग्रीजन्यग्रहविषयत्वे साध्ये गुरुभट्टयोरसंग्रहानुपपत्तिः । तादृशप्रमात्वं स्वाश्रयव्यवसायजनकसामग्रीजन्यग्रहविषयमित्युक्तौ मिश्रभट्टयोरसंग्रहः । तादृशप्रमात्वाश्रयज्ञाततालिङ्गकानुमितिजनकसामग्रीजन्यग्रहविषयत्वसाधने गुरुमिश्रयो-रसंग्रहः । अनुव्यवसायादिसामग्रीणां ताद्रूप्येण निवेशे इतरसामग्रीद्वयस्यालाभेन मतत्रयसा-धारण्यं न निर्वहतीतिभावः । एवञ्चैतादृशसामग्रीमध्ये प्रामाण्यानुमितिसामग्र्या अप्रवेशेन न वाधसिद्धसाधनावसरः तदाप्याह मतत्रयसाधारण्यानिर्वाह इति । तादृशेति = स्वाश्रय-

( दी० ) यावदिति फलतो ग्रहविशेषणम् । तथाच तादृशग्रहत्वव्यापक-विषयिताप्रतियोगित्वमर्थः ।

---

(गा०) व्यापकस्वग्राहकताकत्वनिवेशे नायं दोष इति चेत् ? तथापि ज्ञानग्राह-कत्वव्यापकत्वनिवेशेनैवोपपत्तौ सामग्रीत्वनिवेशवैयर्थ्यमित्यत आह *विशे-षणमिति* । स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यमिति फलितम् । व्यापकत्वरूपयावदर्थमन्तर्भाव्य निष्कर्षमाह *तादृशेति* ।

---

(प्रभा) ज्ञानग्राहकेत्यर्थः । स्वग्राहकताकत्वेति । स्वम् प्रमात्वं स्वघटितबहुव्रीहावन्यपदार्थः स्वमेव । ग्राहकताकत्वं ग्राहकताविशिष्टत्वम् वै० स्वनिरूपितजन्यतावद्ग्रहविषयत्वसंबन्धेन । स्वाश्रयज्ञानग्राहकसामग्रीत्वव्यापकजनकतानिरूपितजन्यतावद्ग्रहविषयत्वम्फलितम् । स्वग्राहक-ताकत्वं स्वग्राहकताकालीनत्वम्, तथाच प्रमात्वं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्री-त्वव्यापकस्वग्राहकताकालीनमिति फलितमित्यपि केचित् । उपपत्ताविति = स्वाश्रयज्ञान-ग्राहकताव्यापकजनकतानिरूपितजन्यतावद्ग्रहविषयत्वनिवेशेनैवोपपत्तावित्यर्थः । यथासन्नि-वेशे न वैयर्थ्यम् अखण्डाभावघटकतया सार्थक्यात् । ज्ञानग्रहत्वव्यापकत्वात् तादृश-सामग्रीजन्यग्रहत्वव्यापकत्वस्य भेदादितिभावः । अत्र तदप्रामाण्याविषयकग्रहत्वेनोपादानं सम्भवतीतिज्ञानशून्यः तेन रूपेण तदनुपादानाकर्तृत्वे सति तादृशज्ञानग्राहकसामग्रीजन्य-ग्रहत्वेनोपादानकर्तृत्वादिति दीधितिकृदुपरि कटाक्षयति निवेशवैयर्थ्यमिति । प्रमात्वं स्वे-तरभिन्नं स्वाश्रयज्ञानग्राहकसामग्रीत्वव्यापकस्वग्राहकताकत्वादितीतरभेदानुमाने व्यर्थविशेषण-घटितत्वरूपवैयर्थ्यमिति भावः ।

ननु वैयर्थ्योक्तिरसंगता गुरुभूतधर्मस्य लघुभूतधर्मे सामानाधिकरण्यत्वे एव वैयर्थ्य-सम्भवात् तच्चात्र न सम्भवति, तथाहि, तदप्रमाण्याग्राहकत्वनिष्ठावच्छेदकताभिन्नावच्छे-दकत्वानिरूपकज्ञानग्राहकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकज्ञानग्राहकत्वनिष्ठावच्छे-दकतानिरूपकज्ञानग्रहोत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वरूपसामग्रीत्वनिष्ठावच्छेदकताभिन्ना-धिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकाधिकरणत्वनिष्ठावच्छेदकतानिरूपिका या-ऽधिकरणनिष्ठावच्छेदकता तद्भिन्नावच्छेदकत्वानिरूपकाधिकरणनिष्ठावच्छेदकता-निरूपकवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेद-निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छे-दकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकाभावो हि सामग्रीत्वनिवेशपक्षे । अनिवेशपक्षे तु तदप्रामाण्याग्राहकत्वनिष्ठा-वच्छेदकताभिन्नावच्छेदकत्वानिरूपकतदप्रामाण्याग्राहकत्वनिष्ठावच्छेदकतानिरूपकज्ञानग्राहक-त्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकज्ञानग्राहकत्वनिष्ठावच्छेदकतानिरूपकाधिकरणत्व-

(गा०) तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्येत्यर्थः। तादृशज्ञानग्रहस्यैव तज्जनकसामग्रीजन्यग्रहत्वेनोपादानेऽपि यथासन्निवेशे न वैयर्थ्यम्। यद्यपि नैयायिकमतेऽपि प्रामाण्यविषयिताया घटत्वप्रकारकत्वविषयितात्वादिना अनुव्यवसायादिसामग्रीजन्यग्रहत्वव्यापकत्वात् सिद्धसाधनम्, घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वत्वावच्छिन्ननिरूपितविषयितात्वेन व्यापकत्व-

---

(प्रभा) निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकाधिकरणत्वनिष्ठावच्छेदकतानिरूपिकायाऽधिकरणनिष्ठावच्छेदकता तन्निरूपकवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकेत्यादिरीत्यैव निवेशाद् व्यापकतारूपाभावयोस्तादृशसमुदायत्वरूपसामग्रीत्वनिष्ठावच्छेदकताप्रवेशाप्रवेशाभ्यां भेदादितिचेन्न, तदप्रामाण्याग्राहकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतन्निष्ठावच्छेदकतानिरूपकज्ञानग्राहकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकज्ञानग्राहकत्वनिष्ठावच्छेदकतानिरूपिका या ज्ञानग्रहोत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वाधिकरणनिष्ठावच्छेदकता तद्भिन्नावच्छेदकत्वानिरूपकतन्निष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकेत्यादिक्रमेण निवेशे समुदायत्वनिष्ठावच्छेदकत्वानिवेशेनोभयोर्वैलक्षण्याभावात् सामग्रीत्वानिवेशेऽपि ज्ञानग्राहकताधिकरणं समुदाय एव, अनिवेशपक्षे समुदायत्वाधिकरणं समुदाय एवेति, उभयत्रैव समुदायनिष्ठावच्छेदकताप्रवेशेनोभयत्र समानावच्छेदकताप्रवेशात्।

विशेषणमिति। यावत्त्वं न सामग्र्यां विशेषणं किन्तु ग्रहस्यैवेति फलितार्थमाह स्वाश्रयेति। स्वम् प्रमात्वम्, यावत्त्वस्य चरमग्रहविशेषणत्वे यत्र तादृशसामग्र्या एक एव ग्रहो जनितस्तत्र यावत्त्वाप्रसिद्ध्या साध्याप्रसिद्धिरत आह व्यापकतारूपेति। दीधितौ तथा चेति। यावत्त्वस्य ग्रहविशेषणत्वे चेत्यर्थः। तत्तद्धर्मप्रकारकेति = घटत्वप्रकारकेत्यर्थः। तथाच तत्तज्ज्ञानप्रामाण्यं तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहवृत्तिभेदप्रतियोगितानवच्छेदकविषयितानिरूपकं नवेतिविप्रतिपत्तिस्वरूपं पर्यवसितम्। दीधितौ विषयिताप्रतियोगित्वमित्यस्य विषयितानिरूपकत्वमित्यर्थः। ननु तदप्रामाण्याविषयकतत्तद्धर्मप्रकारकज्ञानग्रहत्वव्यापकविषयितानिरूपकत्वमेव साध्यमस्तु व्यर्थमेव चिकीर्षितमित्यत आह तादृशज्ञानग्रहस्यैवेति। तत्तद्धर्मप्रकारकज्ञानग्रहस्यैवेत्यर्थः।

अथैवमपि तादृशग्रहत्वव्यापकत्वं विषयितायां केन रूपेण, विषयितात्वेन विशिष्टविषयितात्वेन वा? नाद्यः, सिद्धसाधनप्रसङ्गात्, न द्वितीयः, साध्याप्रसिद्धेरित्याशङ्कते यद्यपीत्यादिना। घटत्वप्रकारकत्वविषयितात्वादिनेति। आदिना विषयितात्वघटत्ववद्विशेष्यकत्वविषयितात्वपरिग्रहः। व्यापकत्वादिति। व्यापकत्वं द्विविधम् अत्यन्ताभावघटितं भेदघटितञ्च, तत्राद्यपक्षे विषयितायां तादृशग्रहत्वव्यापकत्वम् तादृशग्रहत्वाधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपम्। एवञ्च सिद्धसाधनम्, नैयायिकैरपि केवलघटत्ववद्विशेष्यकत्वस्य केवलघटत्वप्रकारकत्वस्य चानुव्यवसायादौ स्वीकारात्तादृशग्रहत्वाधिकरणेऽनुव्यवसायादौ प्रामाण्यनिरूपितविषयिताभावोपादानेऽपि घटत्वप्रकारकत्वनिरू-

(गा०) विवक्षा च न्यायमते साध्याप्रसिद्ध्या न सम्भवति । न च विशिष्टप्रामाण्ये तादृशग्रहनिष्ठभेदप्रतियोगितानवच्छेदकविषयितानिरूपकत्वपर्याप्तेस्साध्यतया नानुपपत्तिरिति वाच्यम्, तत्तज्ज्ञानव्यक्तिविषयितावच्छिन्नप्रामाण्यविषयितायास्तत्तज्ज्ञानरूपाश्रयभेदेन भिन्नतया चालनीन्यायेन तादृशग्रहनिष्ठभेदप्रतियोगितावच्छेदकतया तदनवच्छेदकप्रामाण्यविषयित्वाप्रसिद्धेः ।

यत्तु विषयितानिष्ठतादृशग्रहत्वव्यापकतायां निरूपितत्वसम्बन्धेनावच्छेद-

---

(प्रभा) पितविषयत्वाभावस्य वक्तुमशक्यतया तादृशाभावीयप्रतियोगितानवच्छेदकीभूतघटत्वप्रकारकत्वविषयितात्वधर्मवत्त्वरूपव्यापकत्वस्य प्रामाण्यविषयितायां सत्त्वात्तन्निरूपकत्वस्य च प्रामाण्ये सत्त्वादिति भावः ।

साध्याप्रसिद्ध्या न सम्भवतीति । तथाच यदि तादृशग्रहत्वाधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकं यद् घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वनिरूपितविषयितात्वं तद्वत्त्वमेव व्यापकत्वं विवक्ष्यते तदा साध्याप्रसिद्धिः, तादृशविशिष्टविषयितायां निरुक्तव्यापकत्वासम्भवादनुव्यवसायादावुक्तविशिष्टविषयित्वाभावस्यैव सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वात् । भेदघटितव्यापकतापक्षमाश्रित्य समाधातुं शङ्कते नचेति । विशिष्टप्रामाण्ये = तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपप्रामाण्ये । तादृशग्रहनिष्ठेति । तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठेत्यर्थः । भेदप्रतियोगितानवच्छेदकेति । तथाच व्यापकत्वं नात्यन्ताभावघटितं येनोक्तदोषसम्भवः, एवञ्च भेदप्रतियोगितानवच्छेदकत्वं घटत्वप्रकारकत्वादिविषयितायां प्रसिद्धमिति नाप्रसिद्धिः । सिद्धसाधनवारणाय पर्याप्तिनिवेशः, अन्यथा तादृशभेदप्रतियोगितानवच्छेदकीभूतघटत्वप्रकारकत्वविषयितानिरूपकत्वस्य प्रामाण्यैकदेशे घटत्वप्रकारकत्वे सत्वात् सिद्धसाधनसम्भवात् । तथाच प्रमात्वं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठभेदप्रतियोगितानवच्छेदकविषयितानिरूपकतापर्याप्त्यधिकरणं न वेति विप्रतिपत्तिस्वरूपं पर्यवसितमेतादृशभेदप्रतियोगितावच्छेदकत्वं प्रामाण्यविषयितायामेव मीमांसकानां सुशकं नतु नैयायिकानामिति न सिद्धसाधनम् । तत्तज्ज्ञानव्यक्तिविषयित्वावच्छिन्नेति । प्रामाण्याश्रयतत्तज्ज्ञानव्यक्तिनिरूपितविषयित्वावच्छिन्नेत्यर्थः । इदञ्च भिन्नत्वे हेतुः । समानाधिकरणविषयितयोरवच्छेद्यावच्छेदकभावेन तत्तज्ज्ञानव्यक्तिविषयितायाःप्रामाण्यविषयितायाश्चावच्छेद्यावच्छेदकभाव इति ।

ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकसामग्रीजन्यग्रहत्वनिरूपितविषयितानिष्ठव्यापकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावन्न वेति विप्रतिपत्तिस्वरूपम् । भावकोटिर्मीमांसकानां तादृशाभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वरूपतदभावो नैयायिकानां साध्य इति । तथाच गुर्वादिमते व्यवसायानुव्यवसायादौ निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयिता नास्तीति अभावो नानुव्यवसायादौ, मीमांसकमते तादृशविषयितासत्त्वात् इति मतमुपन्यस्य निरस्यति यत्त्विति ।

(गा० ) कत्वं साध्यम् निरूपितत्वसम्बन्धेन घटत्ववति घटत्वप्रकारकत्वविशिष्टसामान्याभावो न निरुक्तज्ञानग्रहे इति परमते तथाविधप्रामाण्ये तथाविधव्यापकतावच्छेदकत्वमक्षतमेवेति न बाधः, न्यायमते च केवलघटत्वप्रकारकत्वत्वाद्यवच्छिन्ननिरूपितविषयिताया विशिष्टप्रामाण्यनिरूपितत्वविरहात् तादृशविषयिताशालिन्यपि अनुव्यवसाये निरूपितत्वसम्बन्धेन विशिष्टप्रामाण्यावच्छिन्नविषयिताविरहस्य अक्षततया विशिष्टप्रामाण्ये न तादृशानुव्यवसायनिष्ठाभावप्रतियोगितानवच्छेदकत्वमिति न सिद्धसाधनम्, घटत्ववति घटत्वप्रकारकत्वादीनां तत्तद्घटविशेष्यकत्वावच्छिन्नघटत्वादिप्रकारकत्वादिरूपाणां विशेष्यभेदेन भिन्नतया प्रत्येकं घटत्वादिप्रकारकघटादिज्ञानग्रहत्वसमानाधिकरणाभावप्रतियोगितायां निरूपितत्वसम्बन्धेनावच्छेदकत्वेऽपि

---

(प्रभा) साध्यमिति । अयम्भावः, तत्तज्ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववन्नवेति विप्रतिपत्तिस्वरूपम् । अत्रावच्छेदकत्वाभावरूपविधिकोटिर्मीमांसकानाम् । तादृशाभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वरूपतदभावो नैयायिकानां साध्य इति । तथाच गुर्वादिमते व्यवसायानुव्यवसायादौ निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयिता नास्तीत्यभावो न वक्तुं शक्यते, तन्मते तस्य सत्त्वात् किन्तु निरूपितत्वसम्बन्धेन घटत्वविशिष्टविषयिता नास्तीत्यभाव एव, तादृशाभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता घटत्वादौ तदभावरूपव्यापकत्वं विषयितायां तादृशावच्छेदकत्वरूपं व्यापकतावच्छेदकत्वं प्रामाण्ये इति समन्वयः ।

नैयायिकमते तु तादृशसामग्रीजन्यानुव्यवसायादौ निरूपितत्वसम्बन्धे प्रामाण्यविशिष्टविषयित्वाभावसत्त्वान्निरूपितत्वसम्बन्धवाच्छिन्नाव च्छेदकत्वरूपनिषेधकोटिनिर्वाह इति ध्येयम् । निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयितायां व्यापकत्वं प्रामाण्ये च तदवच्छेदकत्वमुपपादयति निरूपितत्वसम्बन्धेन घटत्ववतीति । घटत्ववद्विशेष्यकत्वावच्छिन्नेत्यर्थः । घटत्वप्रकारकत्वविशिष्टेति । विषयित्वस्येति शेषः । वै० निरूपितत्वसम्बन्धेन । निरुक्तग्रहे इति = स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहे इत्यर्थः । तथाच निरूपितत्वसम्बन्धेन घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वविशिष्टविषयितासामान्याभावो न स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहे इति भावः । बाधं निरस्यति परमते इति । मीमांसकमते इत्यर्थः । तथाविधप्रामाण्ये = विशिष्टप्रामाण्ये । तथाविधव्यापकतावच्छेदकत्वमिति = तादृशविषयितानिष्ठव्यापकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वमित्यर्थः । तादृशविषयिताशालिन्यपि = केवलघटत्वप्रकारकत्वत्वावच्छिन्ननिरूपितविषयिताशालिन्यपीत्यर्थः । विशेष्यभेदेन भिन्नतयेति । अयम्भावः, अयं घट इत्याद्याकारकं ज्ञानमेकदा घटत्वेन रूपेण तद्घटविषयकमेव भवति तदानीं तद्घटविशेष्यकत्वघटितप्रमात्वस्यैव तत्र भानात् अपरघटविशेष्यकत्वघटितस्य घटत्ववति घटत्व-

(गा०) विशिष्य तत्तद् घटादिव्यक्तिविशेष्यकत्वघटितप्रामाण्ये तत्तद्व्यक्तिविशेष्यकघटत्वादिप्रकारकज्ञानग्रहत्वघटितसाध्यस्य साधनीयतया न बाध इति।

तदपि न ? गुरुमते व्यवसायरूपग्रहग्रहे विशिष्टप्रामाण्यनिरूपिताधिकरणतासत्त्वेनैव तस्य निरूपितत्वसम्बन्धेन व्यवसायवृत्त्यभावप्रतियोगितायामनवच्छेदकत्वाद् व्यवसाये प्रामाण्यविषयित्वासिद्धेः। तादृशाग्रहनिष्ठाभावप्रतियोगितावच्छेदकत्वपर्याप्तिविरहरूपव्यापकतावच्छेदकत्वस्य

---

(प्रभा) प्रकारकत्वरूपप्रमात्वस्य चालनीन्यायेनाभावः सुलभः। व्यापकत्वासिद्धिम्परिहरति विशिष्य तत्तद् घटविशेष्यकत्वघटितप्रामाण्ये इति। तथाच घटत्ववद्घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपम् प्रामाण्यं तादृशप्रामाण्याश्रयज्ञानग्राहकसामग्रीजन्यग्रहत्वनिरूपितविषयितानिष्ठव्यापकतानिरूपितेत्यादि विशिष्यैव पक्षसाध्यभाव इति न चालनीन्यायेनाभावमादाय व्यापकत्वासम्भवः। तादृशप्रामाण्याश्रयज्ञानग्रहे तादृशप्रामाण्यविशिष्टविषयित्वाभावविरहेणानवच्छेदकत्वं तादृशप्रामाण्येऽक्षतमेवेति भावः।

स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावे साध्येऽपि व्यवसायरूपज्ञानग्रहे प्रमात्वनिरूपिताधिकरणतासत्त्वेन निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टाधिकरणत्वाभावस्य धर्त्तुमशक्यतया तादृशाभावीयप्रतियोगितावच्छेदकत्वाभावरूपव्यापकतावच्छेदकत्वस्य प्रमात्वे सत्त्वाद् व्यवसाये प्रामाण्यविषयितासत्त्वे मानाभाव इत्याशयेन यत्तुमतं दूषयति तदपि नेति। विशिष्टप्रामाण्यनिरूपिताधिकरणतासत्त्वेनैवेति। एवकारेण निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयिताव्यवच्छेदः। विशिष्टप्रामाण्यस्य प्रामाण्यविषयित्वासिद्धेः। तथाचोद्देश्यासिद्धिरित्यर्थः। साध्यघटकव्यापकतायां विषयितानिष्ठत्वस्यानिवेशात्तादृशग्रहे निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टाधिकरणत्वाभावस्यासत्त्वेन निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावरूपसाध्यसिद्धिसम्भवेऽपि प्रामाण्यविषयित्वासिद्धिः। निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावरूपव्यापकतावच्छेदकत्वस्य प्रामाण्ये सिद्धावपि प्रामाण्यविषयितायां तादृशग्रहत्वव्यापकत्वसिद्धिस्तदा स्याद् यदि निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयिताया अभावस्तादृशग्रहे न स्यात्तदेव तु न, तादृशग्रहे प्रामाण्यविषयिताया अस्वीकारात्। तथाच तादृशग्रहे प्रामाण्यविषयित्वासिद्धया प्रामाण्याधिकरणतामादाय प्रामाण्ये व्यापकतावच्छेदकत्वरूपानाकाङ्क्षितार्थसिद्धयाऽर्थान्तरापत्तिरेव। उद्देश्यासिद्धौ सत्यामनाकाङ्क्षितार्थसिद्धिरेवार्थान्तरमिति सिद्धान्तात् तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीजन्यग्रहत्वनिरूपितविषयितानिष्ठव्यापकतानिरूपितं निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वं साध्यते इति नोद्देश्यसिद्धिर्यतःसाध्यकोटौ विषयितानिष्ठत्वस्येदानीं निवेशेन गुरुमतसिद्धव्यवसायात्मकव्यवसायात्मकज्ञानेऽपि प्रामाण्याधिकरणत्वेन प्रामाण्यविषयिताया अनुमित्यभ्युपगमात् इत्यतः सिद्धसाधनमाह तादृशाग्रहनिष्ठेति। स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठेत्यर्थः। तादृशग्रहवृत्त्यभावप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतापर्याप्तिविरहस्य साध्यत्वम्।

( गा० ) केवलघटत्वप्रकारकत्वादौ सत्त्वेनापि अवच्छिन्नत्वान्तविशिष्टे घटत्वादिप्रकारकत्वे पक्षे तत्साधने सिद्धसाधनस्य दुर्वारत्वाच्च, विशिष्टस्यानतिरिक्तत्वात् ।

नच विशेषणान्तर्भावेन विशेष्ये अवच्छेदकत्वपर्याप्तिविरहसिद्धेरुद्देश्यतया तदसिद्ध्या न सिद्धसाधनमिति वाच्यम् ? अनुमानात् पक्षतावच्छेदकविशेषणांशे साध्यवत्त्वज्ञानासम्भवेन तदन्तर्भावेन पक्षे साध्यवत्त्वसिद्धेरुद्देश्यत्वासम्भवात् ।

नच तादृशविशेषणावच्छेदेन विशेष्ये साध्यवत्त्वसिद्धेरुद्देश्यताभ्युपगम्य

---

( प्रभा ) केवलघटत्वप्रकारकत्वादौ सत्त्वेनेति । तस्य नैयायिकमते स्वतोग्राह्यत्वात् । ननु केवलघटत्वप्रकारकत्वे तादृशावच्छेदकत्वाभावसत्त्वेऽपि घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रमात्वे तादृशावच्छेदकत्वाभावरूपसाध्यस्य नैयायिकैरस्वीकारात्कुतः सिद्धसाधनमत आह विशिष्टस्यानतिरिक्तत्वादिति । विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानङ्गीकारादिह सिद्धसाधनमिति भावः ।

सिद्धसाधनपरिहारमाशङ्कते नचेति । विशेषणान्तर्भावेनेति । विशेषणे विशेष्ये उभयत्रैव, तद्गतद्वित्वावच्छेदेनेति यावत् । तादृशावच्छेदकत्वपर्याप्तिविरहस्साध्यः । तथाच विशेषणं घटत्ववद्विशेष्यकत्वं विशेष्यं घटत्वप्रकारकत्वमित्युभयत्रैव तद्गतद्वित्वावच्छेदेन निरुक्तसाध्यस्य नैयायिकैरनङ्गीकारान्न सिद्धसाधनमिति भावः ।

दूषयति अनुमानादिति । पक्षतावच्छेदकविशेषणांशे = पक्षतावच्छेदकीभूतविशेषणांशे इत्यर्थः । घटत्ववद्विशेष्यकत्वावच्छिन्नत्वांशे इति यावत् । साध्यवत्त्वज्ञानासम्भवेनेति = तादृशावच्छेदकत्वपर्याप्तिविरहरूपसाध्यवत्त्वज्ञानासम्भवेनेत्यर्थः । तादृशावच्छेदकतापर्याप्तिविरहरूपसाध्यविरहादिति भावः । अयंभावः, यथा नीलरूपवत्पर्वतो वह्निमानित्यादौ नीलरूपांशे ( नीलरूपे ) वह्निमत्त्वज्ञानासम्भवेन न नीलरूपांशे इच्छीयविशेष्यत्वरूपमुद्देश्यत्वं सम्भवति किन्तु नीलरूपविशिष्टपर्वतांशे एव, तथा प्रकृतेऽपि घटत्ववद्विशेष्यकत्वरूपपक्षतावच्छेदकेऽपि निरुक्तसाध्यस्योद्देश्यत्वासम्भवात् पक्षतावच्छेदकविशिष्टपक्षे एव साध्यानुमितिर्भवति नतु पक्षतावच्छेदके नीलरूपादौ । तदन्तर्भावेन = पक्षतावच्छेदकान्तर्भावेन ।

विशेषणान्तर्भावेनेत्यस्य विशेषणे विशेष्ये इत्युभयत्रैव विशेषणावच्छेदेन विशेष्ये वेत्यर्थद्वयं सम्भवति तत्राद्यं दूषयित्वा द्वितीयं दूषयति द्वितीयनचेत्यादिना । नचेत्यस्य सिद्धसाधनपरिहारसम्भव इत्यनेनान्वयः । तादृशविशेषणावच्छेदेनेति । घटत्ववद्विशेष्यकत्वावच्छिन्नत्वघटत्वप्रकारकत्वत्वरूपविशेषणावच्छेदेनेत्यर्थः । विशेष्ये घटत्वप्रकारकत्वे तादृशविशेषणावच्छिन्ने विशेष्ये इति यावत् । साध्यवत्त्वसिद्धेरिति । तादृशग्रहवृत्त्यभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतापर्याप्तिविरहरूपसाध्यवत्त्वानु-

(गा०) सिद्धसाधनपरिहारसम्भवः, विशेष्यनिष्ठे अवच्छेदकत्वपर्याप्ति-विरहवत्त्वे तन्निष्ठस्य घटत्वप्रकारकत्वत्वादेरिव अवच्छिन्नत्वान्तविशेषण-स्यापि अवच्छेदकतायाःन्यायमतसिद्धत्वात् तादृशधर्मस्य विशेष्यविशेषणस-मुदायनिष्ठावच्छेदकत्वपर्याप्तेरनवच्छेदकत्वात् समुदायनिष्ठावच्छेदकतापर्या-प्त्यभाववत्त्वस्य परोद्देश्यसिद्धिकस्यैवावच्छेदकताया एकदेशात्मकविशेषयो सम्भवादिति ।

---

(प्रभा) मितेरित्यर्थः । सिद्धसाधनपरिहारसम्भव इति । तथाच घटत्ववद्विशेष्यकत्वा-वच्छिन्नत्वरूपविशेषणावच्छेदेन विशेष्ये घटत्वप्रकारकत्वादौ तादृशावच्छेदकतापर्याप्ति-विरहरूपसाध्यस्य नैयायिकैरनङ्गीकारान्न सिद्धसाधनमिति भावः । दूषयति विशेष्यनिष्ठे इति = घटत्वप्रकारकत्वनिष्ठे इत्यर्थः । अवच्छेदकतापर्याप्तिविरहवत्त्वे इति । तादृश-ग्रहवृत्त्यभावप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतापर्याप्तिविरहरूपसाध्यव-त्त्वे इत्यर्थः । व्यापकतावच्छेदकत्वे इति यावत् । तन्निष्ठस्य = घटत्वप्रकारकत्वरूपविशेष्यनिष्ठ-स्येत्यर्थः । विशेष्यनिष्ठत्वस्य व्यापकतावच्छेदकतावच्छेदकत्वे प्रयोजकत्वम् उद्देश्यतावच्छेदक-विधेययोःप्रयोज्यप्रयोजकभावात् । घटत्वप्रकारकत्वत्वादेरिवेति । यथा घटत्वप्रकारकत्व-रूपविशेष्यनिष्ठत्वाद् घटत्वप्रकारकत्वत्वादेर्निरुक्तव्यापकतावच्छेदकतावच्छेदकत्वसम्भवेन घटत्वप्रकारकत्वत्वावच्छेदेन व्यापकतावच्छेदकत्वं तथा घटत्ववद्विशेष्यकत्वावच्छिन्न-त्वस्यापि घटत्वप्रकारकत्वरूपविशेष्यनिष्ठत्वान्निरुक्तव्यापकतावच्छेदकतावच्छेदकत्वस्याव-श्यकत्वाद् घटत्ववद्विशेष्यकत्वावच्छिन्नत्वरूपविशेषणावच्छेदेनापि निरुक्तव्यापकतावच्छे-दकत्वं नैयायिकेनाप्यगत्याऽङ्गीकरणीयमिति भवति सिद्धसाधनम् । ननु घटत्वादि-प्रकारकत्वत्वमिव घटत्ववद्विशेष्यकत्वावच्छिन्नत्वस्यावच्छेदकतापर्याप्तिविरहावच्छेद-कत्वेऽपि न्यायमते समुदायेऽवच्छेदकत्वपर्याप्तेःसत्त्वात्तादृशविशेषणस्य समुदायवृत्त्य-वच्छेदकतापर्याप्त्यवच्छेदकत्वं नैयायिकेनाप्यवश्यं स्वीकार्य्यं, तादृशविशेषण-विशिष्टविशेष्याभावादेव तादृशसमुदाये निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता-पर्याप्तिसत्त्वात्, तथाच तदवच्छेदेन कुतो न्यायमतेऽवच्छेदकतापर्याप्तिविरहस्य सिद्धत्वात् सिद्धसाधनमित्यत आह तादृशधर्मस्येति । विशेषणीभूतघटत्वादिमद्विशेष्यकत्वावच्छिन्न-त्वरूपधर्मस्येत्यर्थः । विशेष्यविशेषणसमुदायनिष्ठावच्छेदकतापर्याप्तेरनवच्छेदकत्वा-दिति । तादृशग्रहवृत्तिर्यो विशेषणविशिष्टविशेष्यस्य विशिष्टाभावस्तत्प्रतियोगितानिरूपित-निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताया विशेषणविशिष्टविशेष्यसमुदाये एव पर्याप्ततया घटत्ववद्विशेष्यकत्वावच्छिन्नत्वधर्मस्य निरुक्तावच्छेदकतापर्याप्तिविरहावच्छेदकत्वात् प्रतियो-ग्यनवच्छेदकताया अभावावच्छेदकतानियतत्वस्य प्राचीनमतसिद्धत्वात् ।

अत्रायमाशयः, यद्यपि तादृशग्रहे निरूपितत्वसंसर्गेण घटत्ववद्विशेष्यकत्वावच्छिन्नत्व-विशिष्टघटत्वप्रकारकत्वविशिष्टविषयिता नास्तीत्यभावे प्रतियोगितावच्छेदकता प्रामाण्ये वर्त्तते तथापि तादृशावच्छेदकतावच्छेदकं घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्व-गतसमुदायत्वमेव नतु केवलघटत्वप्रकारकत्वत्वं घटत्ववद्विशेष्यकत्वावच्छिन्नत्वं तदवच्छेदकं

(गा ) एतेन प्रामाण्यनिरूपितत्वविशिष्टविषयितात्वं पक्षीकृत्य तादृशग्रहत्वव्यापकतावच्छेदकत्वकोटिका विप्रतिपत्तिः, तादृशग्रहत्वव्यापकतावच्छेदकघटत्वादिमद्विशेष्यकत्वावच्छिन्नघटत्वादिप्रकारकत्वनिरूपितत्वविशिष्ट-विषयितात्व-घटत्वादिविषयितात्वान्यतररूपवद्विषयिताकत्वकोटिकविप्रतिपत्तिरपि वा न साधीयसीति फलितम्।

तथापि तादृशग्रहनिष्ठाभावप्रतियोगितात्वावच्छिन्नं पक्षीकृत्यैव विशिष्टप्रामाण्यविषयितात्वानवच्छिन्नत्वकोटिकविप्रतिपत्तौ तात्पर्यात् न कश्चिद्दोषः।

---

(प्रभा) तदवच्छेदेन तादृशावच्छेदकत्वासत्वादन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वात्। एवञ्च प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वनियमात् तादृशग्रहवृत्त्यभावीयप्रतियोगितानिरूपित-निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतारूपप्रतियोगिनोऽवच्छेदकत्वस्य घटत्ववद्विशेष्यकत्वा-वच्छिन्नत्वरूपविशेषणे विरहेण तादृशावच्छेदकतापर्याप्तिविरहरूपव्यापकतावच्छेदकता-वच्छेदकत्वस्य तादृशविशेषणे सत्त्वेन सिद्धसाधनस्य दुर्वारत्वात् इति। यद्यपि प्रति-योग्यनवच्छेदकस्याभावावच्छेदकत्वमिति न्यायो हि सिद्धान्तलक्षणे दूषितस्तथापि प्राचीन-मतेन तथोक्तम् इति।

घटत्वप्रकारकत्वनिरूपितविषयितात्वव्यापकतावच्छेदकत्वस्य सत्त्वेन घटत्ववद्विशेष्य-कत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वनिरूपितविषयितात्वेऽपि व्यापकतावच्छेदकत्वं दुर्निवारमिति सिद्धसाधनो दुर्वार इत्याशयेनाह एतेनेति। साधनदोषेणेत्यर्थः।

प्रमाण्यनिरूपितत्वविशिष्टविषयितात्वम् = घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्व-निरूपितत्वविशिष्टविषयितात्वमित्यर्थः। तादृशग्रहत्वेति = स्वाश्रयज्ञानग्राहकसामग्रीजन्य-ग्रहत्वेत्यर्थः। व्यापकतावच्छेदकेति। अन्यतरेत्यनेनास्यान्वयः। विषयिताकत्व-कोटिकेति। प्रामाण्यं पक्षीकृत्येति शेषः। तथाच प्रामाण्यं तादृशान्यतररूपवद्विषयिताकं न वेति विप्रतिपत्तिस्वरूपं पर्यवसितम्। अत्र तादृशग्रहत्वव्यापकतावच्छेदकघटत्वादि-विषयितात्वमात्रोपादाने सिद्धसाधनम्। तादृशग्रहत्वव्यापकतावच्छेदकघटत्ववद्विशेष्यकत्वा-वच्छिन्नघटत्वप्रकारकत्वनिरूपितत्वविशिष्टविषयितात्ववद्विषयिताकत्वमात्रोपादाने साध्या-प्रसिद्धिरतोऽन्यतरोपादानमिति।

तादृशग्रहेति = स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहेत्यर्थः। तथाच स्वाश्रयज्ञान-ग्राहकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगितात्वावच्छिन्नं घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्व-प्रकारकत्वनिरूपितविषयितात्वानवच्छिन्नं न वेति विप्रतिपत्तिस्वरूपम्, यत्किञ्चित्पटादिविष-यित्वनिष्ठप्रतियोगित्वे विशिष्टप्रामाण्यविषयितात्वानवच्छिन्नत्वस्योभयमतसिद्धतया सिद्ध-साधनवारणाय तादृशप्रतियोगितात्वावच्छिन्नेति। विशिष्टप्रामाण्येति = घटत्ववद्-विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वरूपप्रामाण्येत्यर्थः।

( दी० ) ज्ञानग्राहकात्मादिजन्ययावद्ग्रहविषयत्वस्याप्रसिद्धेस्सामग्रीति ।

(गा०) ज्ञानग्राहकेति । घटत्वादिप्रकारज्ञानग्राहकेत्यर्थः । *आत्मादीति* । यद्यपि आत्मनोऽप्रामाण्यग्रहजनकतया अप्रामाण्याग्राहकत्वविशेषणेन व्यावृत्तेरिदमसङ्गतम्, तथापि अतद्गुणसंविज्ञानबहुव्रीहिणा शरीरविशेषादेरेव विवक्षणीयतया न दोषः ।

अथवा स्वयमप्रामाण्येग्राहकपदस्य प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यार्थकत्वेन व्याख्येयतया आत्मनःप्रामाण्यग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया तद्विशेषणेन न व्यावृत्तिरिति यथाश्रुतमेव साधु । *अप्रसिद्धेरिति* । पटत्वादिप्रकारकज्ञानग्रहस्यापि घटत्वादिप्रकारकज्ञानग्राहकजन्ययावद्ग्रहान्तर्गततया गुरुमतातिरिक्तमते तादृशयावद्ग्राह्यत्वस्याप्रसिद्धेरिति भावः । ज्ञानत्वविशिष्टविषयकयावद्ग्रहोपादानेन

---

( प्रभा ) ननु पूर्वकल्पेऽपि विशिष्टप्रामाण्यगतसमुदायत्वं स्वाश्रयज्ञानग्राहकसामग्रीग्रहनिष्ठाभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं न वेति विप्रतिपत्तिस्वीकारेणैवोपपत्तौ तथा नीत्याद्यनुसरणं निरर्थकमिति चेन्न, लाघवमादृत्य तत्कल्पानुसरणादिति । दीधितौ अप्रसिद्धेरिति । आत्मजन्ययावद्ग्रहविषयत्वस्य कुत्राप्यसत्त्वादिति भावः । प्रामाण्यग्राहकत्ववदप्रामाण्यग्राहकत्वस्याप्यात्मनि सत्त्वादप्रामाण्यग्राहकत्वविशेषणेनैवात्मनो वारणं सम्भवतीत्याशयेन शङ्कते यद्यपीति । इदम् = अप्रसिद्धिदानम् । समाधत्ते तथापीति । अतद्गुणसंविज्ञानबहुव्रीहिणा = आत्मा आदिर्यस्येत्येतद्गुणसंविज्ञानरूपो बहुव्रीहिस्तेनेत्यर्थः । शरीरविशेषादेरपीति । सामान्यशरीरग्रहणे पुनरप्रसिद्धितादवस्थ्यं शरीरस्याप्रामाण्यग्रहजनकतयाऽप्रामाण्याग्राहकत्वविशेषणेनैव तद्वारणसम्भवादतो विशेषपदं यच्छरीरावच्छेदेनाप्रामाण्यग्रहो न जातस्तच्छरीरलाभार्थम्, तथाच यच्छरीरावच्छेदेनाप्रामाण्यग्रहो न जातस्तच्छरीरमादायाप्रसिद्धिरिति भावः । यादृशात्मनि अप्रामाण्यग्रहो न जातस्तादृशात्मविशेषमादायाप्यप्रसिद्धिस्सम्भवति इत्यतःशरीरविशेषादेरित्यत्रादिपदमात्मविशेषपरिग्रहार्थम्, एतादृशशरीरविशेषादेरप्रामाणिकत्वे आह अथवेति ।

केचित्तु शरीरविशेषादेरित्यत्रादिना इन्द्रियविशेषपरिग्रहः । यादृशात्मनि अप्रामाण्यग्रहो न जातस्तादृशात्मविशेषोपादानेनाप्यप्रसिद्धिसम्भवे इदमसङ्गतमित्यरुचेरथवा कल्पानुधावनमिति वदन्ति । स्वयम् = दीधितिकारेण । भट्टमतसिद्धतयेति । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धं यत्तदन्यतया आत्मनः संग्रहादितिभावः । तद्विशेषणेन = अप्रामाण्याग्राहकत्वविशेषणेन । न व्यावृत्तिः । आत्मन इत्यनुवर्त्तते । पटत्वादिप्रकारकज्ञानग्रहस्यापीति । तथाच सामग्रीपदानुपादाने घटत्वप्रकारकघटविशेष्यकज्ञानविषयकज्ञानजनकयत्किञ्चित्कारणीभूतं यद् आत्मशरीरेन्द्रियादिकं तज्जन्ययावद्ग्रहान्तर्गतपटत्ववति पटत्वप्रकारकज्ञानग्रहादेरपि घत्तु शक्यतया तद्विषयत्वस्य गुरुमता-

(गा० ) ज्ञानत्वे प्रसिद्ध्युपपादनेऽपि घटत्ववति घटत्वप्रकारकत्वादौ बाधवारणमशक्यमेवेति बोध्यम् ।

*सामग्रीतीति* । यद्यपि सामग्रीपदस्य यावत्कारणपरतया घटत्वादिप्रकारकज्ञानग्राहकयावत्कारणजन्यग्रहघटितसाध्यं पर्यवसितम्, तथाचाप्रसिद्धिः, कस्याप्यनुव्यवसायादेर्घटत्वादिप्रकारकव्यवसायग्राहकतत्तद्व्यवसायतत्तन्मनोयोगादिरूपनानाकारणव्यक्तिघटितसमुदायजन्यत्वासम्भवात्; सामग्रीपदेन प्रागभावमात्रोपादाने गुरुमिश्रयोर्मते ज्ञाततालिङ्गकानुमितेः शशविषाणायमानतया व्यवसायादिरूपज्ञानग्रहस्यैव प्राभाकरादिमते ज्ञाततालिङ्गकानुमितित्वेन भट्टाभिमानविषयतया तत्प्रागभावस्य ज्ञानग्राहकतया भट्टाभिमतत्वमिति व्यवसायादिरूपज्ञानग्रहस्य निर्वाच्यसाध्यघटकत्वानुपपत्तेः । नच व्यवसायादिप्रागभावे ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन भट्टाभिमाने तत्र प्रामाण्यग्राहकत्वमपि तदभिमतमिति प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टा-

---

(प्रभा) तिरिक्तमतेऽप्रसिद्धतया साध्याप्रसिद्धिः स्यात्, सामग्रीपदोपादाने तु केवलात्मनः केवलशरीरस्य केवलेन्द्रियादेश्च घटतुमशक्यत्वान्न साध्याप्रसिद्धिः । गुरुमते ज्ञानमात्रस्य त्रितयविषयकत्वेनात्मादिजन्ययावद्ग्रहविषयत्वस्यात्मनि आत्मत्वे च प्रसिद्धत्वाद् गुरुमतातिरिक्तमते इत्युक्तम् । ननु तादृशज्ञानग्राहकजन्यग्रहे ज्ञानत्वविशिष्टविषयकत्वं निवेशनीयं तथाच ज्ञानत्वेतत्प्रसिद्धिरित्यत आह बाधवारणमशक्यमेवेति ।

अप्रसिद्धिरिति । घटत्ववति घटत्वप्रकारकज्ञानत्वाश्रयघटत्ववति घटत्वप्रकारकज्ञानग्रहत्वेन पुरुषकालाद्यननुगतसकलज्ञानसंग्रहेण तज्जनकयावत्कारणपदेन च तादृशज्ञानोत्पादकसकलकारणानां संग्रहे तज्जन्यस्यैकस्य कस्य चिद् ग्रहस्याप्रसिद्धेरिति । स्वाश्रयज्ञानविषयकयत्किञ्चिद्ग्रहजनकयावत्कारणजन्यग्रहेतिरीत्योपादाने तु तादृशयत्किञ्चिद्ग्रहवदेव संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिमादाय सिद्धसाधनापत्तेरतः स्वाश्रयज्ञानविषयकग्रहत्वावच्छिन्नजन्यतानिरूपितजनकतावन्ति यावन्ति तावज्जन्यग्रहेत्यादिरीत्या निवेशे सकलघटानुव्यवसायप्रयोजकमनोयोगादीनां संग्रहे तज्जन्यस्यैकस्य ग्रहस्याप्रसिद्धेरिति भावः । प्रागभावमात्रोपादाने इति । तथा च स्वाश्रयज्ञानग्राहकप्रागभावजन्यग्रहेत्यादिरीत्योपादाने इत्यर्थः । अयम्भावः, प्रागभावेन सह कार्यकारणभावः तदनुव्यवसायत्वेन तदनुव्यवसायप्रागभावत्वेनैकप्रागभावत्वस्याननुगतत्वात् । तथाच स्वाश्रयज्ञानग्राहकप्रागभावपदेन तदनुव्यवसायप्रागभावस्यैव धर्त्तव्यतया तज्जन्यग्रहस्य तदनुव्यवसायस्यैव प्रसिद्धतया नाप्रसिद्धिः । व्यवसायादिरूपज्ञानग्रहस्येति । आदिपदादनुव्यवसाय परिग्रहः । साध्यघटकतानुपपत्तेरिति । एवञ्च व्यवसायादिप्रागभावादेरेव ज्ञानग्राहकत्वेनाभिमततया वस्तुतो व्यवसायप्रागभावतया प्रामाण्याग्राहकत्वेन भट्टाभिमततया प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धं यत्तदन्यत्वविरहेण व्यवसायादिप्रागभावस्य साध्यघटकत्वानुपपत्तिस्तथाच गुरुमिश्रमतासंग्रहप्रसङ्ग इति भावः । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन यद् भट्टमतसिद्धं तदन्यत्वं प्रागभावे व्युत्पादयति नचेत्यादिना ।

(गा०) भिमतं तदन्यत्वं तत्राक्षतमेवेति तज्जन्यग्रहस्यापि प्राभाकरादीनां साध्यघटकतेति वाच्यम् ? ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन प्रामाण्यग्राहकत्वाभिमानविषयस्यापि व्यवसायादिप्रागभावत्वेन तेषाम् प्रामाण्याग्राहकत्वाभिमानविषयतया व्यवसायादिप्रागभावस्य साध्यघटकभेदप्रतियोगित्वात् ।

यदि च एकरूपेण तदभ्युपगमोऽवश्यं विवक्षणीयः, अन्यथा कारणसमुदायरूपसामग्रीनिवेशे व्यवसायादिसामग्र्या ज्ञाततालिङ्गकानुमितिसामग्रीत्वेन ज्ञानग्राहकतया व्यवसायादिसामग्रीत्वेन प्रामाण्याग्राहकतया भट्टाभिमतत्वात् तस्याः साध्यघटकत्वानुपपत्तेः; तथा च प्रागभावमात्रनिवेशेऽपि न दोष इति विभाव्यते तथापि अग्रे ओदनकामकार्यताज्ञानविषयः पाक इत्यादिवाक्यजशाब्दबोधस्य गुरुमते शब्दानुपस्थाप्यौदनसाधनताज्ञानविषयत्वरूपयोग्यताविषयकस्य सामग्र्याः शब्दाजन्यतादृशयोग्यताज्ञानघटिततया ज्ञानग्राहकत्वेन भट्टमतासिद्धत्वसम्पादनं दीधितिकृतां

---

(प्रभा) व्यवसायादिप्रागभावस्येति । आदिपदादनुव्यवसायपरिग्रहः । साध्यघटकभेदप्रतियोगित्वात् = साध्यघटको हि ज्ञाततालिङ्गकानुमिति प्रागभावस्तद्भिन्नत्वादित्यर्थः । एतेन स्वाश्रयज्ञानग्राहकप्रागभावपदे नज्ञाततालिङ्गकानुमिति प्रागभाव एव प्रसिद्ध इति नाप्रसिद्धिःकिन्तु गुरुमिश्रमतासंग्रह इति प्रद्योतितम् ।

यदिचैकरूपेणेति । येन रूपेण ज्ञानग्राहकत्वं तेन रूपेण प्रामाण्याग्राहकत्वमिति तदर्थः । तथाच तत्प्रामाण्यग्राहकतानवच्छेदकत्वेन ज्ञानग्राहकतावच्छेदकत्वेन भट्टाभिमतं यद्रूपं तद्रूपभिन्नं यज्ज्ञानग्राहकतावच्छेदकं रूपं तद्रूपावच्छिन्नजनकतानिरूपितजन्यतावद्ग्रहविषयत्वं साध्यं पर्यवसितम् । न दोष इति = नाप्रसिद्धिर्नापि साध्यघटकतानुपपत्तिरिति । अन्यथा = येन रूपेण ज्ञानग्राहकत्वं तेन रूपेण प्रामाण्याग्राहकत्वानिवेशे । भट्टमतासिद्धत्वसम्पादनमिति । अयम्भावः, गुरुणागमते पदादनुपस्थितस्याप्यर्थस्य योग्यताबलाच्छाब्दबोधे भानं भवति योग्यत्वञ्चान्वयप्रयोजकरूपवत्त्वम्, तथाच घटेन जलमाहरेत्यत्रान्वयप्रयोजकं रूपं छिद्रेतरत्वं छिद्रघटे जलाहरणान्वयबाधात् इतियोग्यताबलाद् यथा घटेन जलमाहरेति वाक्यजबोधे छिद्रेतरत्वस्य भानं तथा ओदनकार्यताज्ञानविषयःपाक इति वाक्यजन्यशाब्दबोधे योग्यताबलादोदनसाधनताज्ञानविषयत्वस्य भानमोदनसाधनताज्ञानविषयःपाकः ओदनकामपुरुषकार्यताज्ञानविषय इत्यन्वयबोधो गुरुमते जायते । ओदनसाधनताज्ञानविषयत्वस्यैव पाके ओदनकामकर्तव्यताज्ञानविषयत्वान्वयप्रयोजकत्वात्, किन्तु तादृशवाक्यजन्यशाब्दबोधे ओदनसाधनताज्ञानविषयत्ववति ओदनसाधनताज्ञानविषयत्वप्रकारकत्वरूपप्रामाण्याभानेन बाध इति बाधप्रदानावसरे तादृशशाब्दसामग्र्यां भट्टमतेन तत्प्रामाण्यग्रहाजनकत्वस्य कार्यताज्ञानग्रहाजनकत्वस्य रूपेण तत्प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धत्वमेवेत्याशंक्य शब्दानुपस्थितार्थस्य शाब्दबोधे भानानङ्गीकर्त्तृ भट्टमतेओदनसाधनताज्ञानविषयत्वरूपयोग्यताज्ञानघटितशाब्दसामग्र्या भट्टेनानभ्युपगमात् तादृशयोग्यताज्ञानघटितशाब्दसामग्र्यां तत्प्रामाण्या-

(गा०) प्रागभावमात्रोपादाने विरुद्ध्येत तादृशशाब्दबोधस्य भट्टमतेऽपि कार्यता-ज्ञानविषयकतया तत्प्रागभावमात्रस्य ज्ञानग्राहकतया भट्टमतसिद्धत्वात् कथञ्चिदपि तद्भिन्नत्वानुपपत्तेः।

तथापि स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकतावच्छेदकरूपावच्छिन्नप्रयो-ज्योत्पत्तिकयावद्ग्रहविषयत्वस्य साध्यविवक्षया नानुपपत्तिः। तत्तद्व्य-वसायादिरूपज्ञानग्रहोत्पादप्रयोजकतावच्छेदकतत्तद्व्यक्त्युपधायककारणस्ता-मनिष्ठसमुदायत्वावच्छिन्नतत्तद्व्यक्तिसामग्रीप्रयोज्योत्पत्तिकत्वस्य ज्ञानग्रहात्म-कतत्तद्व्यवसायादिष्वेव तत्तन्मते यथायथम् प्रसिद्धेः।

ननु घटत्वादिप्रकारकघटादिज्ञानग्राहकसामग्रीजन्यानां यावतां

---

(प्रभा) ग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वसम्पादनमिति भावः। प्रागभाव-मात्रोपादाने विरुद्ध्येत इति।

प्रागभावस्य साध्यघटकत्वे ओदनकामकार्यताज्ञानविषयः पाक इति वाक्यजन्यशाब्दबोध-प्रागभावस्य भट्टेनाभ्युपगततया तादृशवाक्यजशाब्दबोधे ओदनसाधनताज्ञानविषयत्वघटित-प्रामाण्याभावेन तत्प्रामाण्याग्राहकतया ओदनकर्तव्यताज्ञानग्राहकतया च तत्प्रामाण्याग्राहक-त्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धत्वमेव नतु तद्भिन्नत्वमिति तद्भिन्नत्वसम्पादने विरोधः स्पष्ट एव। तत्प्रामाण्यग्राहकतानवच्छेदकत्वेन ज्ञानग्राहकतावच्छेदकत्वेन भट्टाभिमतं यद्रूपं तद्रूपभिन्नं यज्ज्ञानग्राहकतावच्छेदकं रूपं तद्रूपावच्छिन्नजनकतेत्यादिरीत्या निवेशेऽपि निरुक्तप्रागभावत्वं ओदनसाधनताज्ञानविषयत्वघटिततत्प्रामाण्यग्राहकतान-वच्छेदकत्वेन कार्यताज्ञानग्राहकतावच्छेदकत्वेन भट्टाभिमतमेव नतु तद्भिन्नमिति निरुक्त-रूपपदेन निरुक्तप्रागभावत्वरूपं नोपादातुं शक्यते इत्याशयः।

समाधत्ते तथापीति। स्वाश्रयेति। स्वं प्रमात्वम्। प्रयोजकतावच्छेद-करूपेति = प्रयोजकतावच्छेदकसमुदायत्वेत्यर्थः। तथाच स्वाश्रयविषयकग्रहो-त्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावदुत्पत्तिकयावद्ग्रह-विषयत्वमेव मीमांसकमते साध्यम्। स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकतावच्छेदकीभूतं समु-दायत्वं च तादृशयत्किञ्चिदेकग्रहप्रयोजककारणकलापगतसमुदायत्वमेव नतु ज्ञानान्तरप्रयोज-कसमुदायत्वम्। एवञ्च तत्तज्ज्ञानोत्पत्तिप्रयोजकतावच्छेदकतत्तत्समुदायत्वमादायैव प्रमात्वे साध्यसत्त्वनिर्वाहः। अयंघट इत्याकारकघटत्वप्रकारकघटविशेष्यकज्ञानस्यैव कालपुरुषभेदेन तत्तद्घटरूपविशेष्यभेदेन च भिन्नत्वादेकज्ञानव्यक्तिविषयकग्रहनिरूपितविषयत्वस्य तज्ज्ञाने सत्त्वेऽप्यपरव्यक्तिविषयकग्रहनिरूपितविषयत्वस्य तत्रासत्त्वेन तादृशयावद्ग्रहविषयत्वं न क्वापि प्रसिद्धम्। तथाच साध्याप्रसिद्धिरित्याशयेन शङ्कते ननु घटत्वादिप्रकारकेति। आदिना पटत्वादिपरिग्रहः।

( दी० ) ज्ञानव्यक्तिभेदानामुपादानात् तत्र ज्ञानत्वविशिष्टग्राहकत्वस्य विवक्षणाद् वा ज्ञानत्वे विधिप्रसिद्धिः ।

---

(गा०) तादृशज्ञानग्रहाणां विषयत्वं न तावत्तादृशज्ञाने सर्वमतसिद्धम्, तादृशैकज्ञानव्यक्तिग्रहे तादृशापरज्ञानव्यक्तेरविषयत्वात्; नापि ज्ञानत्वे, घटत्वप्रकारकत्वमात्रेण तादृशज्ञानग्रहे नैयायिकादिनये ज्ञानत्वाभानादित्याशङ्काम् परिहरति *ज्ञानव्यक्तीति* । तत्तद्व्यक्तित्वेन घटादिज्ञानव्यक्तीनां साध्येऽन्तर्भावनीयत्वादित्यर्थः । *तत्र* = तत्तज्ज्ञानव्यक्तौ । *विधिप्रसिद्धिरिति* । तत्तज्ज्ञानव्यक्तिग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वरूपविधिकोटिप्रसिद्धिरित्यग्रिमेणान्वयः । ग्राह्यज्ञानानां घटत्वादिप्रकारकघटादिज्ञानत्वेन निवेशेऽपि ज्ञानत्वे तत्प्रसिद्धिमुपपादयति *ज्ञानत्वविशिष्टेति* । ज्ञानग्राहकेत्यनेन ज्ञानत्वविशिष्टस्वाश्रयविषयकज्ञानजनकसामग्रीविवक्षणाद् वेत्यर्थः । *ज्ञानत्वइति* । केवलघटत्वादिप्रकारकत्वेन ज्ञानग्रहस्य ज्ञानत्वविशिष्टाविषयकत्वेन व्यावर्त्तनादिति भावः ।

यद्यपि प्रामाण्याग्राहकत्वेनेत्यादिविवक्षणे

---

(प्रभा) तादृशज्ञानग्रहाणाम् = घटत्ववति घटत्वप्रकारकज्ञानत्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहाणामित्यर्थः । हेतुमाह तादृशैकज्ञानव्यक्तिग्रहे इति । निरूपितत्वं सप्तम्यर्थः । घटत्ववति घटत्वप्रकारकैकज्ञानव्यक्तिविषयकग्रहनिरूपितेत्यर्थः तादृशापरज्ञानव्यक्तेरिति । निष्ठत्वं षष्ठ्यर्थः, घटत्वप्रकारकघटविशेष्यकज्ञानव्यक्तेरित्यर्थः ।

ननु ज्ञानव्यक्तीनाम्भेदेऽपि ज्ञानत्वस्य जातिरूपतया ऐक्येन तत्र घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रमात्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं प्रसिद्धमित्यत आह नापि ज्ञानत्वे इति । अप्रसिद्धौ हेतुमाह घटत्वप्रकारकत्वमात्रेणेति । मात्रपदाज्ज्ञानत्वव्युदासः । तादृशज्ञानग्रहे = घटत्वप्रकारकघटविशेष्यकज्ञानग्रहे । घटत्वप्रकारकवानहमित्येवानुव्यवसाये तस्यापि यावद्ग्रहान्तर्गततया तद्विषयत्वस्य ज्ञानत्वेऽसत्त्वादिति भावः । नैयायिकादिनये । आदिपदान्मीमांसकपरिग्रहः । तत्तज्ज्ञानव्यक्तीति । तथाच स्वाश्रयतत्तज्ज्ञानव्यक्तिविषयकग्रहजनकसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यं पर्यवसितमिति तत्तज्ज्ञानव्यक्तौ उभयमते साध्यप्रसिद्धिरिति भावः । तत्तद्व्यक्त्यनिवेशेऽपि उभयमते साध्यप्रसिद्धिरित्याह ज्ञानत्वविशिष्टेति । तथाच स्वाश्रयज्ञानत्वविशिष्टविषयकज्ञानजनकसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यम्पर्यवसितम् । तथाच ज्ञानत्वविशिष्टविषयको ग्रहो घटत्वप्रकारकज्ञानवानहमित्याकारक एव, तद्विषयत्वस्य ज्ञानत्वे प्रसिद्धिरिति ।

ज्ञानत्वविशिष्टविषयकग्रहजनकत्वपर्यन्तमनिवेश्य स्वाश्रयज्ञानग्राहकसामग्रीतियथाश्रुतनिवेशेऽपि ज्ञानत्वे विधिप्रसिद्धिसम्भवे ज्ञानत्वविशिष्टविषयकत्वानुधावनं विफलमिति पूर्वपक्षयति यद्यपीत्यादिना । प्रामाण्याग्राहकत्वेनेत्यादिविवक्षणे घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादिशाब्दसामग्रीमादाय बाधवारणाय तदप्रामाण्याग्राहकेत्यनेन

(गा०) तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वमेव तत्र निवेश्यम्, अन्यथा ज्ञानत्वविशिष्टग्राहकसामग्र्युपादानेऽपि तद्वति तत्प्रकारकगुणाभिन्नं ज्ञानमित्यादिशाब्दसामग्र्या तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्याग्रहेण-बाधस्य[1] दुर्वारत्वात्; तथाच ज्ञानग्राहकपदेन ज्ञानत्वविशिष्टग्राहकत्वपर्यन्ताविवक्षणेऽपि ज्ञानत्वे प्रसिद्धिसम्भवः; तथापि यथाश्रुताभिप्रायेणेदम्।

---

(प्रभा) तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धा या सामग्री तदन्या या सामग्रीत्यादिविवक्षणे इत्यर्थः। तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वमेवेति। अयं घट इत्यत्र घटत्ववति घटत्वप्रकारकज्ञानत्वाग्राहकत्वमेवेत्यर्थः। एवकारेण ज्ञानत्वरहिततद्वति तत्प्रकारकत्वमात्रव्यवच्छेदः। तत्र = सामग्र्यामित्यर्थः। निवेश्यमिति। तथाच तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्ना या सामग्रीत्यादिरीत्यैव निवेश्यं नतु केवलम् तद्वति तत्प्रकारकत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमितिभावः। अन्यथा = ज्ञानत्वम्परित्यज्य तद्वति तत्प्रकारकत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमात्रस्य सामग्र्याम् प्रवेशे इत्यर्थः। शाब्दसामग्र्या इति। तृतीयार्थो जन्यत्वम् अग्रहेणेत्यन्वेति। जन्यत्वाभावेति पर्यवस्यति। बाधवारणायेति। अयम्भावः, ज्ञानत्वाघटितस्य निरुक्तभट्टमतसिद्धभिन्नत्वस्य सामग्र्यां निवेशे तद्वति तत्प्रकारकगुणाभिन्नं ज्ञानमित्यादिवाक्यजशाब्दसामग्र्या अपि तद्वति तत्प्रकारकत्वग्राहकतया तद्वति तत्प्रकारकत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वेन साध्यघटकतया निरुक्तवाक्यजशाब्दबोधस्यापि तादृशसामग्रीजन्ययावद्ग्रहान्तर्गततया तद्विषयत्वस्य च तद्वति तत्प्रकारकज्ञानत्वरूपप्रमात्वे विरहेण बाधस्याचद्वारणायेत्यर्थः। पक्षीभूतप्रमात्वस्य ज्ञानत्वघटितत्वं प्राङ्निरूपितमिति भावः। तथाच = तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वेत्यादिरीत्या विवक्षणे चेत्यर्थः। ज्ञानत्वे प्रसिद्धिसम्भव इति। घटत्ववति घटत्वप्रकारकवानहमित्याद्यनुव्यवसायसामग्र्या ज्ञानत्वाग्राहकतया तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धत्वमेवेति तद्भिन्नत्वविरहेण निरुक्तसामग्री न साध्यघटिका किन्तु घटत्ववति घटत्वप्रकारकज्ञानवानहमित्यनुव्यवसायसामग्र्येव, तज्जन्यग्रहविषयत्वस्य च ज्ञानत्वे सत्त्वेन ज्ञानत्वे प्रसिद्धिरिति भावः। समाधत्ते तथापीति। यथाश्रुताभिप्रायेणेति = तदप्रामाण्याग्राहकेतिमूलोक्ताभिप्रायेणेत्यर्थः।

---

१—तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्यस्य पक्षत्वे एव बाधो नतु तद्वति तत्प्रकारकत्वमात्रस्य तथात्वे। अत्रेदमवगन्तव्यम्, इच्छादिवृत्ते घटत्वप्रकारकत्वादेरिच्छादिग्राह्यत्वाद् बाधवारणाय ज्ञानत्वघटितमेव प्रमात्वम् पक्ष इति प्राक् प्रपञ्चितम्। इदानीन्तु प्रामाण्यग्राहकत्वेनेत्यत्र प्रमात्वमपि ज्ञानत्वघटितं वाच्यमिति विशेषः।

(गा०) अन्यथा शाब्दबोधादिसामग्रीविशेषैः प्रामाण्याग्रहेण बाधप्रसंगस्य वारणाय तादृशसामग्रीव्यावर्तककथितविशेषणोपादाने तावतैव घटत्वादिरूपप्रकृतप्रामाण्यघटकप्रकारकत्वत्वेन ज्ञानविषयकग्रहवारणे विना प्रयासं घटत्वादौ विधिप्रसिद्धिसम्भवात् ज्ञानत्वे तत्प्रसिद्धिसम्पादकप्रयासवैफल्यादिति नानुपपत्तिः।

वस्तुतस्तु तद्वति तत्प्रकारकज्ञानत्वत्वेन पक्षत्वं न विचारसहम्, ज्ञानत्वत्वस्य स्वतोऽग्राह्यतया तादृशप्रामाण्यत्वविशिष्टस्य स्वतोग्राह्यत्वसाधने

---

( प्रभा ) अन्यथा—यथाश्रुतार्थं परित्यज्य तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमिति रीत्या निवेशे। शाब्दबोधादिसामग्रीविशेषैः = घटत्वप्रकारकं ज्ञानं सविशेष्यकमितिशाब्दबोधसामग्रीविशेषैरित्यर्थः - प्रामाण्याग्रहेणेति = निरुक्तशाब्दबोधे प्रमात्वाभानेनेत्यर्थः। तादृशसामग्रीव्यावर्त्तककथितविशेषणोपादाने इति। घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्याकारकशाब्दबोधसामग्रीव्यावर्त्तकं यत्कथितविशेषणं तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वरूपं तदुपादाने इत्यर्थः। तावतैव = तादृशविशेषणेन। घटत्वादिरूपप्रकृतप्रामाण्यघटकप्रकारकत्वेनेति = घटत्वादिरूपं यत्प्रकृतप्रमात्वघटकं तत्प्रकारकत्वेनेत्यर्थः। ज्ञानविषयकग्रहवारणे = घटत्वप्रकारकेहमित्याद्यनुव्यवसायवारणे। विनाप्रयासम् वज्ञानत्वविशिष्टेत्यादिप्रयासं विनेत्यर्थः।

ज्ञानत्वे विधिप्रसिद्धिसम्भवात् इति दीधितिः। ननु घटं जानामीत्यादिज्ञानज्ञानानां प्रथमज्ञानविषयविषयकत्वम् आवश्यकम्, अत एव विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषय इति मणिकृता वक्ष्यते, एवञ्च घटत्वादावेव विधिप्रसिद्धया उक्तप्रयासेन ज्ञानत्वादौ विधिप्रसिद्ध्युपपादनं दिधितिकृतामनुचितमिति चेन्न, पुरोवर्त्तिविशेष्यकत्वावच्छेदेनैव यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वरूपस्वतस्त्वसाधनेन घटत्वप्रकारकवानहमित्यादिज्ञानानामपि यावदन्तर्गततया तद्विषयत्वस्य घटत्ववद्विशेष्यकत्वावच्छेदेन तथाऽग्रहात्।

विना प्रयासम् = ज्ञानत्वविशिष्टग्राहकत्वरूपप्रयासं विनेत्यर्थः। घटत्वादौ[1] विधिप्रसिद्धिसम्भवादिति। घटत्वप्रकारकज्ञानवानहमित्यादिज्ञानानां तद्वति तत्प्रकारकज्ञानग्राहकतया तद्वतितत् प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वविशेषणेनैव वारणेन घटत्ववति घटत्वप्रकारकज्ञानवानहमित्यादिज्ञानानामेव साध्यघटकतया पुरोवर्त्तिविशेष्यकत्वावच्छेदेन यावत्स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वस्य घटत्वादौ प्रसिद्धेरितिभावः। नन्वेवं तदप्रामाण्याग्राहकेतियथाश्रुतार्थम्परित्यज्य शाब्दसामग्रीव्यावर्त्तकतद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वविशेषणोपादाने ज्ञानत्वविशिष्टाग्राहकत्वाविवक्षणेऽपि ज्ञानत्वे घटत्वे वा विधिप्रसिद्धिसम्भवे दीधितिकृतां ज्ञानत्वविशिष्टेत्यादिलिखनस्यानवधानमूलकत्वप्रसङ्ग इत्याशङ्क्य दीधिकृन्न्यूनतावारणाय तदाशयं दर्शयति वस्तुतस्त्विति।

---

[1] ज्ञानत्वे विधिप्रसिद्धिसम्भवादित्येव पाठ उचित इत्यपरे। तन्न युज्यते, घटत्वादौ विधिप्रसिद्धिसम्भवादिति पाठस्यैवोक्तरीत्या युक्तत्वात्।

( दी० ) इदं ज्ञानमप्रमा इति ज्ञानग्राहकेण

---

(गा०) वाधात् ; अतः तद्वति तत्प्रकारकत्वत्वस्यैव पक्षतावच्छेदकत्वं स्वीकरणीयम्, तथाच तद्रूपावच्छिन्नाग्राहकत्वमेव प्रामाण्याग्राहकत्वेनेत्यत्र विवक्षणीयम् , एवञ्च ज्ञानत्वविशिष्टग्राहकत्वविवक्षयैव ज्ञानत्वे विधिकोटिप्रसिद्धिः ।

नच प्रामाण्यपदस्य तद्वति तत्प्रकारकत्वमात्रार्थकत्वे यथाश्रुतपरित्यागाद् दोषः, प्रामाण्यपदेन तद्वति तत्प्रकारकज्ञानेतरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वे सति तद्वति तत्प्रकारकज्ञाननिष्ठभेदप्रतियोगितानवच्छेदकत्वेन तद्वति तत्प्रकारकज्ञानत्वरूपप्रकृत्यर्थतावच्छेदकबोधनादिति वाच्यम् ? अगत्या यथाश्रुतार्थपरित्यागात् । *प्रमाण्याग्राहकत्वेनेत्यत्र* च ज्ञानत्वघटितप्रामाण्यग्राहकत्वं प्रतियोगितया विवक्षितमित्यत्रैव *ज्ञानत्वविशिष्टस्य विवक्षणात्* इत्यस्य तात्पर्यमित्यप्याहुः ।

*इति ज्ञानग्राहकेण* = इत्याकारकज्ञानग्रहजनकसामग्र्या । अप्रामाण्यपदस्य

---

(प्रभा) वाधात् = ज्ञानत्वस्य जातिरूपतयाऽनुव्यवसायादावनुल्लिख्यमानत्वेन स्वरूपतो भासमानतया तादृशज्ञानत्वत्वविशिष्टे निरुक्तस्वतोग्राह्यत्वाभावेन वाधादित्यर्थः । तद्वति तत्प्रकारकत्वस्य जात्यखण्डोपाध्यतिरिक्तपदार्थतया तद्वति तत्प्रकारकत्वत्वेन भानान्न वाधावकाश इति भावः । अथ तादृशप्रामाण्यत्वविशिष्टं प्रामाण्यत्वाश्रयमेवेति कथमेतत् ? अनुव्यवसायादौ स्वरूपतो ज्ञानत्वभानेन तत्र स्वतो ग्राह्यत्वानपायात् अनुमानात्पक्षतावच्छेदके साध्यसिद्धेर्दूषितत्वादिति चेन्न, तद्वति तत्प्रकारकत्वविशिष्टजातिप्रतियोगिकविषयितासाधारणरूपेणापि प्रामाण्यविषयितायास्तादृशग्राहकत्वव्यापकतासम्भवादर्थान्तरस्य पक्षत्वप्रकारकज्ञानत्वविषयित्वे अनुव्यवसायादिसामग्रीजन्यग्रहत्वाव्यापकत्वात् सिद्धसाधनस्य च वारणाय प्रामाण्यत्वावच्छिन्नग्राह्यत्वं विवक्षणीयम् । तथाच तत्र वाधभयेन ज्ञानत्वं न प्रवेश्यमित्याशयात् । *तथाच* = निरुक्ततत्प्रकारकत्वत्वेन पक्षत्वे चेत्यर्थः । *तद्रूपावच्छिन्नाग्राहकत्वमेवेति* = तद्वति तत्प्रकारकत्वत्वावच्छिन्नाग्राहकत्वमेवेत्यर्थः । एवकारेण तद्वति तत्प्रकारकज्ञानत्वत्वावच्छिन्नाग्राहकत्वव्युदासः ।

शङ्कते *नचेति* । *यथाश्रुतेति* = शक्यार्थपरित्यागादिति भावः । *दोष इति* । वादिवाक्ये लक्षणानाश्रयणसिद्धान्तात् निग्रहस्थानमिति भावः । उत्तरयति *अगत्येति* । कस्य चिन्मतमाह *प्रामाण्याग्राहकत्वेनेति* । तत्प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमिति दीधितावित्यर्थः । आहुरित्यनेनास्वरस उदक्षरत्वापत्त्या सूचितः ।

*इत्याकारकेति* । तथाच तदप्रामाण्याग्राहकत्वस्य सामग्र्यामविशेषणत्वे इदं ज्ञानमप्रमा इत्याकारकज्ञानग्राहकसामग्र्या अपि साध्यघटकतया तज्जन्यस्य तादृशग्रहस्य यावद्ग्रहान्तर्गततया तद्विषयत्वस्य च प्रमात्वेऽसत्त्वेन वाधस्यादिति तद्वारणाय तदप्रामाण्याग्राहकत्वेनेति विशेषणीयमिति भावः । उभयत्रानुगतशक्यतावच्छेदकविरहेण सकृदुच्चरित इति न्यायेन च अप्रामाण्यपदस्य भ्रमत्वरूपोऽर्थो यदि गृह्यते तदा

(दी०) प्रामाण्यग्रहाद् बाधवारणाय[1] अप्रामाण्यग्राहकेति। अप्रामाण्यम् =प्रामाण्यविरोधि।

(गा०) भ्रमत्वार्थकत्वे प्रमात्वाभावार्थकत्वे च भ्रमत्वग्राहकेण प्रमाण्यग्रहाद् बाध इति तदुभयमनुगमयति *अप्रामाण्यमिति*। प्रामाण्यविरोधित्वम् तत्प्रामाण्यावच्छेदकावच्छेदेन तद्वद्वृत्तिभिन्नत्वम्। घटत्वादिना घटपटादिविषयकज्ञाने घटपटादिरूपांशभेदेन घटत्वादिप्रमात्वतदभावादिसत्त्वात् तदभावादीनामपि तद्विरोधित्वानुपपत्तिरिति

(प्रभा) घटज्ञानम् प्रमात्वाभाववत् इत्याकारकज्ञानग्राहकसामग्रीमादाय बाधःस्यात्। यदि च प्रमात्वाभावरूपोऽर्थो गृह्यते तर्हि इदं ज्ञानं भ्रमः इत्याकारकभ्रमग्राहकसामग्रीमादाय बाधस्यादतो भ्रमत्वप्रमात्वयोरेकरूपेण निवेशार्थमाह दीधितौ अप्रामाण्यम् प्रामाण्यविरोधीति। तथाच तत्प्रामाण्यविरोध्यग्राहिका स्वाश्रयज्ञानग्राहिका या सामग्री तज्जन्यग्रहविषयत्वं साध्यम् पर्यवसितम्। विरोधित्वं द्विविधम् सहानवस्थानलक्षणम् प्रतिबन्धकज्ञानविषयत्वरूपं च। तत्र प्रतिबन्धकताघटितविरोधित्वस्यानुपदमेव निराकरिष्यमाणत्वात् सहानवस्थानलक्षणं विरोधित्वमाह तत्प्रामाण्यावच्छेदकावच्छेदेनेति। तत्प्रामाण्यम् घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकत्वविशिष्टज्ञानत्वम् तदवच्छेदकं घटत्ववद्विशेष्यकत्वम् तदवच्छेदेनेत्यर्थः। वृत्तावस्यान्वयः। तद्वद्वृत्तिभिन्नत्वम्= प्रमात्ववद्वृत्तिभिन्नत्वम्। अत्यन्ताभावस्य अव्याप्यवृत्तितया भेदघटितं विरोधित्वम् अन्यथा प्रमात्वस्य प्रमात्वविरोधित्वापत्तिः, तत्रापि अवच्छेदकभेदेन वृत्तित्वाभावस्य सत्त्वात्। तथाच तत्प्रामाण्यावच्छेदकावच्छेदेन तद्वद्वृत्ति यद् यत् तदन्यत्वमिति फलितोऽर्थः। तेन भेदस्य अव्याप्यवृत्तित्वपक्षेऽपि नाप्रसिद्धिः। ईदृशं च प्रमात्वविरोधित्वं भ्रमत्वे प्रमात्वे चास्तीति तत्प्रकारकग्रहजनकसामग्र्याः संग्रहः। तत्प्रमाण्यावच्छेदकावच्छेदेनेत्यस्य व्यावृत्तिमाह घटत्वादिनेति। घटपटादिविषयकज्ञानेति। यत्र घटपटयोः इमौ घटौ इति ज्ञानम् तत्रेत्यर्थः। तदभावादीनामपि=प्रमात्वाभावादीनामपि। आदिना भ्रमत्वपरिग्रहः। तद्विरोधित्वानुपपत्तेरिति=प्रामाण्यविरोधित्वानुपपत्तेरित्यर्थः। तथाच प्रामाण्यावच्छेदकावच्छेदेनेत्यनुक्तौ घटत्वेन घटपटोभयावगाहि ज्ञानं यदा भवति तदा प्रमात्वाभावस्य प्रामाण्यवति निरुक्तज्ञाने वर्त्तमानतया तत्र प्रमात्ववद्वृत्तिभिन्नत्वविरहेण तादृशाप्रामाण्ये प्रामाण्यविरोधित्वं न स्यात्। एवंच घटत्वेन घटपटोभयावगाहिज्ञानविषयको यो ग्रहःघटावहं जानामीत्याकारकः तज्जनकसामग्र्यपि यावदन्तर्गता, प्रामाण्यविरोध्यग्राहकत्वाद् ज्ञानग्राहकत्वाच्च, किन्तु तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे

१ दीधितौ बाधवारणायेति—इदमुपलक्षणम्, इदं रजतमिति ज्ञानं रजतत्ववति रजतत्वप्रकारकत्वाभाववत् इत्याकारको य इदं रजतम् इति ज्ञानविषयकःप्रमात्वविरोधी ग्रहः तज्जनकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे विरहेऽपि न बाधावकाशः।

(गा० ) अंशैक्योपादानम्। व्याप्यवृत्तेरवच्छेदकानभ्युपगमे ज्ञानत्वादेः प्रामाण्यविरोधित्ववारणाय प्रमात्वावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववत्प्रमानिष्ठाधिकरणताकान्यत्वम् प्रमात्वविरोधित्वं वक्तव्यम्।

---

(प्रभा) विरहेण बाधस्स्यादिति भावः। अंशैक्योपादानमिति—तत्प्रामाण्यावच्छेदकावच्छेदेनेत्यस्योपादानमित्यर्थः। तदुपादाने तु तादृशाप्रमात्वस्य संग्रहस्स्यात्, घटत्ववद्विशेष्यकत्वावच्छेदेन घटत्वाभाववति घटत्वप्रकारकत्वरूपतादृशाप्रामाण्यस्य तादृशघटत्वेन घटपटविषयकज्ञानेऽसत्त्वात् इति। ननु ज्ञानत्वस्य व्याप्यवृत्तितया तदवच्छेदकाप्रसिद्धया प्रमात्ववति तस्य प्रामाण्यावच्छेदकावच्छेदेनावर्त्तमानत्वात् प्रामाण्यविरोधित्वापत्तिस्स्यात्, तथाच ज्ञानग्राहकसामग्रीमात्रस्यैव ज्ञानत्वग्राहकतया तस्य प्रामाण्यविरोध्यग्राहकत्वासम्भवेन साध्याप्रसिद्धिस्स्यात् अत आह व्याप्यवृत्तेरवच्छेदकानभ्युपगम इति। प्रमात्वावच्छेदकानवच्छिन्नत्वेति। प्रमात्वावच्छेदकानवच्छिन्नत्व-अवच्छिन्नत्वोभयाभाववती प्रमानिष्ठा यद्यद्व्यक्तिनिरूपिताधिकरणता तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वम् प्रमात्वविरोधित्वमिति पर्यवसितम्, तथा च ज्ञानत्वनिरूपितप्रमानिष्ठाधिकरणतायां व्याप्यवृत्तितया प्रमात्वावच्छेदकीभूतघटत्ववद्विशेष्यकत्वाद्यनवच्छिन्नत्वसत्त्वेऽपि अवच्छिन्नत्वविरहेणोभयाभाववत्त्वस्य सत्त्वात् यद्व्यक्तिपदेन ज्ञानत्वस्य धत्तुमशक्यतया तद्भेदस्य च तत्र विरहेण न तस्य प्रमात्वविरोधित्वम्। एवं घटत्वेन घटपटविषयकज्ञानरूपप्रमानिष्ठायां घटत्वाभाववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रमात्वाभावाधिकरणातायां प्रमात्वावच्छेदकीभूतघटत्ववद्विशेष्यकत्वानवच्छिन्नत्वपटत्ववद्विशेष्यकत्वावच्छिन्नत्वरूपावच्छिन्नत्वोभयोस्सत्त्वेन यन्निरूपिताधिकरणतापदेन प्रमात्वाभावनिरूपिताधिकरणता न धत्तुं शक्यते किन्तु ज्ञानत्वनिरूपिताधिकरणतैव, तदन्यत्वस्य च तादृशघटत्वाभाववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपाप्रमात्वे सत्त्वेन तादृशाप्रमात्वस्य प्रमात्वविरोधित्वोपपत्तिः। घटत्वपटत्वादेरधिकरणतायाः प्रामाण्येऽसत्त्वात् तत्रापि तद्भिन्नत्वसत्त्वेन तेषाम् प्रामाण्यविरोधित्वोपपत्तिः। अन्यतराभावनिवेशेऽसम्भवः, कस्यापि वस्तुनः प्रमानिष्ठाधिकरणतायामन्यतराभावस्यासत्त्वादिति ध्येयम्। प्रमात्वावच्छेदकानवच्छिन्नत्वाभावमात्रनिवेशे ज्ञानत्वादेः प्रमात्वविरोधित्वापत्तिः, प्रमात्वावच्छेदकानवच्छिन्नत्वाभावस्य प्रमानिष्ठायां ज्ञानत्वाधिकरणतायामसत्त्वात् यत्पदेन ज्ञानत्वं नोपादातुं शक्यते किन्तु घटत्ववति घटत्वप्रकारकत्वमेव, तद्भिन्नत्वस्य च ज्ञानत्वे सत्त्वात्। अवच्छिन्नत्वाभावमात्रनिवेशे घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वस्यापि प्रमात्वविरोधित्वापत्तिः, प्रमानिष्ठायान्तदधिकरणतायां अवच्छिन्नत्वाभावस्यासत्त्वात्। तादृशावच्छिन्नत्वाभाववत्प्रमानिष्ठयदधिकरणतापदेन ज्ञानत्वाधिकरणताया एव धर्त्तव्यतया तदन्यत्वस्य प्रमात्वे सत्त्वात्। प्रमापदानुपादाने सर्वांशे भ्रमात्मकज्ञानवृत्तिभ्रमत्वाधिकरणतायामवच्छिन्नत्वानङ्गीकारात् तदुभयाभाववदधिकरणतानिरूपकत्वेन तादृशभ्रमत्वस्य प्रामाण्यविरोधित्वानुपपत्तिरतस्तदुपादानम्। इत्थं च आंशिकभ्रमप्रमात्मकज्ञाननिष्ठभ्रमत्वाधिकरणतायाः प्रमात्वावच्छेदकानवच्छिन्नत्व-अवच्छिन्नत्वोभयवत्त्वात् भ्रमत्वस्य तदुभयाभावाधिकरणतानिरूपकभिन्नत्वोपपत्तिः। नच तथापि तादृशोभयवत्प्रमा-

(गा० ) यत्तु प्रमात्वग्रहप्रतिबन्धकीभूतग्रहविषयत्वं तद्विरोधित्वम्, भ्रमत्वघटत्वादिग्रहस्य प्रमात्वग्रहे ग्राह्याभावावच्छेदकधर्मदर्शनादिविधया प्रतिबन्धकत्वात् भ्रमत्वघटत्वादीनां प्रमात्वविरोधितेति तदसत्, पुरोवर्त्तिविशेष्यकत्वाद्यवच्छेदेन प्रमात्वाभावग्रहदशायां तद्धर्मज्ञानस्यापि प्रमात्वग्रहप्रतिबन्धकतया तेषामपि प्रमात्वविरोधितया प्रामाण्यग्रहसामग्र्या

---

(प्रभा) निष्ठाधिकरणताकत्वमेवोच्यतां किन्नद्वयोपादानेनेति वाच्यम् ? घटत्वादेः प्रमात्वविरोधित्वरक्षार्थन्तदावश्यकत्वात्। प्रमात्वावच्छेदकानवच्छिन्नत्वविशिष्टावच्छिन्नत्वाभाव एव लाघवात् कुतो नोक्त इति चेत् न, विशिष्टाभावस्य विशेषणाभावस्वरूपतामते तादृशविशिष्टाभावस्य केवलप्रमात्वावच्छेदकानवच्छिन्नत्वाभावरूपतया तादृशाभावस्य ज्ञानत्वाधिकरणतायामसत्त्वाज् ज्ञानत्वस्य प्रमात्वविरोधित्वापत्तेः। उभयाभावस्य अखण्डभेदघटकतया वैयर्थ्याभावाच्चेति दिक्। -

पक्षधरमिश्रमतं निराचिकीर्षुराह यत्तु इति। प्रमात्वग्रहेति = प्रमात्वविषयको यो ग्रहःइदं ज्ञानं प्रमेत्याकारकस्तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिग्रहप्रकारत्वमित्यर्थः। प्रमात्वविषयकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयत्वमिति यावत्। तद्विरोधित्वमिति = प्रमात्वविरोधित्वमित्यर्थः। नन्वेवं तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्यैव प्रतिबन्धकतया भ्रमत्वस्य घटत्वादेश्च प्रमात्वविरोधित्वं न स्यात् प्रमात्वग्रहप्रतिबन्धकग्रहविषयत्वाभावात् प्रमात्वाभावबुद्धौ प्रमात्वाभावनिश्चयस्यैव विरोधित्वात् मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वे मानाभावात्, एवञ्च प्रमात्वविरोध्यग्राहकसामग्रीपदेन भ्रमत्वग्राहकसामग्र्या अपि धर्त्तुं शक्यतया साध्यान्तर्गतत्वेन तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद्बाधो दुर्वार उत्तरग्रन्थासङ्गतिश्चेत्यत आह भ्रमत्वघटत्वादिग्रहस्येति। इदं ज्ञानम्भ्रम इत्यादिग्रहस्येत्यर्थः। ग्राह्याभावावच्छेदकधर्मदर्शनादिविधया प्रतिबन्धकत्वादिति = भ्रमत्ववत्प्रमात्वाभाववत् भ्रमत्ववच्चेदं ज्ञानम् एवं घटत्ववत्प्रमात्वाभाववत् घटत्ववच्चेदं ज्ञानमित्यादिज्ञानानां निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वादित्यर्थः। भ्रमत्वघटत्वादीनां प्रमात्वविरोधितेति। भ्रमत्वस्य विरोधित्वे न बाधः घटत्वस्य विरोधित्वोपपादने न दीधितिकृदुक्तग्रन्थासङ्गतिःविषयत्वेन निरुक्तप्रमात्वविरोधित्वनिर्वचने ज्ञानत्ववत्प्रमात्वाभाववत् ज्ञानत्ववच्चेदं ज्ञानत्वम् एवं पुरोवर्त्तिविशेष्यकत्ववत्प्रमात्वाभाववत् पुरोवर्त्तिविशेष्यकत्ववच्चेदं ज्ञानमिति प्रतिबन्धकज्ञानत्वपुरोवर्त्तिविशेष्यकत्वादेरपि प्रमात्वविरोधित्वापत्त्या साध्याप्रसिद्धिरित्याशयेनाह तदसदिति। पुरोवर्त्तिविशेष्यकत्वावच्छेदेनेति। ज्ञानत्वावच्छेदेन पुरोवर्त्तिविशेष्यकत्वावच्छेदेनेत्यर्थः। प्रमात्वाभावग्रहदशायामिति = ज्ञानत्ववत् प्रमात्वाभाववत् पुरोवर्त्तिविशेष्यकत्ववत् प्रमात्वाभाववदिति निश्चयकालिकस्येत्यर्थः। तद्धर्मज्ञानस्यापीति = ज्ञानत्वपुरोवर्त्तिविशेष्यकत्वप्रकारकज्ञानस्यापीत्यर्थः। ज्ञानत्ववदिदं पुरोवर्त्तिविशेष्यकत्ववदिदं ज्ञानमिति ज्ञानस्यापीति यावत्। तेषामपि = ज्ञानत्वपुरोवर्त्तिविशेष्यकत्वादीनामपि। प्रमात्वविरोधितया = प्रमात्वग्रहप्रतिबन्धकीभूतग्रहविषयतयेत्यर्थः। प्रामाण्यविषयको यो ग्रहस्तज्जनकसामग्र्या इत्यर्थः। साध्यघटकीभूतप्रमात्वाश्रयज्ञानग्राहकसामग्र्या इति यावत्।

(गा०) विरोध्यग्राहकत्वस्य दुर्घटत्वात्। नच भवन्मते ज्ञानत्वादिधर्माणां प्रामाण्याविरोधितया तदवच्छेदेन तद्वति तत्प्रकारकत्वाद्यभावग्रहदशायां विरोध्यग्राहिकया ज्ञानत्वादिग्राहकसामग्र्या प्रामाण्याग्रहाद् बाधवारणमशक्यम्; यदि च प्रामाण्यस्य लौकिकप्रत्यक्षमङ्गीकुर्वताम् तदापि लौकिकप्रामाण्यभानमुपपद्यत एव अवच्छेदकधर्मदर्शनादेर्लौकिकप्रत्यक्षाविरोधित्वात्, मिश्रातिरिक्तमीमांसकमते प्रामाण्यभानस्य लौकिकसन्निकर्षघटितसामग्र्यनधीनत्वेऽपि तादृशसामग्रीतुल्यप्रामाण्यभासकसामग्र्यधीनतद्भानस्य

---

( प्रभा ) विरोध्यग्राहकत्वस्येति। प्रामाण्यविरोधिप्रकारकग्रहाजनकत्वस्येत्यर्थः। दुर्घटत्वादिति = अप्रसिद्धेरित्यर्थः। तथाच साध्याप्रसिद्धिरेव स्यादिति भावः। सिद्धान्तिमतेऽपि बाधमाशंक्य निराचष्टे नचेत्यादिना भवन्मतेइति। प्रमात्वावच्छेदकानवच्छिन्नत्व-अवच्छिन्नत्व-उभयाभाववत्प्रमानिष्ठाधिकरणताकान्यत्वरूपप्रमात्वविरोधित्ववाधमते इत्यर्थः। ज्ञानत्वादिधर्माणामिति। आदिपदात् पुरोवर्त्तिविशेष्यकत्वपरिग्रहः। प्रामाण्याविरोधितयेति। व्याप्यवृत्तेरवच्छेदकानभ्युपगमेन निरुक्तप्रमानिष्ठाधिकरणतेतिभावः। तदवच्छेदेनेति। ज्ञानत्वपुरोवर्त्तिविशेष्यकत्वावच्छेदेनेत्यर्थः। तद्वति तत्प्रकारकत्वादीति। ज्ञानत्ववत्प्रमात्वाभाववत्पुरोवर्त्तिविशेष्यकत्ववत्प्रमात्वाभाववदितिग्रहदशायामित्यर्थः। विरोध्यग्राहिकयेति = प्रमात्वविरोध्यग्राहिकयेत्यर्थः। अनेन तादृशसामग्र्याः साध्यघटकत्वं सूचितम्। ज्ञानत्वादिग्राहकसामग्र्या इति = प्रमात्वाश्रयज्ञानग्राहकसामग्र्या इत्यर्थः। प्रामाण्याग्रहादिति = प्रामाण्यविषयकग्रहाभावादित्यर्थः। तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रामाण्येऽभावादिति यावत्। बाधवारणमशक्यमिति। अयमभावः, साध्यतावच्छेदककोटौ प्रमात्वाश्रयज्ञाने ज्ञानत्वविशिष्टत्वविशेषणसत्त्वेन ज्ञानत्ववदिदमितिनिश्चयसंवलनमावश्यकम्। एवञ्चज्ञानत्ववत् प्रमात्वाभाववत् इतिनिश्चयविशिष्टज्ञानत्ववदिदमितिनिश्चयलीना या ज्ञानत्वग्राहिका सामग्री साऽपि साध्यान्तर्गता ज्ञानत्वादेः प्रामाण्याविरोधित्वात् किन्तु तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रामाण्ये विरहाद् बाध इति ध्येयम्।

ननु तदभावावच्छेदकतया गृहीतधर्मवत्ताबुद्धिर्लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धिम्प्रत्येव विरोधिनीति सिद्धान्तेन प्रमात्वस्य लौकिकप्रत्यक्षाङ्गीकारेण तादृशावच्छेदकधर्मदर्शनकालेऽपि तादृशसामग्रीजन्यग्रहविषयत्वस्य तत्र सत्त्वेन बाधविरहात् प्रामाण्यविरोधित्वनिवेशनमफलमित्याशयेनाह यदि चेति। तदापीति = निरुक्तनिश्चयविशिष्टनिश्चयसत्त्वेऽपि। उपपद्यत इति। ज्ञानत्वादिग्राहकसामग्र्या इत्यादिः। तथाच तादृशसामग्रीजन्यज्ञानविषयत्वस्य प्रामाण्ये सत्त्वान्न बाध इति भावः। अवच्छेदकधर्मदर्शनादेरिति = निश्चयविशिष्टनिश्चयस्येत्यर्थः। लौकिकप्रत्यक्षाविरोधित्वादिति = तदभावावच्छेदकतया गृहीतधर्मवत्त्वबुद्धेः लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धिम्प्रत्येव विरोधित्वादिति भावः। मिश्रातिरिक्तेति = गुरुभट्टयोर्मते इत्यर्थः। प्रामाण्यभानस्य = प्रामाण्यविषयताया इत्यर्थः। लौकिक'' सामग्र्यनधीनत्वेऽपीति = लौकिकसन्निकर्ष-

(गा० ) लौकिकभानतुल्यतया अवच्छेदकधर्मदर्शनाप्रतिवध्यत्वेन तन्मतेऽपि तथाप्रामाण्यभानोपपत्तिरित्युच्यते; तदा भ्रमत्वग्रहकालेऽपि अनुव्यवसाया-देःप्रामाण्यावगाहित्वसम्भवात् तद्ग्राहकत्वनिवेशनमफलमिति वाच्यम् ? भ्रमसामग्रीसत्त्वे भ्रमविषयनिष्ठासाधारणधर्मविशेषाणां लौकिकं ज्ञान-मपि नोत्पद्यते, शंखःपीत इत्याद्यारोपदशायां श्वैत्याद्यग्रहात्, अतःप्रमायाम् प्रमात्वविरोधिभ्रमत्वाद्यारोपसामग्रीदशायाम् अनुव्यवसायादिना प्रमात्व ग्रहासम्भवेन भ्रमत्वाद्यग्राहकत्वनिवेशस्यावश्यकत्वात् ।

---

(प्रभा) घटितसामग्र्यप्रयोज्यत्वेऽपीत्यर्थः । प्रामाण्यांशे इत्यादिः । गुरुमते ज्ञानस्य प्रमा-त्वादेश्च स्वयम् प्रकाशमानत्वाद् भट्टमते ज्ञाततालिङ्गकानुमितिसामग्रीप्रयोज्यत्वादिति भावः । लौकिकभानतुल्यतयेति । प्रमात्वनिष्ठलौकिकविषयतातुल्यतयेत्यर्थः । यादृशस्थले प्रामा-ण्यस्य मिश्राणां भानमभानं वा तादृशस्थले गुरूणां भट्टानां च भानाभाने यादृशं च प्रयो-जकम् लौकिकप्रामाण्यविषयित्वे मिश्रैरुपेयम् गुरुभट्टाभ्यामपि तत्समं तत्र प्रयोजकमुपेयम्, अन्यथा फलसाम्यानुपपत्तेः । तन्मतेऽपि = गुरुभट्टमतेऽपीत्यर्थः । तथा = पूर्वोक्तदिशा । तदा = प्रमात्वस्य लौकिकप्रत्यक्षं स्वीकृत्य तादृशविरोधिनिश्चयकालेऽपि प्रमात्वभान-स्वीकारे इत्यर्थः ।

अफलमिति = वाधविरहादिति भावः । यदि चेत्यादिनोक्तं अफलत्वं निरा-चिकीर्षुः तदप्रामाण्याग्राहकत्वस्य फलमाह भ्रमसामग्रीसत्त्वे इति । भ्रमविषयनिष्ठासा-रणधर्मविशेषाणामिति । भ्रमविशेष्यीभूतं यत् इदं रजतमिति ज्ञानम् तन्निष्ठो योऽ-साधारणधर्मः प्रामाण्यम् तद्विशेषाणामित्यर्थः । नोत्पद्यत इति । तथाचानुभावानुरोधादेव तादृशासाधारणधर्मविशेषप्रकारकलौकिकज्ञानम्प्रत्यपि दोषघटितसामग्र्याः दोषस्य वा विरो-धित्वं स्वीकार्यमिति भावः । अतः = लौकिकज्ञानानुत्पादात् । प्रमायाम् = अयं घट इति प्रमात्मकज्ञाने इत्यर्थः । प्रमात्ववि ··सामग्रीदशायामिति । अयंघटःइतिप्रमायां यो भ्रमत्वारोपःअयं घट इति ज्ञानं भ्रम इत्याकारकःतत्सामग्रीदशायामित्यर्थः । आदिपदात् तदभा-वव्याप्यवत्त्वनिश्चयपरिग्रहः । प्रमात्वाभावव्याप्यज्ञानत्ववदिदम् इत्यादि । अनुव्यवसाया-दिनेति । आदिना व्यवसायानुमित्योः परिग्रहः । प्रमात्वग्रहासम्भवेनेति । तद्धर्मविरोधि-धर्मप्रकारकारोपसामग्री तद्धर्मवत्त्वबुद्धेर्विरोधिनीति । भ्रमत्वाद्यग्राहकत्वनिवेशस्यावश्य-कत्वादिति । अन्यथा तादृशभ्रमत्वाद्यारोपसामग्रीकाले प्रमात्वाश्रयज्ञानग्राहकसामग्रीजन्य-ग्रहविषयत्वस्य प्रमात्वे विरहेण वाधस्यादिति भावः । आदिपदात् प्रमात्वाभावसङ्ग्रहः, तथा च प्रमात्वग्रहे भ्रमत्वादिग्रहस्य अविरोधित्वेऽपि भ्रमत्वारोपजनकसामग्र्याः तद्विरोधितया तात्कालिकप्रमात्वाश्रयज्ञानग्राहकसामग्र्या अपि साध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहेण वाधापत्तेः परीहारायाप्रामाण्याग्राहकत्वनिवेश आवश्यक इति भावः । ननु ज्ञानत्वे प्रमात्वाभावावच्छेदकत्वज्ञानकालीनज्ञानत्वेन ज्ञानग्राहकसामग्रीजन्यज्ञाने प्रामाण्याव-गाहित्वासम्भवाद् वाधः तादृशसामग्र्याः भवन्मतसिद्धप्रामाण्याविरोध्यग्राहकत्वात् इत्यत आह

(गा०) अविरोधिज्ञानत्वादेश्च प्रमायामारोपासम्भवात् प्रमात्वाभावावच्छेदकतया गृहीततद्धर्मभानदशायामपि प्रमात्वलौकिकग्रहस्य श्वैत्याद्यभावावच्छेदकतया गृहीतशंखत्वादिग्रहदशायां श्वैत्यादिलौकिकग्रहवत् सम्भवात्।

अथ भ्रमत्वस्य परमतेऽपि अतीन्द्रियतया तस्यारोपे परमते गुरुत्वाद्यारोप इव न साक्षात्कारित्वग्रहः, योग्यपीतत्वाद्यारोप एव तद्ग्रहस्यानुभविकत्वात्, तथाच तदारोपसामग्र्या न प्रमात्वलौकिकप्रत्यक्षप्रतिबन्धः, यादृशदोषजन्यज्ञाने

---

(प्रभा) अविरोधिज्ञानत्वादेश्चेति। आरोपासम्भवादिति = भ्रमासम्भवादित्यर्थः। दोषघटितारोपसामग्र्या एव प्रतिबन्धकत्वात् इति भावः। गृहीततद्धर्मेति = गृहीतज्ञानत्वग्रहदशायामित्यर्थः। ज्ञानत्ववत्प्रमात्वाभाववत् इति निश्चयकालीनज्ञानत्ववदिदमिति निश्चयदशायामिति यावत्। प्रमात्वलौकिकग्रहस्येति। अस्य सम्भवादित्यनेनान्वयः। तथाच यथा ज्ञानांशे भ्रमत्वभ्रमसामग्रीकाले भ्रमविषयज्ञानवृत्तिप्रमात्वलौकिकप्रत्यक्षानुत्पादः तथा तज्ज्ञानत्वांशे प्रमात्वाभावावच्छेदकत्वज्ञानकालीनज्ञानांशे ज्ञानत्वप्रमात्मकज्ञानग्राहकसामग्री न प्रामाण्यलौकिकप्रत्यक्षानुत्पादप्रयोजिकेति न बाध इति भावः।

आरोपसामग्र्या अप्रतिबन्धकत्वेन बाधविरहात् प्रामाण्यविरोध्यग्राहकत्वनिवेशवैयर्थ्यं दुर्वारमित्याशङ्कते अथेत्यादिना। परमते = मीमांसकमते। अतीन्द्रियतयेति। रजतज्ञानवानहमिति भ्रमानुव्यवसाये तदभाववति तत्प्रकारकत्वरूपभ्रमत्वं न प्रत्यक्षं तदभावरूपविशेषणग्राहकसामग्रीविरहात्।[१] तस्यारोपे = भ्रमत्वस्यारोपे। न साक्षात्कारित्वग्रह इत्यनेनास्यान्वयः। गुरुत्वाद्यारोप इवेति = गुरुत्वभ्रम इत्यर्थः। तथाच यथा अतीन्द्रियभूतगुरुत्वाद्यारोपे गुरुत्वेनेदं साक्षात्करोमीत्याकारकः साक्षात्कारित्वग्रहो न जायते तथा अतीन्द्रियभूतभ्रमत्वारोपे भ्रमत्वेनेदं साक्षात्करोमि इत्याकारकः साक्षात्कारित्वग्रहोऽपि न सम्भवतीति भावः। आनुभविकत्वादिति = साक्षात्कारित्वग्रहस्यानुभवसिद्धत्वादित्यर्थः। तथाचेति। न केवलं दोषघटितसामग्र्या एव प्रमात्वलौकिकज्ञानविरोधिता किन्तु साक्षात्कारित्वग्रहजनिकाया इत्यर्थः। तदारोपसामग्र्या = भ्रमत्वारोपसामग्र्येति तत्त्वम्। यादृशदोषजन्यज्ञान इति = पित्तादिरूपदोषजन्ये पीतः शंख[२] इत्यादिज्ञाने इत्यर्थः।

---

१ मीमांसकानाम् मते भ्रमत्वं विसंवादिप्रवृत्तिजनकत्वेन हेतुनाऽनुमेयम्। नैयायिकानान्तु नये भ्रमत्वम् प्रमात्वं चेत्युभयमेवानुमेयम्।

२ पीतः शंख इत्यादौ श्वैत्यादिलौकिकभानवारणाय साक्षात्कारित्वग्रहप्रयोजकदोषविशेषघटितसामग्र्या एव लौकिकप्रत्यक्षसामग्र्यपेक्षया बलवत्त्वस्य सत्प्रतिपक्षे 'साक्षात्कारिणि भ्रमे' इति पंक्तौ च दीधितिकारैर्वक्तव्यत्वात्।

( गा० ) साक्षात्कारित्वग्रहः तद्घटितारोपसामग्र्या एव लौकिकप्रत्यक्षसामग्र्यपेक्षया बलवत्त्वादिति कथं भ्रमत्वारोपकाले प्रमात्वाग्रह इति चेन्न ? उक्तयुक्त्या भ्रमत्वारोपसामग्र्याः प्रमात्वलौकिकप्रत्यक्षसामग्र्यपेक्षया बलवत्त्वविरहेऽपि संशयजनकदोषस्येव विपर्ययजनकदोषस्य च साक्षात्कारित्वग्रहाप्रयोजकस्यापि लौकिकप्रमात्वग्रहप्रतिबन्धकतया भ्रमत्वारोपकाले प्रमात्वग्रहासम्भवात् ।

अस्तु वा भ्रमत्वग्राहकसामग्र्या अपि प्रमात्वग्राहकत्वम्, तथापि प्रमात्वाभावप्रमात्वघटकतद्वद्विशेष्यकत्वाभावाद्यनुगमपर एव प्रकृतग्रन्थ इति नासङ्गतिः ।

वस्तुतस्तु[1] तदभाववति तत्प्रकारकत्वरूपं भ्रमत्वं तदभावधर्मितावच्छेदककतत्प्रकारकाहार्यभ्रमे लौकिकप्रत्यक्षविषय इति ध्येयम् ।

---

( प्रभा ) साक्षात्कारित्वग्रहः = पीतं शंखं साक्षात्करोमीतिग्रह इत्यर्थः । तद्घटितारोपेति = तादृशदोषघटितारोपसामग्र्या इत्यर्थः । अयम्भावः, यादृशदोषजन्यज्ञाने साक्षात्कारित्वग्रहः तादृशदोषघटितसामग्री एव भ्रमविषयनिष्ठासाधारणधर्मविषयकलौकिकप्रत्यक्षप्रतिबन्धिकेतिसिद्धान्तेन मीमांसकमते भ्रमत्वस्यातीन्द्रियत्वेन साक्षात्कारासम्भवात् भ्रमत्वारोपसामग्र्याः प्रमात्वलौकिकप्रत्यक्षाप्रतिबन्धकतया भ्रमत्वारोपकालेऽपि प्रमात्वलौकिकप्रत्यक्षोत्पादात् बाधविरहेण प्रामाण्यविरोध्यग्राहकत्वनिवेशनं तद्वारणार्थं विफलमिति समुदितस्तात्पर्यार्थः । तत्सार्थकयितुं समाधत्ते उक्तयुक्त्येति । भ्रमत्वस्य पमरतेऽपि अतीन्द्रियतयेत्यनुपदमुक्त युक्त्येतिभावः । संशयजनकदोषस्येवेति । मीमांसकानां संशयत्वमपि न लौकिक प्रत्यक्षविषयीभूतम् । प्रमात्वग्रहासम्भवादिति । तथाच भ्रमत्वारोपकाले बाधवारणाय प्रामाण्यविरोध्यग्राहकत्वनिवेश आवश्यक इति भावः । स्मर्यमाणारोप एव दोषोऽसाधारणधर्मज्ञानविरोधी ननु अनुभूयमानारोपोऽपीत्याशयेनाह अस्तुवेति । प्रमात्वघटकेति । प्रमात्वघटकं यत्तद्वद्विशेष्यकत्वं तदभावादीनामनुगमपर एवेत्यर्थः । प्रामाण्यविरोधित्वेनोभयोः संग्रहार्थमिति भावः । प्रकृतग्रन्थ इति = अप्रामाण्यम् प्रामाण्यविरोधि इति ग्रन्थ इत्यर्थः ।

अनाहार्यभ्रमे तदभावज्ञानासम्भवात् भ्रमत्वाग्रहेऽपि आहार्य्येण तदभावाधिकरणरूपविशेषणज्ञानसम्पादनात् तथाविधविशेषणज्ञानसम्पादकसामग्रीवशाद् वा मनःसंयुक्तात्मसमवेतविशेषणतासन्निकर्षेण आहार्य्ये भ्रमत्वलौकिकप्रत्यक्षं सम्भवतीत्याह वस्तुतस्तु इति । भ्रमत्वमिति । अस्य लौकिकप्रत्यक्षविषये इत्यनेनान्वयः । तदभावधर्मितावच्छेदककाहार्यभ्रमेति। आहार्याकारश्च घटत्वाभाववान् घटत्ववानिति । लौकिकप्रत्यक्षविषये इति । तथाच भ्रमत्वभ्रमजनकदोषः साक्षात्कारित्वग्रहप्रयोजकः सम्भवत्येवेति । ध्येयमिति । एतेन भ्रमत्वस्यातीन्द्रियत्वं निराकृतम् । तथाच भ्रमत्वारोपे

---

१ अक्षरार्थस्तु—तदभाववति = घटत्वाभाववति, तत्प्रकारकत्वरूपम् = घटत्वप्रकारकत्वरूपम्, तदभावधर्मितावच्छेदकेति = घटत्वाभावधर्मितावच्छेदकेति, तत्प्रकारकाहार्यभ्रमे = घटत्वप्रकारकाहार्यभ्रमे ।

(गा०) यत्तु अप्रामाण्यारोपकालेऽपि निर्धर्मितावच्छेदककप्रामाण्यभानसम्भवात् अत्राप्रामाण्याग्राहकत्वविशेषणानर्थक्यमिति देश्यम्, तन्न साधु ? पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रामाण्यग्रहस्यैव पुरोवर्त्तिनि प्रवर्त्तकतया अस्यैव स्वतस्त्वपरतस्त्वविवादास्पदतया तद्विशेष्यकज्ञानप्रामाण्ये तद्विशेष्यकत्वावच्छेदेन यावत्स्वाश्रयग्राहकग्राह्यत्वस्यैव परैस्साधनीयतया तत्सार्थक्यात्।

नचैवं ज्ञाने साध्यप्रसिद्धिकथनं न सङ्गच्छत इति वाच्यम् ? यथाश्रुतसाध्याभिप्रायेण आपाततस्तत्कथनात्। उपदर्शितसाध्याभिप्रायेण प्रामाण्यघटकघटत्वादिकमुपेक्ष्य ज्ञानत्वपर्यन्तानुसरणात्। नचानुव्यवसायादेःपुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्य ज्ञानत्वावगाहित्वानियमात्

---

(प्रभा) साक्षात्कारित्वग्रहे सिद्धे यादृशदोषजन्यज्ञाने साक्षात्कारित्वग्रहस्तद्घटितारोपसामग्र्या एव प्रतिबन्धकत्वाङ्गीकारेऽपि भ्रमत्वारोपसामग्र्याःप्रमात्वलौकिकप्रत्यक्षप्रतिबन्धकतया प्रमात्वाग्रहाद् बाधवारणाय प्रामाण्यविरोध्यग्राहकत्वविशेषणं सार्थकमिति भावः। अप्रामाण्यारोपकालेऽपि = इदं ज्ञानमप्रमेति भ्रमत्वभ्रमकालेऽपि इति तदर्थः। निर्धर्मितावच्छेदककेति। प्रमात्वस्य धर्मितावच्छेदकं हि इदन्त्वविशिष्टज्ञानत्वम्, तच्च पुरोवर्त्तिविशेष्यकत्वम्, तद्रहितेत्यर्थः। प्रामाण्यभानसम्भवादिति। निर्धर्मितावच्छेदकबुद्धेरप्रतिबध्यत्वात् तादृशप्रमात्वग्रहस्सुलभ इति भावः। विशेषणानर्थक्यमिति। तादृशभ्रमत्वारोपसामग्र्याः साध्यघटकत्वेऽपि तज्जन्यो यो निर्धर्मितावच्छेदककप्रमात्वग्रहः-तद्विषयत्वस्य प्रमात्वे सत्त्वेन बाधानवकाशात्। समाधत्ते तन्नेति। अयमाशयः, पुरोवर्त्तिविशेष्यकज्ञानगतप्रमात्वरूपपक्षे पुरोवर्त्तिविशेष्यकत्वावच्छेदेन ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्यैव साध्यतया भ्रमत्वारोपकाले पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रमात्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहपदेन निर्धर्मितावच्छेदककग्रहस्य घत्तुमशक्यतया न तमादाय बाधवारणसम्भव इति भावः। ननु स्वाश्रयग्राहकसामग्रीग्राह्यत्वमेवास्तु साध्यम् किम्पुरोवर्त्तिविशेष्यकत्वावच्छेदेनेत्यस्य साध्यघटकतयेत्यत आह अस्यैव विवादास्पदेति। अस्यैव = पुरोवर्त्तिविशेष्यकत्वावच्छेदेन स्वाश्रयग्राहकसामग्रीग्राह्यत्वस्यैवेत्यर्थः। अत्रैवोपोद्बलकमाह प्रवर्त्तकतयेति।

एवम् = पूर्ववर्त्तिविशेष्यकत्वावच्छेदेन यावत्स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वस्य साध्यत्वे। न संगच्छते = पुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्य ज्ञाने स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वरूपसाध्यविरहात् तत्तज्ज्ञानव्यक्तीनामनुव्यवसाये ज्ञानत्वं धर्मितावच्छेदकीकृत्यैव भानात्। यथाश्रुतसाध्याभिप्रायेणेति = स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वरूपसाध्याभिप्रायेणेत्यर्थः। उपदर्शितेति = पुरोवर्त्तिविशेष्यकत्वावच्छेदेन स्वाश्रयग्राहकसामग्रीग्राह्यत्वरूपसाध्याभिप्रायेणेत्यर्थः। घटत्वादिकमुपेक्ष्येति। तथाच घटत्वाद्युपेक्षणेनैव पुरोवर्त्तिविशेष्यकत्वावच्छेदेनेत्यस्य साध्यघटकता व्यज्यते। अनियमादिति। पुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्यैव सर्वदानुव्यवसायो जायते इति नियमाभावात् ज्ञानत्वमात्रस्य पुरोवर्त्तिविशेष्यकत्वमात्रस्य एकत्र द्वयमितिरीत्या तदुभयस्य वा भानसम्भ-

(दी०) घटत्वनिष्प्रकारकत्वाद्घटितप्रामाण्यग्रहे तद्विरोधिनः घटत्वादेरवश्यं ग्रहात्

(गा०) न ज्ञानत्वेऽपि उक्तसाध्यप्रसिद्धिसम्भव इति वाच्यम्? तद्विशेष्यकत्वावच्छिन्ने ज्ञानत्ववैशिष्ट्यग्राहकसामग्र्या एव साध्येऽन्तर्भावनीयतया तादृशसामग्रीजन्ययावद्ग्रहविषयतया ज्ञानत्वे प्रसिद्धिसौलभ्यादित्यलमतिविस्तरेण।

तदप्रामाण्याग्राहकेत्यत्र तत्पदप्रयोजनमाह घटत्वेति। घटत्ववतीत्यादिप्रामाण्यग्राहकसामग्र्या घटादिरूपविषये तत्प्रामाण्यविरोधिघटत्वादेरवश्यं ग्रहात् प्रकृतप्रामाण्यविरोध्यग्राहकतद्ग्राहकसामग्र्या अप्रसिद्धेरित्यर्थः। अप्रामाण्यपदस्य यदि साक्षात्प्रमात्वग्रहप्रतिबन्धकं यज् ज्ञानन्तद्विषयार्थकतोपेयते उक्तयुक्त्या भ्रमत्वारोपसामग्र्याःप्रमात्वलौकिकप्रत्यक्षाप्रतिबन्धेन भ्रमत्वापरिग्रहेऽपि क्षतिविरहात्,

(प्रभा) वादिति भावः। तद्विशेष्यकत्वावच्छिन्ने = पुरोवर्त्तिविशेष्यकत्वावच्छिन्ने। ज्ञानत्ववैशिष्ट्यग्राहकसामग्र्या एवेति = पुरोवर्तिविशेष्यकत्वनिष्ठधर्मितावच्छेदकताकसमवायसम्बन्धावच्छिन्नज्ञानत्वनिष्ठप्रकारताप्रयोजकत्वेन एकविशिष्टेऽपरवैशिष्ट्यग्राहकसामग्र्या एवेत्यर्थः।

ननु प्रामाण्यविरोध्यग्राहकत्वनिवेशेनैव इदं ज्ञानमप्रमा इत्याकारकज्ञानग्राहकसामग्रीवारणसम्भवेन तदप्रामाण्याग्राहकेत्यत्र तत्पदस्य किम् फलमित्याकाङ्क्षायामाह दीधितौ घटत्वेत्यादि। घटत्ववतीत्यादिप्रामाण्यग्राहकेति। घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वविशिष्टज्ञानत्वरूपप्रामाण्याश्रयज्ञानग्राहकसामग्र्या इत्यर्थः। घटादिरूपविषये = विशेष्यीभूतघटे इत्यर्थः। विरोधिघटत्वादेरिति = तत्प्रामाण्यावच्छेदकानवच्छिन्नत्व-अवच्छिन्नत्वोभयाभाववत्प्रमानिष्ठाधिकरणताकान्यरूपप्रामाण्यविरोधित्वस्य घटत्वादौ सत्त्वादिति भावः। तद्ग्राहकेति = स्वाश्रयज्ञानग्राहकेत्यर्थः। अप्रसिद्धेरिति। अयम्भावः, यदि तत्पदस्य साध्यघटकत्वं न स्यात् तर्हि घटत्वप्रकारकज्ञानानुव्यवसायसामग्र्याःउक्तरीत्या प्रमात्वविरोधिनो घटत्वादेः भानप्रयोजकतया प्रामाण्यविरोध्यग्राहकसामग्र्या अप्रसिद्धिःस्यादिति भावः। उपेयत इति। यद्विषयिताव्यापिका प्रमात्वग्रहप्रतिबन्धकता तदर्थकता स्वीक्रियत इत्यर्थः। साक्षादिति = ज्ञानवैशिष्ट्यानवच्छिन्नत्वम्प्रतिबन्धकतायां निवेश्यत इतिभावः। तथाच साक्षात्प्रमात्वग्रहप्रतिबन्धकं यद्विषयकं ज्ञानं तद्विषयाग्राहिका स्वाश्रयज्ञानग्राहिका या सामग्री तज्जन्यग्रहविषयत्वं साध्यम् पर्यवसितम्, तेन न साध्याप्रसिद्धिः। घटत्ववत्प्रमात्वाभाववत् इतिनिश्चयासमानकालीनघटत्ववदिदमित्याकारकनिश्चये प्रतिबन्धकताविरहेण साक्षात्प्रमात्वग्रहप्रतिबन्धकत्वाभावात्। नन्वेवमपि भ्रमत्वारोपस्य साक्षात्प्रमात्वग्रहाविरोधितया तत्सामग्र्याःसाध्यान्तर्गततया तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहात् बाधतादवस्थ्यम् अत आह उक्तयुक्त्येति। साक्षात्कारित्वग्रहघटितारोपसामग्र्या एव लौकिकज्ञानविरोधितयेत्यादिपूर्वोक्तयुक्त्येत्यर्थः। भ्रमत्वापरिग्रहेऽपीति=निरुक्तप्रामाण्याविरोधित्वेन भ्रमत्वस्यासंग्रहेऽपीत्यर्थः। क्षतिविरहादिति=

(गा० ) तदा घटत्वादिकमादाय दोषाप्रसक्तावपि इदं निष्प्रकारकमित्यादिज्ञानीयनिष्प्रकारत्वादिमतीत्यादिप्रामाण्यग्राहकसामग्र्याः निष्प्रकारकत्वादिग्राहकत्वस्यावश्यकत्वात् तादृशप्रामाण्यपक्षकस्थलेऽनुपपत्तिर्दुर्वारैवेत्याशयेनाह *निष्प्रकारकत्वेति* ।

प्रमात्वविरोधिज्ञानवृत्तिधर्माग्राहकत्वनिवेशे घटत्वादिग्राहकतामादाय दोषानवकाशाद् वा निष्प्रकारकत्वाद्यनुसरणम् । घट इत्यादिज्ञाने निर्विशेषण्घटत्वादिरूपप्रकारांशे निष्प्रकारत्वसत्त्वात् तत्सम्बन्धावगाहिज्ञानप्रामाण्यविरोधिनस्तत्सम्बन्धेन तत्प्रकारकत्वाभावस्य च ज्ञानेऽतिसुलभत्वात् ज्ञानवृत्तित्वविशेषणेन तद्वारणासम्भवात् । तस्याप्रामाण्यं तदप्रामाण्यमिति षष्ठ्यन्तार्थस्य प्रामाण्येनान्वयात् तदीयप्रमाण्यविरोधिपर्यवसितमितिमिश्र-

---

(प्रभा) भ्रमत्वारोपसामग्र्याःसाध्यघटकत्वेऽपि तज्जन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वेन बाधविरहादिति भावः । दोषाप्रसक्तावपि = साध्याप्रसिद्धेरप्रसक्तावपीत्यर्थः । इदं निष्प्रकारकमित्यादीति । आदिपदात् इदं निर्विशेष्यकमिति ज्ञानपरिग्रहः । निष्प्रकारकत्वादिमति... प्रामाण्यग्राहकसामग्र्या इति = इदं निष्प्रकारकम् इत्याकारकज्ञानगतं यन्निष्प्रकारकत्ववति निष्प्रकारकत्वप्रकारकत्वरूपम् प्रामाण्यं तस्य यो ग्रहःनिष्प्रकारकज्ञानवानहमित्यनुव्यवसायरूपःतज्जनकसामग्र्या इत्यर्थः । तादृशप्रामाण्यपक्षकस्थले इति = इदं निष्प्रकारकमिति ज्ञानगतनिष्प्रकारकत्ववति निष्प्रकारकत्वप्रकारकत्वरूपप्रामाण्यपक्षकस्थले इत्यर्थः । अनुपपत्तिरिति = साध्याप्रसिद्धिरित्यर्थः । तथाच निष्प्रकारकत्ववति निष्प्रकारकत्वप्रकारकं यत् प्रामाण्यज्ञानं तद्विषयकानुव्यवसायसामग्र्याम् अयं घट इति ज्ञानगतप्रमात्वविरोधिनो निष्प्रकारकत्वादेःभानप्रयोजकतायाःसत्त्वात् सामान्यतः तादृशस्थले ज्ञानग्राहकसामग्र्याम् प्रामाण्यविरोध्यग्राहकत्वस्याप्रसिद्ध्या साध्याप्रसिद्ध्यापत्तिरिति भावः ।

निष्प्रकारकत्वाद्यनुसरणे बीजान्तरमाह प्रमात्वविरोधिज्ञानवृत्तीति । तथाच प्रामाण्यविरोधी यो ज्ञानवृत्तिर्धर्मस्तदग्राहकत्वस्य सामग्रीविशेषणत्वे न प्रामाण्यविरोध्यग्राहिकायास्सामग्र्या अप्रसिद्धिर्घटत्वादेर्ज्ञानवृत्तित्वविरहात् इति हृदयम् । ननु मीमांसकैर्निर्विकल्पानुपगमात् निष्प्रकारकत्वस्यापि तन्मते ज्ञानावृत्तितया ज्ञानवृत्तित्वविशेषणेनैव वारणं सम्भवतीत्याशंक्याह घट इति । निर्विशेषणेति = घटत्वस्य स्वरूपतो भानादित्यर्थः । स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताककिञ्चित्प्रकारकत्वाभावरूपनिष्प्रकारकत्वस्य स्वरूपसम्बन्धेन यत् निष्प्रकारकम् इदमिति ज्ञानन्तन्निष्ठप्रामाण्यविरोधिनः तादृशनिष्प्रकारकत्वस्य घट इति ज्ञानेऽतिसुलभतामाह तत्सम्बन्धावगाहीति । तद्वारणासम्भवादिति = निष्प्रकारकत्ववारणासम्भवादित्यर्थः । तथाच निष्प्रकारकत्वस्यापि ज्ञानवृत्तितया ज्ञानवृत्तित्वविशेषणेनापि न तद्वारणं सम्भवति, गुरुणा निर्विकल्पकास्वीकारात् सर्वमतसाधारण्यायैवैतादृशः प्रयास इति न विस्मर्त्तव्यम् । तदीयप्रामाण्यविरोधिपर्यवसितमिति । यज्ज्ञानगतप्रमात्वं ग्राह्यं तज्ज्ञाननिष्ठं यत् प्रामाण्यं तादृशप्रामाण्यविरोध्यग्राहिका स्वाश्रयज्ञानग्राहिका

( दी० ) तदिति लुप्तसप्तमीकम् ।

---

(गा०) व्याख्यायां निष्प्रकारकत्वादेः सकलप्रामाण्यविरोधितया उक्तदोषोद्धारासम्भवात् सप्तमीसमासाभिप्रायेणाह *लुप्तसप्तमीकमिति* ।

ननु तदप्रामाण्याग्राहकपदस्य सप्तमीसमासेन तद्विशेष्यकाप्रामाण्यग्रहाजनकत्वमर्थः, एवञ्च घटत्वादिप्रकारकज्ञानग्राहकसामग्र्याः तज्ज्ञानांशे प्रामाण्यघटकघटत्वादिग्राहकत्वाभावेन उक्तदोषवारणेऽपि अन्यथाख्यातिमनभ्युपगन्तुर्गुरोर्ज्ञानविशेष्यकाप्रामाण्यग्रहाप्रसिद्ध्या साध्याप्रसिद्धिर्दुर्वारैव, ज्ञानेऽप्रामाण्यासत्त्वेन तत्प्रकारकज्ञानस्य अन्यथाख्यातित्वेन तेनाभ्युपगमा-

---

(प्रभा) या सामग्री तज्जन्यग्रहविषयत्वरूपं साध्यं षष्ठीसमासे पर्यवसितं स्यादिति भावः। सकलप्रामाण्यविरोधितयेति = इदं निष्प्रकारकमित्याकारकज्ञानगतप्रमात्वस्यापि विरोधितयेत्यर्थः । दोषोद्धारासम्भवादिति = साध्याप्रसिद्धिदोषोद्धारासम्भवादित्यर्थः । अयमाशयः, प्रमात्वमात्रस्य प्रकारतानिरूपितत्वेन निष्प्रकारकत्वस्य सकलप्रमात्वविरोधितया इदं निष्प्रकारकम् इत्याकारकज्ञानगतं यन्निष्प्रकारकत्ववति निष्प्रकारकत्वप्रकारकत्वरूपं प्रामाण्यं तस्यापि विरोधित्वेन तद्ग्राहकसामग्र्याःइदं निष्प्रकारकमितिज्ञाननिष्ठप्रामाण्यविरोध्यग्राहकत्वाप्रसिद्धेः । सप्तमीसमासाभिप्रायेणेति । तथाच सप्तमीसमासादरे यज्ज्ञाने प्रमात्वं ग्राह्यं तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठप्रकारताशालिग्रहाजनिका या स्वाश्रयज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वं साध्यम् पर्यवस्यति । एवंसति च इदं निष्प्रकारकम् इति स्थलेऽपि न साध्याप्रसिद्धिः, तथाहि इदं निष्प्रकारकम् इत्याकारकज्ञानगतप्रमात्वस्य स्वतो ग्राह्यत्वेन चिकीर्षिततया तत्पदग्राह्यतादृशज्ञाननिष्ठविशेष्यतानिरूपिता न तावत् निष्प्रकारकत्वनिष्ठा तादृशज्ञानीया प्रकारता किन्तु प्रथमज्ञाननिष्ठविशेष्यतानिरूपितैवेति तादृशज्ञानग्राहिका सामग्री तत्प्रामाण्यविरोध्यग्राहकत्वेन वक्तुं शक्यत इति न साध्याप्रसिद्धिरिति भावः ।

एवमपि गुरुमते साध्याप्रसिद्धेर्दुर्वारतेत्यालोच्याशङ्कते नन्विति । तद्विशेष्यकाप्रामाण्येति = यज्ज्ञानगतप्रमात्वं स्वतोग्राह्यतया चिकीर्षितम् तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठप्रकारताशालिग्रहाजनकत्वमित्यर्थः । एवञ्चेति = तदप्रामाण्याग्राहकपदस्य निरुक्तार्थकत्वे नेत्यर्थः। घटत्वादिप्रकारकेति=घटमहं जानामीत्यनुव्यवसायसामग्र्या इत्यर्थः । तज्ज्ञानांश इति = प्रमात्वाश्रयीभूतेऽयंघट इति ज्ञान इत्यर्थः । प्रामाण्यघटकेति = अयं घट इति ज्ञानविशेष्यकप्रामाण्यविरोधिघटत्वप्रकारको योऽयं घट इत्याकारकं ज्ञानं घटत्ववत् इति ग्रहस्तज्जनकत्वाभावेनेत्यर्थः । उक्तदोषवारणेऽपीति = साध्याप्रसिद्धिवारणेऽपीत्यर्थः । तथाच घटमहं जानामि इत्याकारको ग्रहो न तावत् यज्ज्ञानगतप्रमात्वं स्वतोग्राह्यत्वेन चिकीर्षितम् तादृशज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिघटत्वनिष्ठप्रकारताशाली किन्तु अयं घट इति ज्ञानं घटत्ववत् इत्याकारको ग्रह एव, तदजनकत्वेन घटमहं जानामीत्यनुव्यवसायसामग्र्याः प्रसिद्धतया न साध्याप्रसिद्धिरिति भावः । अन्यथाख्यातिम् = भ्रमात्मकज्ञानम् । गुरुमते भ्रमस्याली-

( दी० ) अप्रामाण्यग्रहः इदं ज्ञानमप्रमेतिव्यवहारजनको ग्रहः ।

( गा० ) सम्भवात् । अप्रामाण्यग्रहस्याप्रामाण्यावगाहित्वमात्रेण निवेशे ज्ञानेऽप्रामाण्यप्रकारकविसंवादीच्छाप्रसिद्धया साध्याप्रसिद्धिवारणे तु ज्ञानग्राहक सामग्र्यां तादृशेच्छाद्यजनकत्वस्य अव्यावर्त्तकतया अप्रामाण्यभ्रमात्मकज्ञानग्राहकसामग्र्या प्रामाण्याग्रहेण बाधो दुर्वार इत्याशंक्याह *अप्रामाण्यग्रह* इति । *व्यवहारजनक* इति । तादृशशब्द[1]प्रयोगजनक इत्यर्थः । प्रामाण्यविरोधिप्रकारता[2]निरूपिततज्ज्ञाननिष्ठविशेष्यतानिरूपक इति यावत् । गुरुमते भ्रमस्थले विभिन्नज्ञानगोचरयोरपि धर्मधर्मिणोर्विशेषणविशेष्यभावोपगमात् न तन्मतसिद्धाप्रामाण्यभ्रमासंग्रहः ।

(प्रभा) कतयाऽप्रामाण्यस्य ज्ञानाधर्मत्वेन ज्ञानविशेष्यकाप्रामाण्यप्रकारकग्रहस्य भ्रमरूपत्वेनाप्रसिद्धिस्स्फुटैवेत्यालोचयते ज्ञानेऽप्रामाण्यासत्त्वेनेति । ननु यज्ज्ञानगतम्प्रमात्वम् स्वतोग्राह्यत्वेन चिकीर्षितम् तादृशज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठप्रकारताशाली यस्तदजनकत्वस्य स्वाश्रयज्ञानग्राहकसामग्र्यां निवेशे ज्ञानविशेष्यकाप्रामाण्यप्रकारकविसंवादीच्छैव तादृशी प्रसिद्धा स्यात्, गुरुणा ज्ञाने व्यधिकरणप्रकारकत्वस्यानभ्युपगमेऽपि इच्छायां व्यधिकरणप्रकारकत्वस्याभ्युपगमात् न साध्याप्रसिद्धिरित्याशंकायामाह अप्रामाण्यावगाहित्वमात्रेणनिवेश इत्यादिना । मात्रपदेन ग्रहो व्यवच्छिद्यते । ज्ञानग्राहकसामग्र्याम् = प्रमात्वाश्रयज्ञानग्राहकसामग्र्यामित्यर्थः । तादृशेच्छाद्यजनकत्वस्येति = अयं घट इत्यादिज्ञानगतप्रमात्वस्य स्वतो ग्राह्यत्वेन चिकीर्षिततया तज्ज्ञानधर्मिकप्रामाण्यविरोधिप्रकारकेच्छाद्यजनकत्वस्येत्यर्थः । आदिना कृतेः परिग्रहः । अव्यावर्त्तकतयेति = इदं ज्ञानमप्रमा इदं ज्ञानम् भ्रमः इत्यनुव्यवसायजनकसामग्र्या अवारकतयेत्यर्थः । बाधो दुर्वार इति । तथाच इदं ज्ञानमप्रमा इत्याद्यनुव्यवसायसामग्र्या अपि अयं घट इत्यादिज्ञानविशेष्यकप्रामाण्यविरोधिप्रकारकत्वेन गुरुमते प्रसिद्धाया इच्छाया अजनकत्वेन साध्यान्तर्गततया तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाध इति भावः । ननु गुरुमते भ्रमस्य ज्ञानद्वयात्मकतया तादृशविशेष्यतानिरूपकग्रहाप्रसिद्धया साध्याप्रसिद्धिर्दुर्वारैवेत्यत आह गुरुमते इति । विशेष्यविशेषणभावोपगमादिति । अयमाशयः, यद्यपि गुरुणा भ्रमो नाङ्गीक्रियते तथापि इदं रजतम् इदं ज्ञानमप्रमेत्यादिव्यवहारस्य अपलपितुमशक्यतया स्वरूपतो विषयतश्च मिथो भेदाग्रहनिबन्धनो विभिन्नज्ञानगोचरीभूतधर्मधर्मि-

१ तादृशशब्दप्रयोग इति । अभिज्ञा अभिवदनम् उपादानम् अर्थक्रिया चेति अर्थव्यवहारस्य चातुर्विध्येन अत्र अभिवदनरूप एवार्थो विवक्षितः। अपरग्रहणं प्रयोजनाभावादिति द्योतयति तादृशशब्दप्रयोगजनक इत्यादिना । इदं ज्ञानमप्रमेतिशब्दप्रयोगम्प्रति अर्थज्ञानविधया गुरुमतसिद्धग्रहस्यापि हेतुत्वात् ।

२ शब्दप्रयोगेऽर्थज्ञानहेतुताया निर्युक्तिकत्वे त्वाह प्रामाण्यविरोधिप्रकारतानिरूपितेत्यादि ।

(गा० ) एतेन शब्दप्रयोगेऽर्थज्ञानकारणताया:निर्युक्तिकत्वात् सयुक्तिकत्वेऽपि 'इदं ज्ञानमप्रमा' इति वाक्यस्यानुपूर्वीविशेषपुरस्कारेण निवेशोऽप्रमा-पदस्य शक्तिभ्रमेण आधुनिकसङ्केतेन वा प्रामाण्यप्रकारकवोधेऽपि हेतुतया प्रामाण्यग्रहस्यापि तादृशशब्दप्रयोगजनकतया प्रामाण्यग्राहकसामग्र्या:तादृश-शब्दप्रयोगजनकग्रहाजनकत्वाप्रसिद्धे:अप्रमाशब्देन प्रमाविरोधित्वेन प्रमाभेद-वत्त्वेन च वोधनात् प्रमात्वाभावत्वभ्रमत्वत्वादिनाऽवोधके तत्र ताद्रूप्येण भ्रम-त्वादिग्रहहेतुतायाश्चासम्भवदुक्तिकत्वात् ।

---

(प्रभा) निष्ठप्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावोऽङ्गीक्रियत एव । तथाच इदं ज्ञानमप्रमा इत्याकारकव्यवहारम्प्रति व्यवहर्त्तव्यज्ञानविधया ज्ञानद्वयं कारणम् , तत्रैकम् इदम् इत्या-कारकम् अनुभवरूपम् , अपरम् अप्रमेत्याकारकं स्मरणरूपम् प्रामाण्यविरोधिनिष्ठप्रकारता-निरूपकतज्ज्ञाननिष्ठविशेष्यतानिरूपकग्रहपदेन प्रसिद्धमुपादाय लक्षणसमन्वय इत्यूह्यते ।

एतेनेति = प्रामाण्यविरोधिनिष्ठप्रकारतानिरूपिततज्ज्ञाननिष्ठविशेष्यतानिरूपक इत्या-द्यर्थकरणेनेत्यर्थः । अस्य यथाश्रुतासङ्गतावपीत्यनेनान्वयः । निर्युक्तिकत्वा-दिति = अर्थज्ञानं विनैव शुकस्य शब्दप्रयोगदर्शनेन शब्दप्रयोगेऽर्थज्ञानव्यभिचारित्व-सत्त्वादिति भावः । बुबोधयिषापूर्वकशब्दप्रयोगेऽर्थज्ञानस्य कारणत्वे तु न व्यभिचार इत्यत आह सयुक्तिकत्वेऽपीति । आनुपूर्वी ... निवेशो = इदं ज्ञानमप्रमेतिवाक्यप्रयोगजनकग्रहा-जनकेत्यादिरीत्या निवेश इत्यर्थः । शक्तिभ्रमेणेति = प्रामाण्यम् अप्रमापदवाच्यम् इति शरीरेण । आधुनिकसङ्केतेनेति = अप्रमापदात् प्रमा वोद्धव्या इति आधुनिकसङ्केते-नेत्यर्थः । तादृशशब्दप्रयोगजनकतया = इदंज्ञानमप्रमेतिशब्दप्रयोगजनकतयेत्यर्थः । ग्रहाजनकत्वाप्रसिद्धेरिति । तथाच प्रमात्वज्ञानस्यापि इदं ज्ञानमप्रमेतिव्यवहारजनक-त्वात् तज्जनकसामग्र्या अपि इदं ज्ञानमप्रमेतिव्यवहारजनकग्रहजनकत्वेन साध्याप्रसिद्धि-रिति भावः । दोषान्तरमाह अप्रमाशब्देनेति । प्रमात्वविरोधित्वेनेति सावधारणम् नतु प्रमात्वाभावत्वेनेत्यर्थः । प्रमात्वाभावस्येति शेषः । अवोधके इति । धर्मिवाचकप्रथमा-न्तपदसमभिव्याहृतनञा प्रमात्वात्यन्ताभावत्वादिना वोधकत्वासम्भवादिति भावः । तत्र = अप्रमाशब्दे । निरूपितत्वं सप्तम्यर्थः, अन्वयश्चास्य हेतुताया इत्यनेन । ताद्रूप्येणेति = प्रमात्वाभावत्वभ्रमत्वत्वरूपेणेत्यर्थः । असम्भवदुक्तिकत्वादिति = इदं ज्ञानम् अप्रमेति-शब्दप्रयोगम्प्रति अर्थज्ञानविधया प्रमाविरोधि प्रमाभिन्नं वा इदं ज्ञानमिति ज्ञानस्यैव हेतुतया इदं ज्ञानम्प्रमात्वाभाववत् इदं ज्ञानं भ्रम इति ज्ञानद्वयस्य हेतुताया असम्भव-दुक्तिकत्वादिति भावः । तथाच इदं ज्ञानमप्रमेतिव्यवहारजनकग्रहपदेन इदं ज्ञानम् प्रमा-त्वाभाववत् इदं ज्ञानं भ्रमः इति ज्ञानद्वयी घत्तुं न शक्यते किन्तु इदं ज्ञानम्प्रमाविरोधि भ्रमभिन्नं वेत्येव, तादृशग्रहाजनकसामग्रीपदेन इदं ज्ञानं भ्रमः प्रमात्वाभाववत् इत्याकारक-ग्रहजनकसामग्रीमुपादाय वाधो दुर्वार एवेति भावः ।

केचित्तु—शुकादिभिरुन्मत्तपुरुषैश्च शब्दप्रयोगेऽर्थज्ञानस्य कारणत्वाभावेऽपि प्रवृत्ति-प्रयोजकास्मदादिशब्दप्रयोगेऽर्थज्ञानस्य कारणता निर्विवादैवेत्यनुशयेनाह सयुक्तिकत्वेऽ-

( गा० ) तदंशे वस्तुगत्या प्रमात्वविरोधिधर्मप्रकारिका या प्रतीतिः तत्पर-शब्दजनकज्ञानत्वेन इदं ज्ञानं भ्रम इत्यादिज्ञानसंग्रहस्य च तदंशे तत्प्रकार-कत्वस्य गुरुमतसिद्धभ्रमत्वादिप्रकारकभ्रमसाधारणस्य दुर्वचतयाऽशक्यत्वात्।

सुवचत्वेऽपि तेनैव रूपेण इदं ज्ञानं भ्रम इत्यादिसकलज्ञानसंग्रह-सम्भवे तद्रूपेण प्रतीतिमादाय तत्परवाक्यजनकत्वेन तादृशसंग्रहस्य शिरो-वेष्टनेन नासिकास्पर्शतुल्यत्वात् यथाश्रुतासङ्गतावपि न क्षतिः।

---

(प्रभा) पीति। अप्रमापदस्य शक्तिभ्रमेणेति = अप्रमापद प्रमात्वावच्छिन्ने शक्तमिति शक्तिभ्रमेणेत्यर्थः। शक्तिभ्रमाधीनं हि अर्थज्ञानं प्रायो न व्यवहारप्रयोजकमित्यरुचेराह आधुनिकसङ्केतेनेति। तथाच प्रामाण्यप्रकारकं ज्ञानमपि इदं ज्ञानमप्रमेतिव्यवहारप्रयोजकम्। एवञ्चेदं ज्ञानमप्रमेतिव्यवहारजनकग्रहेण प्रामाण्यग्रहस्यापि संग्रहात् तदजनकस्वाश्रय-ज्ञानग्राहकसामग्र्येव जगत्यप्रसिद्धेति साध्याप्रसिद्धिरिति भावः। शक्तिभ्रमाजन्यत्वे सति आधु-निकसङ्केतग्रहाजन्यो य इदंज्ञानमप्रमेतिव्यवहारजनको ग्रह इतिनिवेशे नानुपपत्तिरित्यतो दोषान्तरमाह अप्रमाशब्देनेत्यादीत्याहुः। तदंशे इति = तज्ज्ञानांशे इत्यर्थः। यज्ज्ञा-नगतप्रमात्वं स्वतोग्राह्यत्वेन चिकीर्षितं तज्ज्ञानधर्मिकेति यावत्। प्रमात्वाभावप्रकारकज्ञानस्य च संग्रहाय ब्रूते वस्तुगत्या प्रमात्वविरोधिधर्मप्रकारिका या प्रतीतिरिति। वस्तुगत्या प्रमात्व-विरोधी धर्मस्तु प्रमात्वाभावो भ्रमत्वमपि तत्प्रकारिका प्रतीतिः इदं ज्ञानं प्रमात्वाभाववद् इदं ज्ञानं भ्रम इत्यादिरूपा। तत्परशब्दजनकज्ञानत्वेनेति। तादृशप्रतीतीच्छयोच्चरितो यश्शब्दस्स च इदं ज्ञानं प्रमात्वाभाववत् इदं ज्ञानं भ्रम इत्याकारकः तत्त्वेनेत्यर्थः। अनया वाचोभङ्ग्या सकलज्ञानसंग्रह इत्यभिमानः। इदं ज्ञानं भ्रम इत्यादिसकलज्ञानसंग्रह-स्येति। अशक्यत्वादित्यनेनान्वयः। आदिपदादिदं ज्ञानं प्रमात्वाभाववत् इत्यस्य संग्रहः। ननु उक्तरीत्या इदं ज्ञानं भ्रम इत्यादिज्ञानसंग्रहे कुतोऽशक्यत्वमित्यतो हेतुमुपदर्शयति तदंशे इति = तज्ज्ञानांशे इत्यर्थः। तत्प्रकारकत्वस्य = वस्तुगत्या प्रमात्वविरोधिधर्म-प्रकारकत्वस्येत्यर्थः। दुर्वचतया इत्यनेनास्यान्वयः। गुरुमतसिद्धभ्रमत्वादिप्रकारकभ्रम-साधारणस्य = गुरुमतसिद्धो यो भ्रमत्वादिप्रकारको भ्रमः अयंघटः इति प्रमाज्ञानधर्मिक-भ्रमत्वप्रकारको भ्रम इदं ज्ञानं भ्रम इत्याकारकस्तत्साधारणस्येत्यर्थः। दुर्वचतयेति। अन्यथाख्यातिमनभ्युपगच्छतो गुरोर्मते तज्ज्ञानधर्मिकप्रामाण्यविरोधिभूतभ्रमत्वप्रकारकत्वस्य इदंज्ञानं भ्रम इत्यत्रासम्भवात्। तथाच तत्साधारण्यविरहे बाधापत्तिः स्यादिति भावः।

सुवचत्वेऽपीति--गुरोर्मते भ्रमस्थले विभिन्नज्ञानगोचरयोरपि धर्म-धर्मिणोर्विशेष्यविशेषणभावोपगमात् तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठ-प्रकारतानिरूपकत्वस्य निवेशे गुरुमतसाधारण्यं सुवचमिति भावः। तेनैव रूपेणेति = तज्ज्ञा-ननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिधर्मप्रकारताकत्वेनैव रूपेणेत्यर्थः। तद्रूपेण प्रतीति-मादाय तत्परवाक्येत्यादि। तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठप्रकारता-निरूपकप्रतीतीच्छयोच्चरितशब्दजनकज्ञानत्वेन सकलज्ञानसंग्रहापेक्षया पूर्वोक्तलघुभूत-ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिप्रकारताकज्ञानत्वेनैव सकलज्ञानसंग्रहसम्भवे ईदृशगुरुभूतकल्पनाया अन्याय्यत्वादिति भावः। न क्षतिरिति = न गुरुमतसिद्धप्रामाण्य-

( दी० ) सच मिश्रादिमते विशिष्टज्ञानम् । गुरूणां तत्स्वातन्त्र्येण अप्रामाण्योपस्थितौ धर्मिज्ञानम् ।

---

( गा० ) केचित्तु व्यवहारजनक इत्यस्य प्रमात्वविरोधिप्रकारकत्वेन तद्भानविषयको योऽभिप्रायःतदधीनवाक्यजनक इत्यर्थः । अभिप्रायश्चेच्छात्मको व्यधिकरणप्रकारकोऽपि गुरूणामनुमतः । अर्थबुबोधयिषापूर्वकवाक्ये वाक्यार्थज्ञानहेतुरिति मतमवलम्ब्येदमित्याहुः ।

स च = तादृशग्रहश्च । *विशिष्टज्ञानमिति* । तेषाम्मतेऽन्यथाख्यात्यभ्युपगमात् एकज्ञानगोचरधर्मधर्मिणोरेव विशेषणविशेष्यभावादिति भावः । *स्वातन्त्र्येणेति* । स्वतन्त्रोपस्थिताप्रामाण्यप्रकारतानिरूपितधर्मिनिष्ठविशेष्यतानिरूपकतज्ज्ञानगोचरानुभवरूपज्ञानान्तरमित्यर्थः ;

---

(प्रभा) भ्रमासंग्रहः । प्रकारान्तरेण यथाश्रुतदीधितिग्रन्थसङ्गतिं प्रदर्शयतां वादिनाम्मतमाह केचित्तु इति । तद्भानविषयकः = प्रामाण्यविरोधिभानविषयक इत्यर्थः । अभिप्रायः = इच्छा । सा च प्रमात्वविरोधिप्रकारकत्वेन प्रमात्वविरोधिज्ञानं जायतामित्याकारिका । तदधीनवाक्यजनके इति = तादृशेच्छाप्रयोज्यवाक्यजनके इत्यर्थः ।

तादृशग्रहश्चेति = इदं ज्ञानम् प्रमेतिव्यवहारजनको ग्रहश्चेत्यर्थः । प्रामाण्यविरोधिप्रकारतानिरूपिततज्ज्ञाननिष्ठविशेष्यतानिरूपको ग्रहश्चेति यावत् ।

तेषाम् = मिश्रभट्टानाम्मते । अन्यथाख्यात्युपगमादिति = व्यधिकरणधर्मप्रकारकग्रहस्वीकारात्तु विभिन्नज्ञानगोचरधर्मधर्मिणोरित्यर्थः । धर्मधर्मिणोरेवेति = अप्रामाण्यरूपधर्मज्ञानरूपधर्मिणोरेवेत्यर्थः । भ्रमात्मकैकज्ञानविषययोर्विशेष्यविशेषणभावादिति भावः ।

दीधितौ गुरूणान्तु = गुरूणाम्मते त्वित्यर्थः । स्वातन्त्र्येणेति = धर्म्यविशेषणतयेत्यर्थः । विशेष्यतयेति यावत् अप्रामाण्योपस्थिताविति ; सत्यामितिशेषः । अप्रामाण्योपस्थितिपूर्वकमिति यावत् । धर्मिज्ञानमिति = धर्मिभूतस्य ज्ञानस्य ज्ञानमित्यर्थः । अयंभावः, गुरुमतेऽपि इदं ज्ञानमप्रमेत्येवाकारःकिन्तु इदं ज्ञानमिति तु प्रत्यक्षात्मकम् अवशिष्टन्तु स्मृत्यात्मकम् । एवञ्च तन्मते याथार्थ्यमपि निर्वहति ज्ञानद्वयं युगपन्न सम्भवति इति नाभ्युपगच्छन्ति प्राभाकराः, तन्मते सर्वत्र भ्रमस्थले स्वरूपतो विषयतश्च मिथो भेदाग्रहनिबन्धनो व्यवहार इत्यन्यत्रोपपादितम् । स्वतन्त्रोपस्थितेति = स्वतन्त्रोपस्थितो योऽप्रामाण्यप्रकारस्तन्निष्ठप्रकारतानिरूपिता या ज्ञानरूपधर्मिनिष्ठविशेष्यता तन्निरूपको यस्तज्ज्ञानगोचरानुभवस्तद्रूपमित्यर्थः । स्वरूपतो विषयतश्च मिथोभेदाग्रहात्समानकालिकविभिन्नज्ञानीयविषयतयोरपि निरूप्यनिरूपकभावस्वीकारात् एकस्य विशिष्टज्ञानस्यासम्भवेऽपि अप्रामाण्योपस्थितिकालिकधर्मिज्ञानस्य इदं ज्ञानमप्रमेतिव्यवहारजनकत्वादितिभावः । पञ्च-

गा० ) एतेनाप्रामाण्याग्राहकपदस्याप्रामाण्य-विषयकज्ञानाजनकार्थतया ज्ञानग्रहजनकसामग्र्याश्च गुरुमते स्वतन्त्राप्रामाण्यग्रहाजनकतयानुपपत्तेर्ज्ञानरूप-धर्म्यगृहीतासंसर्गकस्वतन्त्राप्रामाण्यग्राहकसामग्र्यसमवहितार्थकतया तत्पद-व्याख्यानं मिश्राणामनुपादेयमिति सूचितम् । मिश्रमते क्षणद्वयात्मककाल-घटितयौगपद्यमेव समवधानं बोद्धव्यम् ।

---

(प्रभा) घरमिश्रमतं खण्डयितुमाह एतेनेति । स्वातन्त्र्येणाप्रामाण्योपस्थितिपूर्वकधर्मि-ज्ञानमितिकथनेनेत्यर्थः । स्वतन्त्रोपस्थिताप्रामाण्यप्रकारतानिरूपितज्ञानरूपधर्मिनिष्ठविशेष्यता निरूपकतज्ज्ञानगोचरानुभवरूपज्ञानान्तरमित्यर्थकेनेतियावत् । सूचितमित्यनेन सहान्वयः । अप्रामाण्याग्राहकपदस्येति = मूलकारीयविप्रतिपत्तिस्वरूपघटकेत्यर्थः । ज्ञानग्रहजनक-सामग्र्याश्चेति । अप्रामाण्यभ्रमघटकस्य इदं ज्ञानमित्यनुभवस्य जनकसामग्र्याश्चेत्यर्थः । स्वतन्त्राप्रामाण्यग्रहाजनकयेति = तादृशानुभवस्य गुरुमते स्मृत्यन्यत्वेन तज्जनक-सामग्र्या अप्रामाण्यग्रहजनकत्वासम्भवादित्यर्थः ।

अनुपपत्तेरिति = बाधादित्यर्थः । प्रामाण्याग्रहेऽपीत्यादिः । गुरुमते इदं ज्ञानमप्रमेति-ज्ञाने अप्रमेतिस्मरणात्मकमेकं ज्ञानम् इदं घटज्ञानमिति चानुभवात्मकमपरज्ञानमिति ज्ञान-द्वयम् । तत्रेदं ज्ञानमित्यनुभवजनकसामग्र्याः स्मर्यमाणाप्रामाण्यासंसर्गाग्रहकालीनया प्रामाण्याग्राहकतया तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीपदेन धर्तुं शक्य-तया तज्जन्यतादृशग्रहस्य यावद्ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वे विरहाद् बाधापत्ति-रिति भावः । अत्र अप्रामाण्याग्राहकत्वम् अप्रामाण्यग्राहकसामग्र्यसमवहितत्वम् । गुरुमत-साधारण्यायाह ज्ञानरूपगृहीतासंसर्गकेति । ज्ञानरूपो यो धर्मी तत्रागृहीतोऽसंसर्गो यस्य तादृशो यःस्वतन्त्राप्रामाण्यग्रहस्तज्जनिकेत्यर्थः । तत्पदेति = अप्रामाण्याग्राहकपदेत्यर्थः । सूचितमिति, दीधितिकृतेतिशेषः । तथाच मदुक्तव्याख्यानेनैव सामञ्जस्ये मिश्राणां व्याख्यानमनुपादेयमिति दीधितिकृतामाशयः ।

ननु गुरुनये यदि ग्रहणस्मरणात्मकमेकं युगपदुत्पन्नं युगपदुत्पन्नग्रहणस्मरणरूप-ज्ञानद्वयं वा भ्रमःतदैतद्विवक्षया प्रामाण्यभ्रममादाय वारणसम्भवेऽपि यदि क्रमोत्पन्ना-प्रामाण्यस्मरण-इदंज्ञानानुभवरूपज्ञानद्वयं भ्रमःतदा तु नैतद्विवक्षयाऽपि प्रतीकारः, इदं ज्ञानानुभवसामग्र्याः अप्रामाण्यस्मृतिसामग्र्यसमवहितत्वात् । तदानीं तत्स्मृतिसामग्रीसत्त्वे अनुभवोत्पत्तिसमयेऽपि स्मृतेर्दुर्वारतापत्तेः, स्मृतिसामग्र्यपेक्षयाऽनुभवसामग्र्या बलवत्त्वे-ऽनुभवसामग्र्यां स्मृतिसामग्रीसमवहितत्वस्यात्यन्तमसम्भावितत्वाच्चेत्यत आह मिश्रमते इति । क्षणद्वयात्मककालघटितयौगपद्यमेव समवधानं बोध्यम् । एवकारेण एकक्षण-घटितयौगपद्यव्युदासः । एतेन एकक्षणावच्छेदेन एकाधिकरणवृत्तित्वरूपं यदि समवधानं विवक्षितं तर्हि अप्रामाण्यग्राहकसामग्र्याः प्रमात्वाश्रयज्ञानग्राहकसामग्र्याश्चैकक्षणेऽभावा-त्तादृशसामग्रीद्वयसमवधानाभावात् तादृशज्ञानग्राहकसामग्र्या अपि ज्ञानरूपधर्म्य-गृहीतासंसर्गकस्वतन्त्राप्रामाण्यग्राहकसामग्र्यसमवहितत्वेन साध्यघटकतया तज्जन्यतादृश-ग्रहविषयत्वस्य प्रमात्वे विरहाद् बाधापत्तिस्तदवस्थेत्यपास्तम् । प्रकृते एकक्षणघटितसम-वधानासम्भवं दर्शयति ।

( दी० ) यत्र च तादृशग्रहादिः कदापि न जातस्तत्र अग्राहकान्तं नोपादेयम् प्रयोजनाभावात् इति वदन्ति ।

ननु इदं घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादेर्ज्ञानग्राहकस्य प्रामाण्याग्राहकत्वाद् वाधः,

---

( गा० ) क्रमिकज्ञानद्वयसामग्र्योरेकक्षणेऽसत्त्वनियमात् ।

ननु यादृशप्रामाण्याश्रयज्ञाने कदाचिदपि अप्रामाण्यभ्रमो न जातः तत्प्रामाण्यपक्षकस्थले तदप्रामाण्यग्राहकाप्रसिद्ध्या साध्याप्रसिद्धिरित्यत आह यत्र चेति । ग्रहादीत्यादिपदात् तत्राप्रामाण्यप्रकारकगुणान्तरपरिग्रहः । तेन तादृशज्ञानाप्रसिद्धावपि तादृशेच्छासिद्धौ अग्राहकशरीरे ज्ञानत्वमनन्तर्भाव्य अप्रामाण्यावगाह्यजनकनिवेशे प्रसिद्धिस्सम्भवति, तादृशेच्छाद्यसत्त्वे तु ज्ञानत्वपरित्यागेऽपि अप्रसिद्धिरिति सूचितम् प्रयोजनाभावादिति । वाधाप्रसक्तेरिति भावः ।

इत्यादेः = एतादृशशब्दादेः । ज्ञानग्राहकस्येत्यनेन तज्जन्यग्रहस्य स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहान्तर्गतत्वं सूचितम् । वाध इति । यद्यपि ज्ञानं

---

( प्रभा ) क्रमिकज्ञानद्वयसामग्र्योरेकक्षणेऽसत्त्वनियमादिति । एकात्मनीत्यपि योज्यम् । क्रमिकज्ञानद्वयजनकक्षणद्वयादिघटितसामग्रीद्वयस्य एकक्षणावच्छेदेनैकात्मनि नास्ति सम्भवः ।

गुणान्तरपरिग्रह इति = इच्छादिपरिग्रह इत्यर्थः । अप्रामाण्यावगाह्यजनकनिवेशे इति । तादृशस्थलविशेषे इति शेषः । प्रामाण्यविरोध्यवगाही यस्तदजनकत्वस्य सामग्र्यां निवेशे इत्यर्थः । ज्ञानत्वपरित्यागे इति = ज्ञानत्वमनन्तर्भाव्य प्रामाण्यविरोध्यवगाही यस्तदजनकत्वनिवेशे इति भावः ।

विप्रतिपत्तिघटकपदानां कृत्यं समाप्येदानीं मीमांसकमतसाध्ये स्वतन्त्रं वाधदोषमुपदर्शयितुं दीधितिकार आह नन्वित्यादिना । सविशेष्यकमित्यादेरिति । आदिना अनुमितिपरिग्रहः । ज्ञानग्राहकस्येति । शाब्दवोधात्मको यो ज्ञानग्रहस्तज्जनकस्येत्यर्थः । प्रामाण्याग्राहकत्वादिति । व्यवसायानुव्यवसायज्ञाततालिङ्गकानुमितीनामेव प्रामाण्यविषयकतया शाब्दवोधस्य प्रामाण्याविषयकत्वादिति भावः । वाधइति । तथाच घटत्वप्रकारकं ज्ञानं सविशेष्यकमितिवाक्यजन्यशाब्दवोधस्यापि तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहान्तर्गततया तद्विषयत्वस्य च प्रमात्वे विरहाद् वाध इति भावः । स्वाश्रयेति । स्वं प्रमात्वं तदाश्रयो यो घटत्वप्रकारकं ज्ञानं तद्विषयको ग्रहस्तादृशशाब्दवोधरूपस्तज्जनकसामग्रीजन्यो ग्रहः स एव शाब्दवोधः । नच घटत्वप्रकारकज्ञानस्य कथं प्रमात्वाश्रयत्वं घटत्ववद्विशेष्यकत्वावच्छिन्नत्वस्य प्रमात्वघटकस्य तत्राभानादिति वाच्यम्, प्रमात्वाश्रयत्वस्योपलक्षणत्वात् । उपलक्षणत्वञ्च ज्ञानान्वितत्वम् ।

(गा०) घटज्ञानं वा गुण इत्यादेःज्ञानग्राहकस्य प्रामाण्याग्राहकत्वादपि वाध

(प्रभा) नच प्रमात्वविशिष्टविषयकज्ञानजनकसामग्रीजन्यत्वमेव निवेश्यतां तावतैव न वाध इति वाच्यम्, तथा सति सिद्धसाधनापत्तेः। प्रमात्वविशिष्टविषयकज्ञानन्तु इदं ज्ञानम्प्रमेत्याकारकमेव तज्जनकसामग्रीजन्यग्रहोऽपि तदेव तद्विषयत्वस्य नैयायिकैरपि प्रमात्वेऽङ्गीकारादिति। घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यत्र प्रकारकत्वसविशेष्यकत्वोपादानस्य प्रयोजनमुपदर्शयति यद्यपीत्यादिना। वाधसम्भव इति। तथाच ज्ञानं गुण इति वाक्यजशाब्दबोधस्यापि तादृशयावद्ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वेऽसत्त्वाद् वाध इति भावः। ननु विषयोपरक्तस्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वस्य साध्यत्वे नायं दोष इत्यत आह घटज्ञानं वेति। आदिपदाद् घटज्ञानवानयमित्याद्यनुमितिस्मृतिपरिग्रहः। तथाच तादृशशाब्दबोधानुमितिस्मृत्यादिकमादाय वाधो दुर्वार इति भावः। नच गुरुमते ज्ञानं स्वनिष्ठप्रामाण्यमवश्यं गृह्णातीतिनियमः, तन्मतेऽनुव्यवसायाभिन्नतया व्यवसायस्यैव प्रामाण्याश्रयत्वात् प्रामाण्यविषयकत्वाच्चेति। तथाचेयमनुमितिः शाब्दप्रमितिश्च घटत्ववति घटत्वप्रकारिका इति तत्त्वमपि गृह्णातीति न वाध इति वाच्यम्, घटत्ववति घटत्वप्रकारकत्वस्य ज्ञानभेदेन भिन्नतयाऽनुमित्यादिवृत्तेस्तस्य ग्रहेपि अनुमितिविषयीभूतज्ञानवृत्तेस्तस्याग्रहेण वाधतादवस्थ्यात्। भट्टमिश्रमते वाधस्य दुर्वारत्वाच्च।

अत्र केचित् तादृशशाब्दबोधादिना प्रामाण्यं गृह्यत एवेति वदन्ति। तेषामयमाशयः, यथा गुरुनये घटेन जलमाहरेत्यत्रान्वयितावच्छेदकं छिद्रेतरत्वं शाब्दबोधविषयः, अन्वयप्रयोजकरूपवत्त्वलक्षणयोग्यतावलात् भट्टमते दिवाऽभोजी देवदत्तःपीन इत्यादौ श्रुतार्थापत्तिस्थले श्रुतस्य शब्दस्य शाब्दबोधजनकत्वान्यथानुपपत्त्या शब्दकल्पनस्थले रात्रिभोजित्वमन्वयितावच्छेदकम् अध्याहृतरात्रिभोजनादिशब्दादुपस्थितं शाब्दबोधविषयः, तथा घटज्ञानमितिवाक्येऽपि ज्ञानत्वस्य घटविशेष्यकत्वातिप्रसक्त्या घटविशेष्यकत्वान्वयितावच्छेदकत्वासम्भवेन घटत्वप्रकारकत्वघटविशेष्यकत्वयोः शब्दोपस्थितयोःपरस्परान्वयितावच्छेदकयोः गुरुमते योग्यतावलाच्छाब्दबोधविषयत्वम्। भट्टमते च अन्वयितावच्छेदकीभूतघटत्वप्रकारकत्वस्य शब्दजन्योपस्थित्यर्थं घटत्वप्रकारकादिपदाध्याहारस्यावश्यकत्वात् शब्दोपस्थितयोस्तयोः शाब्दबोधविषयत्वम्। नच भट्टनये मुरारिनये चान्यथाख्यात्यभ्युपगमात् घटाविशेष्यकस्यापि घटत्वप्रकारकज्ञानस्य सम्भवान्न घटविशेष्यकत्वमन्वयितावच्छेदकम्, एवं घटत्वप्रकारकत्वमपि नान्वयितावच्छेदकं, द्रव्यत्वप्रकारकघटविशेष्यकज्ञानेऽतिप्रसक्तेरितिवाच्यम्, घटत्वप्रकारकत्वेऽसति वाधके घटविशेष्यकज्ञानस्य घटत्वप्रकारकत्वनियमात्, घटविशेष्यकत्वेऽसति वाधके घटत्वप्रकारकज्ञानस्य घटविशेष्यकत्वनियमात्। अत एवौत्सर्गिकं धियां प्रामाण्यमिति प्रवादोऽपि सङ्गच्छते। तदर्थश्च यतस्तद्द्विशेष्यकत्व तत्प्रकारकत्वयोः परस्परं व्याप्यत्वमत एवेत्यर्थः। औत्सर्गिकम्=उत्सर्गसिद्धं, वाधकाभावघटितनियमसिद्धमिति यावत्। तस्माद् यदि वाधकाभावस्तदा गुरुवत्तयोरपि घटत्वप्रकारकज्ञानत्वरूपघटविशेष्यकत्वान्वयितावच्छेदकम्। अथ घटत्वप्रकारकत्वस्य वाधकसम्भवः "वाधबुद्ध्यादिसत्त्वं तदाऽप्रामाण्याग्राहकत्वमेव सामग्र्यामसिद्धमिति" प्रामाण्यविरोधिग्रहासमवहिताद् घटज्ञानमितिशब्दात्स्वमते प्रामाण्यग्रह

(दी०) अथ विशेष्यज्ञानस्य तत्प्रकारकत्वप्रकारतया ग्राहकत्वं वाच्यम्।

( गा० ) सम्भवः तथापि तद्धर्मप्रकारकत्वेन सविशेष्यकत्वेन च ज्ञानग्रहपर्यन्तनिवेशे तद्वारणसम्भवात् उक्तग्रहपर्यन्तानुधावनम्। *विशेष्येति*। विशेष्यांशे यत्प्रकृतप्रामाण्यघटकप्रकारप्रकारकत्वं तेन प्रकारेण ज्ञानस्य ग्राहकत्वं साध्ये प्रवेश्यमित्यर्थः।

ननु एवमपि पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमित्याकारकशाब्दादिज्ञानस्योक्तप्रकारेण ज्ञानावगाहिनः पुरोवर्त्तिरूपधर्मिणि घटत्वादिवैशिष्ट्यानवगाहिनो धर्मिनिष्ठघटत्वादिमत्त्वघटितप्रामाण्यानवगाहित्वात् बाधो दुर्वार एवेत्याशंक्य तादृशज्ञानेनापि धर्मिनिष्ठघटत्वादिवैशिष्ट्यस्य प्रकार-

( प्रभा ) इति न बाध इति विभावनीयम्। तद्धर्मप्रकारकत्वनिष्ठप्रकारतानिरूपितत्वे सति सविशेष्यकत्वनिष्ठप्रकारतानिरूपिता या स्वाश्रयज्ञाननिष्ठा विशेष्यता तन्निरूपकग्रहजनकसामग्रीत्यादिरीत्या निवेशे घटज्ञानं गुण इति वाक्यजन्यबोधस्य तादृशग्रहानन्तर्गतत्वान्नोक्तबाधसम्भव इत्यतो घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यनुधावनं कृतमित्याशयेनाह तथापीति। उक्तग्रहपर्यन्तानुधावनमिति = घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति ज्ञानपर्यन्तानुधावनमित्यर्थः। सत्यन्तनिवेशेनैव घटज्ञानं गुण इत्यादिकमादाय बाधवारणसम्भवे निरूपितत्वान्तं व्यर्थमिति वाच्यम्, तथा सति घटत्वप्रकारकं ज्ञानम् इत्यादिकमादाय बाधस्य दुर्वारत्वात्।

इदं घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादिबोधमादाय प्रसक्तस्य बाधस्य परिहारमाशङ्कते दीधितौ अथेति। विशेष्ये = घटे, घटत्ववतीति यावत्। सप्तम्यर्थो विशेष्यकत्वं तस्य ज्ञानेऽन्वयः। तत्प्रकारकत्वप्रकारतयेति=घटत्वप्रकारकत्वप्रकारतयेत्यर्थः। गादाधर्यां विशेष्यांशे इति=घटांशे इत्यर्थः। यदिति प्रकारकत्वमित्यनेनान्वितम्। प्रकृतप्रामाण्यघटकप्रकारप्रकारकत्वमिति। प्रकृतं यत् प्रामाण्यं घटत्ववति घटत्वप्रकारकज्ञानत्वरूपम्, तद्घटको यःप्रकारस्तत्प्रकारकत्वमित्यर्थः। तथा च पुरोवर्त्तिनिष्ठविशेष्यतानिरूपिता या प्रकृतप्रामाण्यघटकप्रकारनिष्ठप्रकारता तदाश्रयप्रकारकत्वमिति पर्यवसितोऽर्थः। तेन प्रकारेणेति। विशेष्यांशे, प्रकृतप्रामाण्यघटकप्रकारप्रकारकत्वेन रूपेणेत्यर्थः। साध्ये प्रवेश्यमिति। तथा च पुरोवर्त्तिनिष्ठविशेष्यतानिरूपिता या प्रकृतप्रामाण्यघटकप्रकारनिष्ठप्रकारता तदाश्रयप्रकारकत्वनिष्ठप्रकारतानिरूपितस्वाश्रयज्ञाननिष्ठविशेष्यताशालिग्रहजनकसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यम्पर्यवसितम्। एवञ्च घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादिवाक्यजन्यशाब्दबोधस्य तादृशग्रहरूपत्वाभावेन यावद्ग्रहान्तर्गतत्वाभावान्न बाधः, तादृशशाब्दबोधस्य घटे प्रकृतप्रामाण्यघटकघटत्वप्रकारकत्वप्रकारकस्वाश्रयज्ञानग्रहरूपत्वाभावादिति भावः।

अत्रेदं चिन्त्यते उक्तरीत्या घटे घटत्वप्रकारकं ज्ञानमितिज्ञानस्यैव ग्रहणे सिद्धसाधनापत्तिः, घटत्वादिरूपेण घटविशेष्यकत्वघटत्वादिप्रकारकज्ञानत्वावगाहिज्ञानस्यैव प्रामाण्यग्रहत्वात्। तादृशग्रहजनकसामग्र्या नैयायिकमते प्रामाण्यग्रहात्। यद्यपि घटविशेष्यकत्वे सति घटत्वप्रकारकत्वमात्रं न प्रामाण्यं पटे घटत्वप्रकारकसमूहालम्बनभ्रमसाधारणत्वात्

( दी० ) पुरोवर्त्तिनि घटत्वप्रकारकं ज्ञानमिति ज्ञानेन च प्रामाण्यं गृह्यत एव । तत्र तस्य प्रकारत्वं तत्र भासमानवैशिष्ट्यप्रतियोगित्वम् ।

---

( गा० ) ताघटकत्वेनावगाहनेन प्रामाण्यग्रहात् न वाध इत्याह *पुरोवर्त्तिनीति* । उपदर्शितज्ञानस्य पुरोवर्त्तिनिष्ठघटत्वादिवैशिष्ट्यावगाहितां स्पष्टयितुम् प्रकारतापदार्थं विवृणोति *तत्र तस्येति* । *तत्र भासमानेति* । भासमानं यत् तन्निष्ठं वैशिष्ट्यं तत्प्रतियोगित्वमर्थः अत्र वैशिष्ट्येन तत्रेत्यस्य सम्बन्धाभिमानेनाभिमतः । वैशिष्ट्ये भासमानत्वविशेषणात् पुरुष इत्यादिज्ञाने स्वरूपसत्पुरुषादिनिष्ठवैशिष्ट्यप्रतियोगित्वमादाय न दण्डादेः प्रकारता ।

तत्पदार्थेऽपि भासमानत्वं निवेश्यम्, अन्यथा घटो द्रव्यमित्यादौ घटादाविव पटादावपि द्रव्यत्वादेः प्रकारत्वापत्तेः । प्रतियोगित्वमपि भासमानत्वेन विशेष्यम्, अन्यथा दण्डपुरुषसंयोग इत्यादौ दण्डादेः प्रकारत्वापत्तेः ।

नचैवं वैशिष्ट्ये भासमानत्वरूपविशेषणस्योक्तव्यावृत्त्यसंगत्या तद्वैयर्थ्यमिति वाच्यम्, प्रतियोगी दण्डःपुरुषश्चे ( भासमानवैशिष्ट्यप्रतियोगित्वमित्यत्र वैशिष्ट्ये तन्निष्ठत्वं भासमानत्वञ्चाभिप्रेतम् ) त्यादौ दण्डादेः प्रकारतावारणस्य आपाततः तत्प्रयोजनत्वात् ।

---

(प्रभा) किन्तु घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वमेव प्रामाण्यं तस्य च साध्याघटकत्वात् कथं सिद्धसाधनम् । ज्ञाने घटत्ववद्विशेष्यकत्वघटत्वप्रकारकत्वयोर्भानेऽपि तयोः परस्परमवच्छेद्यावच्छेदकभावभानानभ्युपगमात् । तथापि इदं ज्ञानं घटविशेष्यकं घटत्वप्रकारकं चेति शाब्दबोधमादाय वाधवारणाय घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वस्यैव निवेश्यतया सिद्धसाधनं दुर्वारमेव नहि तादृश्यपि सामग्री प्रामाण्यग्रहं न जनयतीति नैयायिकैः स्वीकर्त्तुं शक्यते ।

एवमपि = विशेष्यांशे प्रकृतप्रामाण्यघटकप्रकारकप्रकारकत्वेन ज्ञानग्राहकत्वनिवेशेऽपि । उक्तप्रकारेणेति = पुरोवर्त्तिविशेष्यांशे यत्प्रकृतप्रामाण्यघटकघटत्वप्रकारप्रकारकत्वेनेत्यर्थः । ज्ञानावगाहिनः = ज्ञानग्रहस्येत्यर्थः । तथाच पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमिति वाक्यजशाब्दबोधस्य विशेष्यीभूतपुरोवर्त्त्यंशे प्रकृतप्रामाण्यघटकघटत्वप्रकारकत्वप्रकारकज्ञानविशेष्यकग्रहरूपत्वात्तादृशयावद्ग्रहान्तर्गततया वाध इति भावः । दीधितौ तत्रेति=घटे इत्यर्थः । तस्य = घटत्वस्य । तत्र भासमानेति=पुरोवर्त्तिनि भासमानेत्यर्थः । स्वरूपसदिति = अज्ञायमानेत्यर्थः । तत्पदार्थेऽपि = तत्रेतिप्रकृतिभूततत्पदार्थे इत्यर्थः । दण्डपुरुषसंयोग इति । अत्र समूहालम्बनज्ञाने न कस्यचित्कस्य चिद् वैशिष्ट्यमितिभावः । एवमिति = प्रतियोगित्वे भासमानत्वविशेषणोपादाने । उक्तव्यावृत्त्यसङ्गत्येति = पुरुष इतिज्ञाने दण्डादेः प्रकारत्वव्यावृत्त्यसङ्गत्येत्यर्थः । प्रतियोगित्वे

( दी० ) तच्च तत्र वैशिष्ट्यग्राहे दुर्ग्रहमिति ।

---

( गा० ) यद्यपि एवमपि संयोगप्रतियोगी दण्डः पुरुषश्चेत्यादौ दण्डादेः प्रकारत्वं दुर्वारम्, तथापि स्वविषयतद्धर्मिनिष्ठं यत् संसर्गविधया स्वविषयीभूतं वैशिष्ट्यं तदीयसंसर्गविधया स्वविषयो यत् तदीयप्रतियोगित्वं तदेव स्वीयं तद्धर्म्यंशे प्रकारत्वमिति विवक्षया न दोषः । प्रतियोगितासम्बन्धेन पुरुषादिनिष्ठ-संयोगादिप्रकारकदण्डादिविशेष्यकज्ञाने दण्डादेः प्रकारतावारणाय वैशिष्ट्यस्य संसर्गताख्यविषयताविशेषनिवेशः ।

स्वनिष्ठसंयोगादिप्रतियोगित्वसम्बन्धेन दण्डादौ पुरुषादिप्रकारके पुरुषे दण्ड इत्यादिज्ञाने दण्डादेः प्रकारतावारणाय प्रतियोगित्वस्यापि संसर्गे संसर्गविधया विषयत्वनिवेशनम् । उक्तपरम्परासम्बन्धावगाहिज्ञाने संसर्गतया भासमानवैशिष्ट्यस्य सम्बन्धतया न प्रतियोगित्वभानमिति नातिप्रसङ्गः । संसर्गीयप्रतियोगित्वानुयोगित्वयोरपि विशिष्टधीविषयत्वमिति मतेनेदम् । एवं टीकाकारानुमतभ्रमे विशेष्यानुयोगिकविशेषणप्रतियोगिकालीकवैशिष्ट्यभान-मवलम्ब्येदम् । अन्यथा भ्रमप्रकारासंग्रहात् । तच्चेति । तादृशप्रकारत्वं चेत्यर्थः ।

---

(प्रभा) भासमानत्वविशेषणेनैव वारणादिति भावः । एवमपि = वैशिष्ट्ये भासमानत्वविशे-षणोपादानेऽपीत्यर्थः । स्वविषयेति = स्वं दण्डी पुरुष इति ज्ञानं तद्विशेष्यीभूतो यो धर्मो तन्निष्ठं यद् वैशिष्ट्यमित्यनेनान्वयः । संसर्गविधयेति = संसर्गतयेत्यर्थः । तदीयेति = वैशिष्ट्यीयेत्यर्थः। स्वीयम्=ज्ञानीयम्। पुरुषादिविशेष्यकज्ञाने इति=प्रतियोगितासम्बन्धेन पुरुषसंयोगवान् दण्ड इति ज्ञाने इत्यर्थः । न प्रतियोगित्वभानमिति । अपितु पुरुषसंसर्ग-त्वेन भानमितिभावः । उक्तपरम्परासम्बन्धेनावगाहिज्ञाने=स्वनिष्ठसंयोगादिप्रतियोगिता-सम्बन्धेन पुरुषे दण्ड इत्यादिज्ञाने इत्यर्थः । नातिप्रसङ्गः = न दण्डादेः प्रकारत्वापत्तिः । मतेनेदमिति । अन्यथा कथमपि भासमानवैशिष्ट्यप्रतियोगित्वं न सिद्ध्येत् । प्रतियोगित्वे भासमानत्वविशेषणस्य सत्त्वात् प्रतियोगित्वस्य ज्ञाने भानानङ्गीकारमते तस्य च भास-मानत्वाभावादिति भावः । भ्रमप्रकारासंग्रहादिति । ह्रदो वह्निमान् इदं रजतम् इदं ज्ञानमप्रमा इत्यादौ यः प्रकारस्तस्य प्रकारत्वानापत्तेः ।

नच संयोगप्रतियोगी दण्डः पुरुषश्चेत्याकारकज्ञाने दण्डादेः प्रकारत्वापत्तिः भासमान-वैशिष्ट्यप्रतियोगित्वस्य भासमानतया तस्य दण्डे सत्त्वादिति वाच्यम्, तज्ज्ञानविशिष्टप्रति-योगित्वं तज्ज्ञानप्रकारत्वम् प्रतियोगित्वे तज्ज्ञानवैशिष्ट्यं स्वनिरूपितविषयतावत्त्व-स्वविशिष्ट-संसर्गत्वाभिन्नवैशिष्ट्यनिष्ठविषयतानिरूपितसंसर्गत्वाभिन्नविषयतावत्त्वोभयसम्बन्धेन । स्ववै-शिष्ट्यं वैशिष्ट्यविषयतायां स्वनिरूपितत्वस्वविषयीभूतधर्मिवृत्तिवृत्तित्वोभयसम्बन्धेनेत्यस्य विवक्षणीयत्वात् । अत एव संयोगप्रतियोगी दण्डः पुरुषश्चेत्याकारकज्ञानीयसंयोगादि-विषयतायाः संसर्गतानात्मकत्वेन तादृशज्ञानीयधर्मिवृत्तिवृत्तित्वाभावेन च दण्डादेर्नोक्त-ज्ञानप्रकारतापत्तिः प्रतियोगितासम्बन्धेन पुरुषनिष्ठसंयोगित्वस्य संसर्गतया भानात्तादृश-

(गा०) वैशिष्ट्याग्रहे = धर्म्युपरागेण तद्धर्मिप्रतियोगित्वोपरागेण च वैशिष्ट्याज्ञान इत्यर्थः। ईदृशप्रकारताघटितस्य तदंशे तत्प्रकारकत्वस्य तन्निष्ठवैशिष्ट्यनिरूपिततत्तद्धर्मिनिष्ठप्रतियोगित्वावगाहितारूपस्य भाने तद्घटकतया तद्धर्मिनिष्ठप्रकारवैशिष्ट्यभानमावश्यकमितिप्रामाण्यभाने न किंचिदवशिष्यत इति भावः।

यद्यपि एवं प्रामाण्यघटकसकलपदार्थभानेऽपि विलक्षणविशेषणविशेष्यभावापन्नविशेष्यप्रकारादिरूपपदार्थघटितं तद्वति तत्प्रकारकत्वरूपविशिष्टप्रामाण्यं न भातं, एवं भ्रमे विशेष्यानुयोगिकालीकवैशिष्ट्यावगाहितास्वीकारे तत्साधारण्यवारणाय संसर्गे सत्त्वमधिकं प्रामाण्यशरीरे अवश्यमेव निवे-

---

(प्रभा) प्रतियोगित्वमादाय दण्डादेः प्रकारतावारणाय वैशिष्ट्यनिष्ठविषयतायाः सम्बन्धमध्ये संसर्गत्वाभिन्नत्वेन निवेशः। स्वनिष्ठसंयोगप्रतियोगित्वसम्बन्धेन पुरुषे दण्ड इत्याकारकज्ञाने दण्डादेः प्रकारत्वं स्यात् पुरुषसंयोगप्रतियोगित्वस्य दण्डे सत्त्वादतो धर्मिनिष्ठसंसर्गत्वेन प्रतियोगित्वविषयतायाः पूर्वोक्तसम्बन्धमध्ये निवेशः। उक्तस्थले तु धर्मिनिष्ठसम्बन्धे प्रतियोगित्वादेस्संसर्गत्वान्न दोषः। धर्म्युपरागेणेति। उपरागः सम्बन्धः। वैशिष्ट्ययाज्ञाने इति। घटादिरूपधर्म्यनुयोगिकत्वविशिष्टघटत्वादिरूपतत्तद्धर्मप्रतियोगिकत्वविशिष्टसंयोगादिसम्बन्धाज्ञाने इत्यर्थः। ईदृशप्रकारताघटितस्येति। पुरोवर्त्तिनि भासमानवैशिष्ट्यप्रतियोगित्वघटितस्येत्यर्थः। तद्धर्म्यनुयोगिकसम्बन्धनिरूपिततत्तद्धर्मनिष्ठप्रतियोगित्वरूपप्रकारताघटितस्येति यावत्। तदंशे = धर्म्यंशे, घटादौ इति यावत्। तत्प्रकारकत्वस्येति=घटत्वप्रकारकत्वस्येत्यर्थः। तद्घटकतयेति=तादृशस्य तदंशे तत्प्रकारकत्वस्य घटकतयेत्यर्थः। तद्धर्मिनिष्ठप्रकारवैशिष्ट्यभानमिति। पुरोवर्त्तिरूपधर्मिनिष्ठं यत् प्रकारीभूतघटत्ववैशिष्ट्यं तद्भानमेवेत्यर्थः। एवंच पुरोवर्त्तिनि प्रकारवैशिष्ट्यभानमेव प्रमात्वभानम्। तथा च पुरोवर्त्तिनि घटत्वादिप्रकारकं ज्ञानमिति वाक्यजशाब्दबोधस्य यावदन्तर्गतत्वेऽपि ततःप्रामाण्यग्रहान्न बाध इति भावः।

एवमिति = पूर्वोक्तरीत्येत्यर्थः। विलक्षणेति = त्वदुक्तपुरोवर्त्तिरूपधर्म्यनुयोगिकसंसर्गप्रतियोगित्वापेक्षया भिन्नेत्यर्थः। तद्वति तत्प्रकारकत्वरूपेति=तद्वद्विशेष्यकत्वावच्छिन्नत्वविशिष्टतत्प्रकारकत्वज्ञानत्वरूपेत्यर्थः। ननु न तावदेतादृशप्रमात्वमङ्गीक्रियतेऽस्माभिः किन्तु तद्धर्म्यनुयोगिकसंसर्गनिरूपिततद्धर्मनिष्ठप्रतियोगित्वरूपमेव तच्च प्रमात्वम्भातमेवेति नानुपपत्तिरित्यत आह एवमिति। त्वदुक्तप्रमात्वस्वीकारे, बाधवारणासम्भव इति योजना। भ्रमे = इदं रजतमित्यादौ। विशेष्यानुयोगिकालीकवैशिष्ट्यावगाहितास्वीकारे = इदन्त्वावच्छिन्नानुयोगिताकत्वविशिष्टसमवायादिसंसर्गप्रतियोगित्वावगाहितास्वीकारे इत्यर्थः। तत्साधारण्यवारणाय = भ्रमसाधारण्यवारणायेत्यर्थः। त्वदुक्तप्रमात्वस्येति शेषः।

संसर्गे सत्त्वमधिकमित्यादि = तद्धर्म्यनुयोगिको यस्सत्त्ववत्संसर्गस्तत्प्रतियोगित्वावगाहित्वम्प्रमात्वं वाच्यमित्यर्थः।

(गा०) शनीयम्। तथा च पुरोवर्त्तिनि घटत्वप्रकारकमिदमित्यादिज्ञाने तदनवगाहनाद् वाधवारणासम्भवः।

एतेन विशेष्यनिष्ठं यद् वैशिष्ट्यं तद्धर्मनिष्ठप्रतियोगितावगाहितारूपप्रामाण्यमेव तत्प्रकारकप्रवृत्त्यौपयिकम्, तादृशस्यैव पक्षतेत्युक्तावपि न प्रतीकारः।

एवं यदि धर्मिणि तद्वैशिष्ट्यावगाहित्वं तत्प्रमात्वं तच्च विशेष्यांशे तत्प्रकारकत्वशरीरान्तर्भूतं तदा पर्यवसितम्, प्रामाण्यस्य स्वतोग्राह्यत्वविवादेन तादृशस्य तद्वति तत्प्रकारकत्वस्य ग्राहकसामग्र्या न्यायमतेऽपि नियमतः प्रामाण्यग्रहात्, तथापि इदन्त्वादिना भासमानविशेष्यांशे घटत्वादिप्रकारकत्वं तत्प्रमात्वम् न्यायमतेऽपि अनुव्यवसायेनावश्यं गृह्यते।

---

(प्रभा) एतेनेति = संसर्गे सत्त्वनिवेशेन वाधवारणासम्भवेनेत्यर्थः। न प्रतीकार इत्यनेनान्वयः। विशेष्यनिष्ठमिति = विशेष्यीभूतघटपटादिपुरोवर्त्तिनिष्ठमित्यर्थः। यद्वैशिष्ट्यमिति=समवायादिरूपसंसर्ग इत्यर्थः। तदीयेति = तादृशसंसर्गनिरूपितेत्यर्थः। तद्धर्मनिष्ठप्रतियोगित्वेऽन्वयः। तद्धर्मनिष्ठेति = घटत्वादिनिष्ठेत्यर्थः। प्रामाण्यमेवेति। एवकारेण घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वरूपप्रामाण्यव्यवच्छेदः। तत्प्रकारकप्रवृत्त्यौपयिकम् = घटत्वप्रकारकप्रवृत्तिप्रयोजकमित्यर्थः। तादृशप्रवृत्तिजनको यःप्रामाण्यग्रहस्तद्विषय इत्यर्थः। तादृशस्यैव = तद्धर्म्यनुयोगिकसंसर्गनिरूपिततद्धर्मनिष्ठप्रतियोगित्वावगाहित्वरूपप्रामाण्यस्यैवेत्यर्थः। एवकारेण पूर्वोक्तप्रमात्वव्यवच्छेदः। अयं भावः, प्रामाण्यग्रहस्यैव प्रवर्त्तकतया तस्यैव स्वतस्त्वपरतस्त्वविवादास्पदतया यादृशप्रमात्वज्ञानम्प्रवृत्तिम्प्रति कारणन्तादृशं प्रमात्वमेव पक्षीकृत्य स्वतोग्राह्यत्वं साध्यमेवंचास्मन्मतसिद्धप्रमात्वस्यैव प्रवृत्तिजनकतया तस्यैव पक्षत्वम्। तथाच तस्य तादृशशाब्दबोधेन निश्चयान्नास्ति वाध इति निरस्तमितिभावः।

ननु सत्त्वस्योपलक्षणत्वस्वीकारे सत्त्वभानमावश्यकमिति नायं दोषः, अतो दोषान्तरमाह एवं यदीत्यादिना। यदीत्यस्य तत्प्रमात्वमित्यनेन सम्बन्धः। धर्मिणि तद्वैशिष्ट्यावगाहित्वमिति = धर्म्यनुयोगिकसंसर्गप्रतियोगित्वावगाहित्वमित्यर्थः। तत्प्रमात्वमिति = प्रवृत्तिप्रयोजकं प्रमात्वम्। तच्च = धर्म्यनुयोगिकसंसर्गप्रतियोगित्वावगाहित्वरूपप्रमात्वं चेत्यर्थः। विशेष्यांशे घटे तत्प्रकारकत्वशरीरान्तर्भूतमिति। तत्र भासमानवैशिष्ट्यप्रतियोगित्वस्यैव प्रकारत्वरूपतया घटांशे घटत्वप्रकारकत्वशरीरान्तर्गतमित्यर्थः। तदेति—यदि धर्म्यनुयोगिकसंसर्गप्रतियोगित्वरूपमेव प्रवृत्तिप्रयोजकं प्रमात्वं स्यात् तर्हि तादृश प्रमात्वस्य तद्वति तत्प्रकारकत्वरूपप्रमात्वान्तर्गततयेत्यर्थः। पर्यवसितमिति = अलमित्यर्थः। स्वतोग्राह्यत्वविवादेनेति। पर्यवसितमिति पूर्वेण सम्बन्धः। स्वतोग्राह्यत्वविवादस्य पर्यवसानमेव (समाप्ति रेव) स्यादितिभावः। अत्र हेतुमाह नियमतः प्रामाण्यग्रहादिति। तथा च यदि धर्म्यनुयोगिकसंसर्गप्रतियोगित्वावगाहित्वरूपमेव प्रमात्वं प्रवृत्तिप्रयोजकतया

( दी० ) तत्त्व ! तत्र भासमानवैशिष्ट्येत्यत्र तत्रेत्यस्य भासमानेनैव सम्बन्धात्, नतु वैशिष्ट्येनापि। अन्यथा तदभाववति तत्प्रकारकत्वमप्रामाण्यं न ज्ञायेत, तदभावग्रहे तद्वैशिष्ट्यस्य दुर्ग्रहत्वात्, एवमेकत्र विरुद्धोभयप्रकारकत्वरूपं संशयत्वमपि ।

( गा० ) तज्ज्ञानं चेदुक्तयुक्त्या प्रामाण्यभाननियतं तदा नैयायिकानाम् प्रामाण्यग्रहस्य स्वतस्त्वखण्डनाय विचारारम्भणं महासाहसिकतेति मन्वानो विशेष्ये तत्प्रकारकत्वस्य शरीरे प्रामाण्यान्तर्भावनिर्वाहकं तत्रेत्यस्य संसर्गान्वयित्वमसहमानस्तदेव दूषयति *तन्नेत्यादिना*। *भानेनैव*। भानं विषयता तथाच तद्धर्मनिरूपिता या वैशिष्ट्यस्य संसर्गतेत्येवंरीत्यैव निवेशात् वैशिष्ट्यांशे तन्निष्ठत्वं न तदंशे तत्प्रकारकत्वघटकमिति तज्ज्ञानेऽपि प्रामाण्यघटकस्य वैशिष्ट्ये धर्मिनिष्ठत्वस्याभानात् नोक्तज्ञानानाम् प्रामाण्यविषयकत्वमिति भावः। *अन्यथा*=तत्र तत्प्रकारकत्वग्रहे तत्र तद्वैशिष्ट्यावश्यम्भाने। न *ज्ञायेत*=अनाहार्यनिश्चयेन न कदापि विषयीक्रियेत। *तदभावेति*=तदभाववत्तया गृह्यमाणे तद्वैशिष्ट्यस्यानाहार्यज्ञानागोचरत्वादित्यर्थः। निर्वह्निर्वह्निमानित्यादिवद् वह्न्यभाववति वह्निसम्बन्ध इत्यादिज्ञानानामाहार्यत्वनियमादिति भावः।

(प्रभा) स्वतोग्राह्यं तर्हि तादृशप्रमात्वस्य विशेष्ये तत्प्रकारकत्वशरीरान्तर्गततया न्यायमतेऽपि नियमतो ग्रहे नैयायिकमीमांसकयोर्विवाद एव न स्यादितिभावः।

महासाहसिकतेति=अनुचितमित्यर्थः। स्वतोग्राह्यत्वाभावरूपनैयायिकसिद्धान्त एव व्याहन्येत इति भावः। तस्य तद्वति तत्प्रकारकत्वशरीरान्तर्वर्त्तितया स्वतोग्राह्यत्वाभावरूपनैयायिकसिद्धान्तो व्याहन्येतेति, अतो धर्मिनिष्ठत्वघटितस्य तस्य न प्रमात्वरूपताऽपितु संसर्गतानिष्ठ तद्धर्मिनिरूपितत्वघटितस्यैव, नोक्तज्ञानानामुक्तप्रामाण्यावगाहित्वमिति समुदितार्थः।

अनाहार्य्यज्ञानागोचरत्वादिति। अयंभावः, यथा स्वविरोधिधर्मधर्मितावच्छेदकक-स्वप्रकारकं ज्ञानमाहार्य्यम्, निर्वह्निर्वह्निमानित्यादिकम् तथा स्वाभाववत्तया गृह्यमाणनिष्ठ-स्वसम्बन्धावगाहिज्ञानमप्याहार्य्यम्, यथा निर्वह्नौ वह्निरिति। एवञ्च तद्धर्मिनिरूपितसंसर्गता-प्रतियोगित्वस्य प्रकारत्वे तादृशप्रतियोगित्वावगाहित्वस्य प्रमात्वपक्षे इदंज्ञानम्भ्रम इत्यप्रमात्वप्रकारकज्ञानस्य तदभाववति तत्प्रकारकत्वस्य नाहार्यत्वम्। एवञ्चेदं ज्ञानंभ्रम इति ज्ञान ज्ञानस्य स्वविषयविषयकत्वनियमेन रजतादिरूपधर्मिनिरूपितसंसर्गताप्रतियोगित्वरूपप्रकारत्वावगाहनेऽपि स्वाभाववत्तया गृह्यमाणनिष्ठस्वैशिष्ट्यानवगाहनात् तत्प्रकारकत्वघटकप्रकारतायाम् प्रविष्टो यो हि पदार्थः तस्यैतादृशानुव्यवसायेन भानात्। प्रविष्टश्च प्रकारतायां तद्धर्मिनिरूपितसंसर्गप्रतियोगित्वमेवेति तादृशज्ञाने तद्भानेऽपि धर्मिनिष्ठवैशिष्ट्या-

( दी० ) वस्तुतस्तत्प्रकारत्वादिकं स्वरूपसम्बन्धविशेष इति वक्ष्यामः।

अत्र केचित्-अस्ति कस्यां चित् सामग्र्यां विषयग्रहनियमः कस्यांचिन्नेति सर्वजनसिद्धम्।

---

( गा० ) *संशयत्वमपि* न ज्ञायेत, न निश्चयेनावगाह्येतेत्यन्वयः। एकधर्मिणि विरुद्धोभयप्रकारकत्वस्य भवन्मते एकधर्मिणि विरुद्धोभयवैशिष्ट्यघटितत्वान्निश्चयेन च विरुद्धोभयवैशिष्ट्यस्य एकधर्मिनिष्ठतयानवगाहनात् एकधर्मिणि तद्वैशिष्ट्यग्रहे तद्विरुद्धवैशिष्ट्यावगाहिनिश्चयस्य विरोधित्वादिति भावः। एवं तद्धर्मिनिरूपितत्वस्य वैशिष्ट्यविषयतायामनिवेशे घटो द्रव्यं रूपवान् पट इत्यादिज्ञाने तद्विषयपटाद्यंशे द्रव्यत्वादेःप्रकारत्वं दुर्वारमित्यपि बोध्यम्।

सम्बन्धविधया प्रतियोगित्वानुयोगित्वयोर्विशिष्टबुद्धौ विलक्षणभानकल्पनामपेक्ष्य प्रकारत्वस्य विलक्षणस्वरूपताभ्युपगम एवोचित इत्याशयेनाह *वस्तुतइति*। प्रकारत्वादिकमित्यादिना विशेष्यत्वपरिग्रहः। *स्वरूपेति*। प्रकारविशेष्ययोर्ज्ञानस्य स्वरूपानतिरिक्तः सम्बन्धविशेष इत्यर्थः।

उक्तपूर्वपक्षे मिश्रोक्तं समाधानं दूषयितुमुपन्यस्यति *अत्रेति*। *कस्यांचित् सामग्र्याम्* = अनुव्यवसायादिसामग्र्याम्। *विषयग्रहनियमः* = ज्ञानग्रहे तद्विशेषणतया विषयस्यावश्यंग्रहः। *कस्यांचित्* = शाब्दबोधादिसामग्र्याम्। न विषयग्रहनियम इत्यनुषज्यते। ज्ञानपदादितो विषयीभूतघटाद्यवि-

---

(प्रभा) भानेन नास्ति स्वाभाववत्तया गृह्यमाणनिष्ठस्वसम्बन्धभानं येनाहार्यता सम्भाव्येत्। वैशिष्ट्ये धर्मिनिष्ठसंसर्गप्रतियोगित्वस्य प्रकारतास्वीकर्तृमते तु इदं ज्ञानमप्रमेति ज्ञाने तत्प्रकारकत्वमाने तद्घटकतया धर्मिनिष्ठतद्वैशिष्ट्यभानादाहार्यापत्तिः स्यादिति भावः।

उक्तपूर्वपक्षे इति = घटत्वप्रकारकं ज्ञानं सविशेष्यकमितिवाक्यजशाब्दबोधमादाय बाधो दुर्वार इति पूर्वपक्षे इत्यर्थः। मिश्रोक्तम्=पक्षधरमिश्रोक्तमित्यर्थः। या सामग्री.........ज्ञानमपि न गृह्णातीति दीधितिः। तथाच या सामग्री विषयमविषयीकुर्वती ज्ञानमपि न गृह्णाति स्वाश्रयज्ञानविषयकग्रहजनकताहशसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यम्पर्यवसितम्। एवंच घटत्वप्रकारकं ज्ञानं सविशेष्यकम् इत्यादिशाब्दसामग्र्याः विषयमविषयीकुर्वत्या ज्ञानग्रहजनकतया साध्यघटकत्वासम्भवेन न ताहशसामग्रीमादाय बाधभीरिति तात्पर्यम्।

ननु या सामग्री विषयं विषयीकुर्वती ज्ञानं गृह्णातीत्येव लाघवादुच्यतां किन्नञ्द्वयोपादानेनेति चेन्न ? घटत्वप्रकारकं ज्ञानं सविशेष्यकमितिशाब्दसामग्र्यास्तथात्वेन पूर्वोक्तबाधदोषस्य तादवस्थ्यापत्तेः। तद्विशेषणतयेति = व्यवसायात्मकप्रथमज्ञानविशेष्यतयेत्यर्थः। विषयग्रहनियमः=विषयस्य घटादेर्ग्रहनियमः। विषयनिरूप्यंहि ज्ञानमतो

( दी० ) तथा च या सामग्री विषयमविषयीकुर्वती ज्ञानमपि न गृह्णाति,

---

(गा०) शेषितस्यापि तज्ज्ञानस्य शाब्दादिज्ञानोत्पत्तेरितिभावः। *या सामग्रीति*= स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकनिखिलकारणम्। *विषयमिति*= विषयितासम्बन्धेन किञ्चिदनवच्छिन्नविषयिताशालिग्रहाजनकमित्यर्थः।

एतेन यथाश्रुते ग्राह्यज्ञानस्यापि क्वचिज् ज्ञाने विषयतया सामान्यतो विषयाविषयकज्ञानग्रहाप्रसिद्धिः। ग्राह्यज्ञानविषयाविषयकज्ञानग्रहविवक्षणेऽपि

---

(प्रभा) ज्ञानवित्तिवेद्यो विषय इति सिद्धान्तात्। **स्वाश्रयविषयक...निखिलकारण-मिति**। प्रमात्वाश्रयविषयको यो ग्रहस्तदुत्पत्तिप्रयोजिका या सामग्री तद्घटकीभूतं यन्निखिल-कारणमित्यर्थः। **विषयितासम्बन्धेन...ग्रहाजनकमिति**=विषयित्वसम्बन्धावच्छिन्ना या किञ्चिन्निष्ठावच्छेदकता तदनिरूपकज्ञाननिष्ठविषयताशालिग्रहाजनकमित्यर्थः। तथाच विषयित्व-सम्बन्धावच्छिन्नकिञ्चिन्निष्ठावच्छेदकत्वानिरूपकज्ञाननिष्ठविषयताशालिग्रहाजनकस्वाश्रयविषय-कग्रहोत्पत्तिप्रयोजकयादृशसामग्रीघटकनिखिलकारणं तादृशसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यम्पर्यवसितम्। इत्थञ्च घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादिशाब्दसा-मग्र्याः निखिलकारणमध्ये ज्ञानोपस्थितिरूपमप्येकं कारणम्प्रविष्टन्तच्च विषयमविषयीकुर्वदपि ज्ञानग्रहजनकमिति तद्घटितशाब्दसामग्री न साध्यघटकीभूतेति न तामादाय बाधावसर इति। अनुव्यवसायसामग्रीघटकसकलकारणं हि विषयमविषयीकुर्वदेव ज्ञानग्रहजनकमिति तत्सामग्रीमादाय समन्वयोपि बोध्य इति। ज्ञाननिष्ठविषयताया ज्ञानत्वावच्छिन्नत्वेन किञ्चिद-नवच्छिन्नज्ञानविषयताशालिग्रहाप्रसिद्धया साध्याप्रसिद्धिरिति तद्वारणाय विषयितासम्बन्धे-नेत्युक्तम्।

विषयमविषयीकुर्वद्ज्ञानमपि न गृह्णातीति यथाश्रुतशब्दलभ्यस्य विषयाविषयकज्ञानग्रहा-जनकत्वार्थकस्य परित्यागे बीजमुपदर्शयति **एतेनेति**। विषयितासम्बन्धेन किञ्चिदनवच्छिन्न-ज्ञाननिष्ठविषयताशालिग्रहाजनकत्वमित्यर्थकरणेनेत्यर्थः। **यथाश्रुते** विषयाविषयकज्ञान-ग्रहाजनकत्वरूपार्थस्वीकारे। **ग्राह्यज्ञानस्यापि**=ग्राह्यं यज्ज्ञानन्तस्यापीत्यर्थः। **क्वचिज्ज्ञाने**=ज्ञानविषयकज्ञाने इत्यर्थः। ज्ञानविषयकशाब्दबोधादाविति यावत्। **विषयाविषयकज्ञान-ग्रहाप्रसिद्धिरिति**=विषयोऽविषयो यस्य एतादृशो यो ज्ञानग्रहस्तदप्रसिद्धिः, ज्ञानग्रहे विषयी-भूतस्य ज्ञानस्यापि विषयत्वेन ज्ञानरूपविषयविषयकत्वादितिभावः। तथाच विषयाविषयक-ज्ञानग्रहाजनकं स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकनिखिलकारणं तादृशसाम-ग्रीजन्ययावद्ग्रहविषयत्वरूपं साध्यं यथाश्रुते पर्यवस्यति। एवञ्च साध्याप्रसिद्धिरूपो दोषःस्यादि-तिभावः। **ग्राह्यज्ञानविषयाविषयकेति**=ग्राह्यज्ञानस्य यो विषयो घटादिः सोऽविषयो यस्यैवम्भूतो यो ज्ञानविषयको ग्रहस्तद्विवक्षणेऽपीत्यर्थः। तथाच न साध्याप्रसिद्धिः। ग्राह्यं यज्ज्ञानं घटज्ञानं तद्विषयीभूतघटाद्यविषयकज्ञानग्रहस्य शुद्धज्ञानविषयकशाब्दबोध-स्यैव प्रसिद्धेरित्यभिमानः। **ग्राह्यज्ञानविषयाविषयकत्वविवक्षणेऽपि** अप्रसिद्धिं दर्शयति

(गा० ज्ञानस्य स्वविषयतानियमेन गुरुमते तदप्रसिद्धिरेव, तज्ज्ञानग्रहे तज्ज्ञानविषयस्य तस्यावश्यंभावात्।

तत्प्रामाण्यघटकविषयाविषयकत्वविवक्षणेऽपि मेयत्वसर्वत्वादिप्रकारक ज्ञानीयप्रामाण्यघटकतायाः केवलान्वयित्वेन तत्पक्षके दुर्वारैवाप्रसिद्धि-रित्यादिकम् परास्तम्। घटज्ञानमित्यादिशाब्दबोधादिसामग्रीघटकज्ञानपदो-पस्थित्यादेर्निरुक्तनिखलकारणान्तर्गतस्य विषयानवच्छिन्नविषयकग्रहम् प्रत्यपि जनकतया तादृशसामग्रीव्यावृत्तिः। घटपदोपस्थित्यादेर्ज्ञानभानप्रयोजकस्य

(प्रभा) ज्ञानस्येत्यादिना। गुरुमते = प्रभाकरमते इत्यर्थः। ननु भट्टमते, तेषां ग्रहस्य स्वविषयतानियमाभावेन पूर्वोक्तरीत्या प्रसिद्धेः। तथाच गुरुमते ग्राह्यज्ञानविषयो ग्राह्यज्ञान मेव तद्विषयकत्वमेव ज्ञानग्रहस्य नतु तदविषयकत्वमिति ग्राह्यज्ञानविषयाविषयकज्ञानग्रहाप्रसि-द्धया गुरुमते साध्याप्रसिद्धिर्दुर्वारैवेति भावः। तज्ज्ञानग्रहे = तज्ज्ञानविषयकशाब्दबोधे इत्यर्थः। घटज्ञानविषयकशाब्दबोधे इति यावत्। तज्ज्ञानविषयस्य = घटज्ञानविषयस्य। तस्य=घटज्ञानस्य।

तत्प्रामाण्यघटकविवक्षणेऽपि = तत्प्रामाण्यघटकीभूता ये विषया घटघट त्वादयस्तावत्सकलाविषयकत्वविवक्षणेऽपीत्यर्थः। तथाच साध्याप्रसिद्धिस्तथाहि तत्प्रामाण्यं घटत्ववति घटत्वप्रकारकज्ञानत्वं तद्घटकीभूता विषया घटघटत्वादयस्तदविषयो यो ग्रहस्तच्च विषयानुपरक्तज्ञानग्रहरूपः शाब्दबोधस्तदजनकमथच स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकानु व्यवसायादिसामग्रीघटकं निखिलं कारणं तज्जन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वात्समन्वयः। घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादिशाब्दसामग्र्यास्तु तत्प्रामाण्यघटकीभूतघटघटत्वा-द्यविषयको ज्ञानग्रहः शुद्धज्ञानविषयशाब्दबोधस्तज्जनकतया अजनकत्वाभावेन वारणं स्पष्टमिति। अत्र तत्प्रामाण्यघटकत्वं विषयत्वं च ज्ञानत्वे वर्त्तते, तादृशज्ञानत्वस्य शुद्धज्ञान-विषयकग्रहात्मकशाब्दबोधेऽपि भानमस्तीति तत्प्रामाण्यघटकविषयाविषयकग्रहाप्रसिद्धिः स्यात् यदि यावत्पदं न स्यात्तदा, किन्तु यावत्पदस्य निविष्टत्वेन प्रसिद्धिसम्भवः, ज्ञानविषयक-शाब्दबोधे ज्ञानत्वस्य भानेऽपि तत्प्रामाण्यघटकसकलपदार्थाभानात् इति। मेयत्वसर्वत्वा-दिप्रकारकघटकताया इति। मेयत्वसर्वत्वप्रकारकं यज्ज्ञानं मेयं सर्वमित्याकारकं तदीयं यन्मेयत्ववति मेयत्वप्रकारकज्ञानत्वमेवं सर्वत्ववति सर्वत्वप्रकारकज्ञानत्वं तद्घटकताया इत्यर्थः। केवलान्वयित्वेनेति। तथाचेदृशप्रामाण्यघटको यो मेयरूपो विषयस्तदविषय-कग्रहाप्रसिद्धेः, सर्वस्यैव ग्रहस्य मेयविषयकत्वात्। तत्पक्षके = तादृशप्रामाण्यपक्षके। मेयत्ववति मेयत्वप्रकारकज्ञानत्वरूपप्रामाण्यपक्षके इति यावत्। ननु यद्यद्रूपा-वच्छिन्नस्य यस्य यस्य तत्प्रामाण्यघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताश्रयाविषयक-त्वविवक्षणे प्रसिद्धिः सम्भवति इति चेन्न, घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यघटकता घटत्वावच्छिन्नस्य घटस्यास्ति नतु घटत्वस्य तस्य निरवच्छिन्नत्वात्। तथाच तादृशघटत्वा-वच्छिन्नाविषयको यो ज्ञानग्रहो घटत्वप्रकारकज्ञानवानहमित्याकारक इति तत्सामग्रीमादाय वारो दुर्वार इति व्याख्यानात्। निखिलपदनिवेशस्य प्रयोजनमाह घटोपस्थित्यादेरिति।

(गा०) च ज्ञानांशे विषयान्वयबोधजनकयोग्यताज्ञानादेरुक्तसामग्रीघटककति-पयकारणस्य विषयानवच्छिन्नज्ञानाग्राहकत्वात् निरिवलकारणोपादानम्। अनुव्यवसायादिसामग्रीघटकं च न किञ्चिदपि तादृशं कारणमस्ति यद् विषय-रूपविशेषणानवच्छिन्नं ज्ञानं गृह्णाति। व्यवसायमनस्संयुक्तसमवायादेः विषयोपरागेणैव ज्ञानादिभासकत्वनियमात्।

नचात्ममनस्संयोगादिरपि तादृशसामग्रीघटकं कारणम्, तच्च विषयानवच्छिन्नज्ञानगोचरस्मृत्यादिजनकमिति कुतस्तादृशसामग्रीसम्भव इति वाच्यम्? ज्ञानभानप्रयोजकनिरिवलकारणस्य विवक्षणीयत्वात्। आत्मादेश्च कार्यतावच्छेदककोटौ ज्ञानविषयत्वाप्रवेशेन तस्यातथात्वात्।

---

(प्रभा) अयंभावः, यादृशसामग्रीघटकं कारणं विषयितासम्बन्धेन किञ्चिदनवच्छिन्नज्ञान-निष्ठविषयताशालिग्रहाजनकं तादृशसामग्रीजन्ययावद्ग्रहविषयत्वस्य साध्यत्वे घटज्ञानशाब्द-सामग्रीवारणं न स्यात् तादृशसामग्रीघटकघटपदोपस्थितिरूपकिञ्चित्कारणस्य एवं ज्ञान-भानप्रयोजकस्य ज्ञानांशे विषयान्वयबोधजनकयोग्यताज्ञानरूपकिञ्चित्कारणस्य च विषयान-वच्छिन्नज्ञानविषयकग्रहाजनकत्वादिति भावः। तथाच निरिवलपदानुपादाने घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्याकारकशाब्दबोधस्य साध्यघटकतादृशयावद्ग्रहान्तर्गततया तज्जन्यग्रह-विषयत्वस्य प्रभात्वेऽसत्त्वाद् बाध इतिभावः। अनुव्यवसायादिसामग्रीसंग्रहं दर्शयति अनुव्यवसायादिसामग्रीत्यादिना।

एवं साध्यस्वरूपस्वीकारेऽपि अनुव्यवसायप्रयोजकसामग्र्याःसाध्यघटकतया असंग्रहेण पुनःसाध्यप्रसिद्धिमाशङ्कते नचेत्यादिना। तादृशसामग्रीघटकम् = स्वाश्रय-विषयकग्रहोत्पत्तिप्रयोजकसामग्रीघटकमित्यर्थः। तच्च = आत्ममनस्संयोगरूपतादृशसामग्री-घटककारणमित्यर्थः। विषयानवच्छिन्नेत्यादि = विषयितासम्बन्धेन विषयानवच्छिन्न यज्ज्ञानं तद्विषयकस्मृतिजनकमित्यर्थः। कुतस्तादृशसामग्रीसम्भव इति। अनुव्यवसा-यादिसामग्रीणामपि साध्यघटकतया संग्रहो न सम्भवति, अनुव्यवसायादिसामग्रीघटकनि-रिवलकारणान्तर्गतात्ममनःसंयोगादिरूपकारणस्य विषयितासंसर्गेण विषयानवच्छिन्नज्ञाननिष्ठ-विषयताशालिग्रहाजनकत्वादितिभावः। ज्ञानभानप्रयोजकेति। स्वाश्रयविषयकग्रहो-त्पत्तिप्रयोजकयादृशसामग्रीघटकज्ञानभानप्रयोजकनिरिवलकारणं विषयितासम्बन्धेन विषया-नवच्छिन्नज्ञानविषयकग्रहाजनकं तादृशसामग्रीजन्ययावद्ग्रहविषयत्वरूपसाध्यस्य विवक्षणी-यत्वादिति भावः। तथाच निरिवलकारणे ज्ञानभानप्रयोजकत्वविशेषणेनानुव्यवसायसामग्री-संग्रहस्सम्भवति, आत्ममनस्संयोगादेः ज्ञानभानप्रयोजकत्वाभावेन ज्ञानभानप्रयोजकनिरिव-लकारणपदेन तदसंग्रहात् तदतिरिक्तज्ञानभानप्रयोजकनिरिवलकारणानां विषयानवच्छिन्न-ज्ञानग्रहाजनकत्वात्।

ननु आत्ममनस्संयोगादेःकुतो न ज्ञानभानप्रयोजकत्वमित्याशंक्याह आत्मादे-श्चेति। अयमाशयः, यदिच समवायेन ज्ञानविषयकज्ञानत्वावच्छिन्नम्प्रति तादात्म्येन

(गा०) नचात्मादीनामपि गुरुमते ज्ञानभानप्रयोजकत्वमव्याहतम्, तन्मते ज्ञानोत्पादकसामग्र्या एव तत्त्वात्, आत्मादीनामपि तत्सामग्र्यन्तर्गतत्वादिति वाच्यम्? तन्मते तज्ज्ञानप्रागभावमात्रस्य तज्ज्ञानभाने प्रयोजकत्वोपगमात्, आत्मादीनामतथात्वात्। आत्मादिजन्यज्ञानान्तरे तज्जन्यज्ञानान्तराभानेन विनिगमकसम्भवात् तत्तज्ज्ञानप्रागभावस्य च विषयोपरागेणैव तत्तज्ज्ञानभासकत्वम्। मिश्रादिमतेऽनुव्यवसाय इव गुरुमते व्यवसाये विषयविशेषितस्यैव व्यवसायस्य भानात्।

---

(प्रभा) आत्मनःकारणत्वं स्यात् तदा ज्ञानविषयत्वावच्छिन्नकार्यतानिरूपितकारणताया आत्मनि सत्त्वात् ज्ञानविषयताप्रयोजकत्वमात्मनि सम्भवेत्, नच तथा, गौरवात् अपितु लाघवात् समवायेन ज्ञानत्वावच्छिन्नम्प्रति तादात्म्येन आत्मनःकारणत्वमित्येव कार्यकारणभावात्। तादृशकार्यताया घटविषयकज्ञानेऽपि सत्त्वेन तत्र ज्ञानविषयतायास्सत्त्वात् ज्ञानविषयताया आत्मत्वावच्छिन्नकारणतानिरूपितकार्यतातिरिक्तवृत्तित्वाच्च तथाऽसम्भवात्। गुरुमते ज्ञानोत्पादकसामग्रीघटकात्मादिसकलकारणनिष्ठकारणतानिरूपितकार्यतानतिरिक्तवृत्तित्वं ज्ञानविषयत्वे सम्भवति तन्मते ज्ञानस्य स्वविषयकत्वनियमेन सर्वत्र ज्ञाने ज्ञानविषयत्वस्य सत्त्वात्। एवञ्च गुरुमते तादृशकार्यतानतिरिक्तवृत्तितया ज्ञानविषयतापि तादृशकार्यतावच्छेदिकेति ज्ञानभानप्रयोजकनिखिलकारणमध्ये पुनरात्ममनस्संयोगादेरपि संग्रहेण अनुव्यवसायसामग्र्याःसाध्यघटकत्वं न सम्भवतीत्याशंकते नचेति। आदिपदात् आत्ममनस्संयोगपरिग्रहः। तत्त्वात् = ज्ञानभानप्रयोजकत्वादित्यर्थः। ज्ञानविषयतायास्तादृशकार्यतानतिरिक्तवृत्तितया तादृशकार्यतावच्छेदकत्वात्। ननु ज्ञानविषयतायास्तादृशकार्यतानतिरिक्तवृत्तित्वेऽपि ज्ञानविषयकज्ञानत्वेनात्मत्वेन कार्यकारणभावो नास्ति गौरवात् अनावश्यकत्वाच्च, किन्तु ज्ञानत्वेनात्मत्वेनैवेति कथं ज्ञानविषयतायास्तादृशकार्यतावच्छेदकत्वम्? न केवलमनतिरिक्तवृत्तित्वं कार्यतावच्छेदकताप्रयोजकमपितु अनतिरिक्तवृत्तित्वे सति तेन रूपेण कार्यतावच्छेदककोटिप्रविष्टत्वमेव। इत्थं च ज्ञानविषयतायास्तादृशकार्यतावच्छेदकत्वाभावेन गुरुमते ज्ञानविषयताप्रयोजकत्वमात्मादीनामव्याहतमिति ग्रन्थासङ्गतिरिति तु नाशङ्कनीयम्? ईदृशीं शङ्कामनालक्ष्यैवैतद्ग्रन्थोत्थानात्। अत एव एतदुत्तरकोटौ एतादृशभावपूर्वमेव समाहितम्। तन्मते = गुरुमते इत्यर्थः। तज्ज्ञानप्रागभावस्य = घटज्ञानप्रागभावस्येत्यर्थः। तज्ज्ञानभाने = घट ज्ञाननिष्ठविषयत्वे। आत्मादीनामतथात्वात् = आत्मादीनां ज्ञानविषयत्वाप्रयोजकत्वादित्यर्थः। ननु विनिगमनाविरहेण आत्मादीनामेव ज्ञानविषयताप्रयोजकत्वमस्तु इत्याशंक्य तज्ज्ञानविषयताया आत्मादिकारणतानिरूपितकार्यतातिरिक्तवृत्तित्वरूपं विनिगमकं दर्शयति आत्मादिजन्यज्ञानान्तरे इति। आत्मादिजन्यपटज्ञाने इत्यर्थः। तज्जन्यज्ञानान्तराभानेनेति = आत्मादिजन्यपटज्ञानविषयताया असत्त्वेनेत्यर्थः। तथाचात्मादिनिष्ठकारणतानिरूपितकार्यतायाःपटज्ञानेऽपि सत्त्वेन तत्र घटज्ञानविषयतायाःअसत्त्वात् कार्यत्वातिरिक्तवृत्तितया न तादृशकार्यतावच्छेदकत्वं तज्ज्ञानविषयतायां सम्भवतीति भावः।

( गा० ) अथ घटज्ञानमित्यादौ विषयोपरक्तज्ञानविषयकशाब्दबोधसामग्री-निविष्टज्ञानपदाद्युपस्थितिव्यक्त्या विषयानुपरक्तज्ञानविषयकशाब्दबोधाजननात् तादृशसामग्रीव्यावृत्तिर्दुर्घटा।

नच तथापि उपस्थितिव्यक्त्या ज्ञानशाब्दबोधहेतुभूतविषयानुपरक्तज्ञान-विषयकस्मृतेरवश्यं जननात्तद्घटितसामग्रीव्यावृत्तिसम्भव इति वाच्यम्? यादृशज्ञानपदोपस्थित्या ज्ञानस्मृतौ जन्यमानायामुद्बोधकान्तरवशात् ज्ञानांशे पूर्वानुभूतविषयवैशिष्ट्यमपि भातम्, तदुपस्थितिव्यक्तिघटितसामग्र्या उक्तरीत्याप्यवारणादिति चेन्न? ज्ञानमपि न गृह्णाति इत्यत्र स्वरूपयोग्यतारूप-ज्ञानग्राहकताया एव विवक्षितत्वात्। उक्तसामग्रीघटकज्ञानपदाद्युपस्थितिव्यक्तेश्च विषयाविषयककालान्तरीणज्ञानशाब्दबुद्धावपि स्वरूपयोग्यतया तादृश-सामग्रीवारणसम्भवात्।

---

( प्रभा ) घटज्ञानमित्यादिपूर्वोक्तशाब्दबोधमादाय बाधन्तदवस्थमाशंकते अथेति। आदिपदाद् घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादेः संग्रहः। तथाच घटज्ञानमित्याकारक-वाक्यजन्यशाब्दबोधप्रयोजकसामग्रीघटकस्य कस्यापि कारणस्य विषयानवच्छिन्नज्ञानग्रह-जनकत्वाभावेन तादृशशाब्दसामग्र्या अपि साध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेन बाधस्तदवस्थ इति भावः। विषयोपरक्तेति। विषयेण = घटेन, उपरक्तम् = विशिष्टम् घटादिविषयविषयकमिति यावत्। यज्ज्ञानम् = घटज्ञानम्, तद्विषयको यः शाब्दबोधः स च घटज्ञानमितिवाक्यजन्यस्तत्सामग्रीनिविष्टा या ज्ञानपदाद्युपस्थितिव्यक्ति-स्तयेत्यर्थः। विषयानुपरक्तेत्यादि। घटादिरूपविषयाविषयककेवलज्ञानवाचकपदघटित-ज्ञानमित्यादिवाक्यजन्यशाब्दबोधप्रयोजकसामग्रीघटकज्ञानपदाद्युपस्थितिव्यक्तेर्विषयानुपरक्त-ज्ञानविषयकशाब्दबोधे हेतुत्वेऽपि घटज्ञानमिति वाक्यजन्यशाब्दबोधसामग्रीघटककारणीभूत-ज्ञानपदाद्युपस्थितिव्यक्त्या घटानुपरक्तज्ञानविषयकशाब्दबोधाजननादित्यर्थः। तया = ज्ञानपदाद्युपस्थितिव्यक्त्येत्यर्थः। अंकुरमादाय बाधमुपस्थापयति यादृशज्ञानपदोपस्थित्येति। स्वरूपयोग्यतारूपेति=तथाच विषयितासम्बन्धेन किञ्चिदनवच्छिन्नज्ञाननिष्ठविषयिताशालिग्रहनिरूपितस्वरूपयोग्यत्वाभाववद्यादृशसामग्रीघटकनिखिलकारणं तादृशसामग्रीजन्य-यावद्ग्रहविषयत्वं साध्यम् पर्यवसितमिति न पूर्वोक्ताङ्कुरस्थले बाधः, उद्बोधकान्तराधीन-घटविषयकत्वविशिष्टज्ञानोपस्थितिजनकतादृशज्ञानपदोपस्थितिव्यक्तावपि विषयितासम्बन्धेन किञ्चिदनवच्छिन्नज्ञाननिष्ठविषयताशालिविषयाविषयकशाब्दबोधात्मकग्रहनिरूपितस्वरूपयोग्य-त्वस्यैव सत्त्वेन स्वरूपयोग्यत्वाभावविरहात् तादृसामग्र्यास्साध्याघटकत्वात्। उक्तसामग्री-घटकेति = उद्बोधकान्तरस्थलीयसामग्रीघटकेत्यर्थः। ननु विषयितासम्बन्धेन किञ्चिदन-वच्छिन्नज्ञाननिष्ठविषयताशाल्युद्बोधकान्तराप्रयोज्यो यो ग्रहस्तदजनकत्वनिवेशेनैव सामञ्जस्ये स्वरूपयोग्यत्वनिवेशो व्यर्थ इति चेन्न? घटज्ञानमित्यादिस्थले बाधापत्तेर्दुर्वारत्वात्। तत्र घटपदोपस्थापकज्ञानपदोपस्थापकोद्बोधकयोर्भिन्नतया विषयानुपरक्तज्ञानोपस्थितेरपि

( गा० ) यद्यद्रूपेण कारणानाम् प्रकृतसामग्रीघटकत्वं तत्तद्रूपस्य विषयानुपरक्तज्ञानग्रहस्वरूपयोग्यतानवच्छेदकत्वं विवक्षणीयम् , तेन गुरुमते तत्तद्व्यवसायप्रागभावस्य प्रागभावत्वेन जन्यमात्रं प्रति स्वरूपयोग्यत्वेऽपि न तद्घटितव्यवसायसामग्र्या असंग्रहः । व्यवसायात्मकज्ञानोत्पादप्रयोजकसमुदायमध्ये तत्तद्व्यवसायप्रागभावत्वेन तन्निवेशात् तद्रूपेण जन्यमात्रम् प्रति स्वरूपयोग्यताविरहात् ।

एवं च मिश्रमतेऽनुव्यवसायसामग्रीघटकव्यवसायस्य कालोपाधिविधया जन्यमात्रस्वरूपयोग्यत्वेऽपि न तत्सामग्र्यसंग्रहः । तत्सामग्रीघटकतावच्छेदकं विशेष्यकघटत्वादिप्रकारकज्ञानत्वेनातथात्वात् ।

नच विषयविनिर्मुक्तज्ञानग्राहकत्वस्य विषयानवच्छिन्नज्ञानभानाप्रयोजकस्वरूपस्य निवेशे उक्तविवक्षामन्तरेणापि सामञ्जस्यम् ।

---

(प्रभा) घटपदोपस्थापकोद्बोधकान्तरापेक्षया ज्ञानोपस्थापकरूपोद्बोधकान्तरजन्यत्वादिति । ननु स्वरूपयोग्यतारूपकारणतानिवेशे गुरुमते साध्याप्रसिद्धिस्तथाहि तत्तद्व्यवसायप्रागभावस्य विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतप्रागभावत्वरूपधर्मवत्त्वाद् गुरुमते साध्याप्रसिद्धिरित्यत आह यद्यद्रूपेणेति ।

यद्यद्रूपावच्छिन्नकारणानां स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकसामग्रीघटकतेत्यर्थः । तथाच प्रकृतसामग्रीघटकतावच्छेदकतापर्याप्त्यधिकरणं यद्यद्रूपं विषयानुपरक्तज्ञानग्रहस्वरूपयोग्यतावच्छेदकतापर्याप्त्यधिकरणं तत्तद्रूपावच्छिन्नघटिततादृशप्रकृतसामग्रीजन्यग्रहविषयत्वं साध्यम्पर्यवस्यति । तेनेति = ईदृशविवक्षणेनेत्यर्थः । गुरुमते इति । मिश्रमतस्यानुपदं वक्ष्यमाणत्वात्तदत्र नोक्तम् । जन्यमात्रम्प्रतीति = जन्यत्वेन रूपेण विषयानुपरक्तज्ञानग्रहनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतप्रागभावत्वरूपधर्मवत्त्वस्य तत्तद्रूपव्यवसायप्रागभावे सत्त्वेपीत्यर्थः । तथाच प्रकृतसामग्रीघटकतत्तत्कारणतावच्छेदकं यद्यद्रूपन्तत् तत्तद्व्यवसायप्रतियोगिकप्रागभावत्वम् , तादृशं च रूपं विषयानुपरक्तज्ञानग्रहनिरूपितस्वरूपयोग्यतावच्छेदकतापर्याप्त्यनधिकरणमेवेति तत्तद्रूपावच्छिन्नघटिततत्तद्व्यवसायोत्पादकसामग्रीमादाय लक्षणसमन्वय इति न साध्याप्रसिद्धिरिति । पर्याप्तिनिवेशस्तु केवलप्रागभावत्वमादाय साध्याप्रसिद्धिवारणाय । अन्यथा विषयतासम्बन्धेन प्रत्यक्षम्प्रति तादात्म्येन विषयस्य कारणतया केवलयद्रूपावच्छिन्नत्वतद्रूपावच्छिन्नत्वनिवेशेनैव वारणात् । पुनश्शङ्कते नचेति । विषयानवच्छिन्नेति । विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताशून्यत्वरूपस्येत्यर्थः । उक्तविवक्षामिति = यद्यद्रूपेण कारणानाम् प्रकृतसामग्रीघटकता तत्तद्रूपावच्छिन्नेत्यादिरूपकविवक्षामन्तरेणापीत्यर्थः । तथाच विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताशून्यं यादृशसामग्रीघटकनिखिलकारणं [illegible] दृशसामग्रीजन्ययावद्ग्रहविषयत्वरूपं साध्यम् पर्यवसितम् । सामञ्जस्यमिति = साध्याप्रसिद्धिवारणमित्यर्थः ।

( गा० ) व्यवसायतत्प्रागभावादीनां कालत्वप्रागभावत्वादिना विषयानवच्छिन्नज्ञानविषयकग्रहस्य स्वरूपयोग्यत्वेऽपि तेन रूपेण विषयानवच्छिन्नज्ञानविषयतावच्छिन्नाजनकत्वात्। एवञ्च गुरुमते आत्मादीनां ज्ञानग्राहकसामग्रीत्वेन ज्ञानग्रहत्वावच्छिन्नम्प्रति हेतुत्वेऽपि न क्षतिः, तत्र विषयानवच्छिन्नज्ञानभाना[1]प्रयोजकत्वेन तद्व्यावृत्तेरनपेक्षितत्वादिति वाच्यम् ?

---

( प्रभा ) तेन रूपेणेति = कालत्वप्रागभावत्वादिनेत्यर्थः। विषयानवच्छिन्नेति = विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताशून्यत्वादित्यर्थः। एवञ्च = तथा निवेशे इत्यर्थः। न क्षतिरिति = न साध्याप्रसिद्धिरित्यर्थः। तत्रेति = आत्मनीत्यर्थः। विषयानवच्छिन्नेति = विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताशून्यत्वसत्त्वे इत्यर्थः। तथात्व आत्मघटितव्यवसायसामग्रीसंग्रहान्न गुरुमते साध्याप्रसिद्धिरितिभावः। तद्व्यावृत्तेरनपेक्षितत्वादिति = ज्ञानभानप्रयोजकत्वं निखिलकारणे निवेश्य पूर्वं याऽऽत्मव्यावृत्तिस्सम्पादिता

---

१ ज्ञानभानाप्रयोजकत्वे यत्नेन तद्व्यावृत्तेरनपेक्षितत्वादिति पाठान्तरम्। तत्र यत्नेनेति—ज्ञानभानप्रयोजकत्वस्य निखिलकारणे निवेशात्मकप्रयासेनेत्यर्थः। अनपेक्षितत्वादिति = आत्मव्यावृत्तेरनपेक्षितत्वादित्यर्थः। प्रकृतसामग्रीघटकनिखिलकारणे ज्ञानभानप्रयोजकत्वविशेषणदानेन आत्मनः प्रकृतसामग्रीघटककारणेभ्यो बहिर्भूतत्वस्यानपेक्षणादितियावत्। अत्रायमभिसन्धिः, पूर्वं ह्यात्ममनस्संयोगादिव्यावृत्त्यर्थं स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकप्रकृतसामग्रीघटकनिखिलकारणे ज्ञानभानप्रयोजकत्वं निवेशितम्, किन्तु तन्निवेशेऽपि गुरुमते आत्मादीनां ज्ञानभानप्रयोजकत्वमव्याहतमेवेति आत्मनोऽपि स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकप्रकृतसामग्रीघटकज्ञानभानप्रयोजकनिखिलकारणान्तर्गतत्वेन तत्र विषयतासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयताशालिग्रहाजनकत्वाभावेन तादृशात्मघटितव्यवसायप्रयोजकसामग्र्या असंग्रहान्न गुरुमते साध्याप्रसिद्धिमाशंक्य तज्ज्ञानप्रागभावमात्रं हि गुरुमते ज्ञानभानप्रयोजकमिति समाहितम्। पूर्वोक्तयत्नेन आत्मव्यावृत्तिर्निरर्थिकेति भावः।

२ केचित्तु ज्ञानग्रहत्वावच्छिन्नम्प्रति = ज्ञानग्रहम्प्रतीत्यर्थः। नातो ज्ञानविषयकग्रहत्वेन जन्यत्वपर्यवसानाज्ज्ञानविषयताया जन्यतावच्छेदकतया प्रयोज्यतया ग्रन्थासङ्गतिरिति। विषयानवच्छिन्नज्ञानाप्रयोजकत्वेनेति = विषयानवच्छिन्नज्ञानविषयतानिष्ठप्रयोज्यतानिरूपितप्रयोजकताशून्यत्वसत्त्वेनेत्यर्थः। तद्व्यावृत्तेरिति = आत्मव्यावृत्तेरित्यर्थः। अनपेक्षितत्वादिति। तथाच यादृशसामग्रीघटकनिखिलकारणं विषयानवच्छिन्नज्ञानभानाप्रयोजकं तादृशसामग्रीजन्यग्रहविषयत्वस्य साध्यत्वे आत्मनो जन्यतावच्छेदककोटौ प्रागुक्तदिशा ज्ञानविषयताया अप्रवेशादात्मनि ज्ञानभानाप्रयोजकत्वसत्त्वेन अनुव्यवसायादिसामग्रीघटकनिखिलकारणान्तर्गतस्यात्मनोऽपि विषयानवच्छिन्नज्ञानभानाप्रयोजकतया व्यवसायादिसामग्र्याः संग्रहसम्भवे पुनरात्मव्यावृत्त्या

( गा० ) एवमपि मिश्रमते ज्ञानत्वादिप्रकारकव्यवसायस्योपनीतज्ञानग्रहे विषयानवच्छिन्नज्ञानविषयताप्रयोजकत्वसत्त्वेन तद्घटितानुव्यवसायसामग्र्याः दुस्संग्रहतया तादृशव्यवसायप्रामाण्ये वाधस्य वारणाय उक्तविवक्षाया आवश्यकत्वात्। तद्विवक्षणे ज्ञानत्वादिप्रकारकत्वप्रकारकज्ञानत्वस्य ज्ञानोपनीतभानजनकतानवच्छेदकत्वेन सामंजस्यात्।

---

( प्रभा ) तस्या अनपेक्षितत्वादित्यर्थः। अयमाशयः, पूर्वं आत्ममनस्संयोगादिक्यावृत्त्यर्थं स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकसामग्रीघटकनिरिवलकारणे ज्ञाने भानप्रयोजकत्वं निवेशितम् तदिदानीं नापेक्षितम्। मिश्रमते = मुरारिमिश्रमते इत्यर्थः। ज्ञानत्वादिप्रकारकेति = अहं जाने इत्याकारकमानसप्रत्यक्षरूपव्यवसायस्येत्यर्थः। उपनीतज्ञानग्रहे = ज्ञानं जातमित्याकारके ज्ञानलक्षणासन्निकर्षजन्यग्रहे इत्यर्थः। ज्ञानविषयताप्रयोजकत्वेति= विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकतासत्त्वेनेत्यर्थः। तद्विषयकप्रत्यक्षम्प्रति विषयस्य कारणतया ज्ञानज्ञानम्प्रति ज्ञानस्य कारणत्वादिति भावः। तद्घटितानुव्यवसायेति=ज्ञानत्वप्रकारकव्यवसायघटितसामग्र्या इत्यर्थः। तादृशव्यवसायप्रामाण्ये इति=ज्ञानत्वप्रकारकव्यवसायगतप्रमात्वे इत्यर्थः। वाधस्येति = अयम्भावः, घटव्यवसायगतप्रमात्वस्थल इव ज्ञानत्वप्रकारकव्यवसायगतप्रमात्वम्पक्षीकृत्य विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताशून्ययादृशसामग्रीघटकनिरिवलकारणन्तादृशसामग्रीजन्ययावद्ग्रहविषयत्वमवश्यं त्वया साध्यं किन्तु तत्रोपनीतज्ञानग्रहमादाय पूर्वोक्तयुक्त्या निर्दिष्टस्वतोग्राह्यत्वस्य सत्त्वेन वाध एव, उक्तोपनीतज्ञानग्रहे विषयानवच्छिन्नज्ञानविषयताप्रयोजकत्वसत्त्वात्। ननु नैतद्रीत्या बाधः, तथाहि-तदृशसामग्र्याः साध्यघटकत्वे तज्जन्ययावद्ग्रहान्तर्गतज्ञानत्वप्रकारकव्यवसायोपनीतज्ञानग्रहनिरूपितविषयत्वस्योक्तप्रमात्वे सत्वं न स्यात्तदा वाधसम्भवः, प्रकृते तु तथोक्तसामग्र्याः साध्याघटकत्वेन साध्याप्रसिद्धेरेव योग्यत्वादिति चेन्न ? पक्षे साध्यसत्त्वानिर्वाहरूपवाधस्योक्तत्वेनात्रापि तस्यैवाभिप्रेतत्वात्। उक्तविवक्षाया इति = यद्यद्रूपेण कारणानाम् प्रकृतसामग्रीघटकतेत्यादिविवक्षाया इत्यर्थः। तद्विवक्षणे इति। प्रकृतसामग्रीघटकतावच्छेदकं यद्यद्रूपमित्यादिविवक्षणे इत्यर्थः। ज्ञानत्वादिप्रकारकत्वेति = ज्ञानत्वप्रकारको योऽनुव्यवसायः तत्सामग्रीघटकतावच्छेदकं यद् ज्ञानत्वप्रकारकत्व-ज्ञानत्वैतद्द्वयं ( रूपम् ) तस्येत्यर्थः। ज्ञानोपनीतभानजनकतेति= तथाच तद्विषयकप्रत्यक्षं प्रति तद्विषयकज्ञानत्वेन कारणतेति ज्ञानलक्षणासन्निकर्षस्थलीयकार्यकारणभावेन प्रकृते ज्ञानत्वप्रकारकव्यवसायविषयकोक्तमानसप्रत्यक्षम्प्रति ज्ञानत्वप्रकारकव्यवसायविषयकज्ञानत्वेन कारणतयैतादृशज्ञानोपनीतभानजनकतावच्छेदकं ज्ञानत्वप्रकारकव्यवसायविषयकत्वमेव नतु ज्ञानत्वप्रकारकज्ञानत्वमिति नोक्तदोषः।

---

तादृशसामग्रीसंग्रहार्थं यादृशसामग्रीघटकनिरिवलकारणे ज्ञानभानप्रयोजकत्वरूपाधिकविशेषणप्रवेशो नापेक्ष्यत इति तात्पर्यं स्फोरयन्ति।

(गा०) अथैवं घटज्ञानमित्यादिशब्दजन्यशाब्दसामग्रीवारणमशक्यमेव घटान्वितज्ञानविषयकशाब्दबोधे हि घटपदसाकांक्षज्ञानपदज्ञानत्वेनैव हेतुता नतु केवलज्ञानपदज्ञानत्वेन, परस्पराकाङ्क्षाशून्यघटपदज्ञानपदयोर्ज्ञानादन्वयबोधानुदयात्। तथा च तादृशसामग्रीघटकतावच्छेदकघटपदसाकांक्षज्ञानपदज्ञानत्वावच्छिन्नस्य विषयानालिङ्गितज्ञानविषयताघटितधर्मावच्छिन्नग्रहस्वरूपयोग्यतापि नास्ति।

नच घटपदं विनापि ज्ञानपदेन ज्ञानं गुण इत्यादौ शाब्दबोधजननात् तत्साधारणज्ञानगोचरशाब्दबोधत्वरूपसामान्यधर्मावच्छिन्नम्प्रति सामान्यतो ज्ञानपदज्ञानत्वेनापि हेतुत्वात् तदवच्छिन्नमपि घटज्ञानमित्यादिशाब्दसामग्री-

---

(प्रभा) पुनर्बाधमाशंकते अथैवमित्यादिना। एवमिति = प्रकृतसामग्रीघटकतावच्छेदकं ज्ञानविषयत्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकं यत् तद्रूपावच्छिन्नघटितसामग्रीजन्ययावद्ग्रहविषयत्वेन साध्यत्वे इत्यर्थः। घटान्वितज्ञानविषयकशाब्दबोधे इति = विषयित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितज्ञानत्वावच्छिन्नविशेष्यताशालिबुद्धाविन्यर्थः। घटपदसाकाङ्क्षज्ञानपदज्ञानत्वेनेति=अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नघटपदत्वावच्छिन्नप्रकारतानिरूपितज्ञानपदत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेनैवेत्यर्थः। एवकारार्थं स्पष्टयति नतु ज्ञानपदज्ञानत्वेनेति। ज्ञानपदज्ञानत्वेन हेतुत्वाभावे युक्तिन्दर्शयति परस्पराकाङ्क्षाशून्येत्यादिना। घटपदज्ञानपदयोर्ज्ञानादित्यर्थः। घटः ज्ञानम् इत्याकारकपरस्पराकाङ्क्षाशून्यपदद्वयज्ञानादित्यर्थः। अन्वयबोधानुदयादिति = घयन्वितज्ञानविषयकान्वयबोधानुदयादित्यर्थः। तथाचेति=घटपदसाकाङ्क्षज्ञानपदज्ञानत्वेन हेतुत्वे चेत्यर्थः। तादृशसामग्रीघटकतावच्छेदकघटपदसाकाङ्क्षज्ञानपदज्ञानत्वावच्छिन्नस्येत्यर्थः।

घटपदाव्यवहितोत्तरत्वविशिष्टज्ञानपदत्वप्रकारकज्ञानत्वरूपावच्छिन्नस्येतिभावः। विषयानालिङ्गितज्ञानविषयताघटितेत्यादि। तथाच घटज्ञानमितिवाक्यजन्यशाब्दबोधप्रयोजकसामग्रीघटकतावच्छेदकं यद् घटपदसाकाकाङ्क्षज्ञानपदज्ञानत्वं तद्धि विषयानवच्छिन्नज्ञानविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितस्वरूपयोग्यतानवच्छेदकं किन्तु तद्रूपावच्छिन्नघटिततादृशशाब्दसामग्रीजन्यतादृशशाब्दात्मकग्रहविषयत्वरूपसाध्यस्य घटज्ञानगतप्रमात्वे विरहेण बाध इति भावः। पुनस्तादृशशाब्दसामग्रीं वारयितुं यतते घटपदं विनापीत्यादिना। तत्साधारणज्ञानगोचरशाब्दबोधत्वरूपेति = ज्ञानं गुण इति वाक्यार्थबोधसाधारणज्ञानविषयकशाब्दबुद्धित्वरूपेत्यर्थः। सामान्यधर्मावच्छिन्नम्प्रति= ज्ञानविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रतीत्यर्थः। सामान्यत इति=घटपदानन्वितेनेत्यर्थः। ज्ञानपदज्ञानत्वेनापीति = घटान्वितज्ञानविषयकशाब्दम्प्रति घटपदसाकाङ्क्षज्ञानपदज्ञानत्वेन हेतुत्वेऽपि घटानालिङ्गितज्ञानविषयकशाब्दम्प्रति ज्ञानपदज्ञानत्वेनैव हेतुत्वमित्यपिना सूचितम्। तदवच्छिन्नमपि = ज्ञानपदज्ञानत्वावच्छिन्नमपि। घटज्ञानमिति= शाब्दसामग्रीघटकमिति। तथाच घटज्ञानमिति वाक्यार्थबोधसामग्रीघटकतावच्छेदकस्य

(गा०) घटकम्। विशेषसामग्र्याः सामान्यसामग्र्यनुप्रवेशेनैव कार्योपधानप्रयोजकत्वात्। सामग्रीपदेनापि फलोपधानप्रयोजकसामान्यकारणसमुदायस्यैव विवक्षितत्वादिति वाच्यम्? यत्र विशेषकारणस्य सामान्यकारणतावच्छेदकावच्छिन्नत्वनियमस्तत्र विशेषकार्योपधानप्रयोजकविशेषकारणघटितसमुदाये तादृशसामान्यकारणस्य प्रयोजनविरहेणानिवेशात्। विशेषसत्त्वे सामान्यसत्त्वस्यावश्यकतया सामान्यकारणं विना कार्योपधानासम्भवात् इतिचेत्? माभूत्केवलं ज्ञानपदज्ञानत्वेन घटज्ञानगोचरशाब्दबोधसामग्रीघटकता तथापि पदजन्यज्ञानोपस्थितित्वेन पदार्थोपस्थितेःज्ञानगोचरशाब्दसामान्यहेतुत्वात्, तद्रूपावच्छिन्नस्य विषयानवच्छिन्नज्ञानभानेऽपि प्रयोजकस्योक्तसामग्रीघटकत्वेन तद्व्यावर्त्तनसम्भवात्।

---

(प्रभा) ज्ञानपदज्ञानत्वस्य विषयानवच्छिन्नज्ञानविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकतया तद्रूपावच्छिन्नघटिततादृशशाब्दसामग्र्याःसाध्याघटकत्वेन नास्ति बाधावसर इति भावः।

यत्र = घटज्ञानमितिवाक्यार्थबोधे। विशेषकार्योपधानप्रयोजकेति = घटान्वितज्ञानविषयकशाब्दबोधोपधानप्रयोजकेत्यर्थः। विशेषकारणघटितसमुदाये= घटपदसाकाङ्क्षज्ञानपदत्वप्रकारकज्ञानपदघटितसमुदाये इत्यर्थः। तादृशसामान्यकारणस्य=ज्ञानपदत्वप्रकारकज्ञानत्वावच्छिन्नकारणस्येत्यर्थः। तस्य विशेषकार्योपधानप्रयोजकसमुदायमध्येऽप्रवेशे कृते सामान्यधर्मावच्छिन्नकारणं विनाऽपि तादृशशाब्दबोधापत्तिरित्याशङ्क्याह विशेषसत्त्वे सामान्यसत्त्वस्येत्यादि। निर्विशेषं न सामान्यम्भवतीतिनियमादिति भावः।

घटज्ञानमित्यादिशाब्दसामग्रीं वारयति माभूदित्यादिना। केवलमिति=घटपदाव्यवहितोत्तरत्वशून्येत्यर्थः। घटज्ञानगोचरशाब्दबोधेत्यादि। घटान्वितज्ञानविषयकशाब्दबोधसामग्रीघटकतावच्छेदकत्वम्मास्तु ज्ञानपदत्वप्रकारकज्ञानत्वस्येति भावः। तथापीति= ज्ञानपदत्वप्रकारकज्ञानत्वस्य घटान्वितज्ञानविषयकशाब्दसामग्रीघटकतावच्छेदकत्वाभावेऽपि। पदजन्यज्ञानोपस्थितित्वेन ज्ञानपदजन्यज्ञानपदार्थविषयकोपस्थितित्वेन पदार्थोपस्थितेः= ज्ञानपदार्थोपस्थितेः, ज्ञानगोचरशाब्दसामान्यहेतुत्वात् = ज्ञानविषयकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वात्। तथाच विषयानवच्छिन्नज्ञानविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकं ज्ञानविषयकोपस्थितित्वं हि घटज्ञानमितिवाक्यार्थविषयकबोधप्रयोजकसामग्रीघटकतावच्छेदकमित्यतो घटज्ञानमितिशाब्दसामग्र्याः साध्याघटकत्वेन बाधाभावादिति। एतच्चाग्रे स्पष्टयति तद्रूपावच्छिन्नस्येत्यादिना। तद्रूपावच्छिन्नस्येति=ज्ञानविषयकोपस्थितित्वावच्छिन्नस्येत्यर्थः। तद्व्यावर्त्तनसम्भवादिति =घटज्ञानमितिवाक्यार्थबोधप्रयोजकसामग्रीव्यावृत्तिसम्भवादित्यर्थः।

( गा० ) नहि पदार्थोपस्थितेरपि घटाद्यन्वितज्ञानादिबोधे घटादिपदसाकाङ्क्षज्ञानादिपदज्ञानजन्यज्ञानाद्युपस्थितित्वेन हेतुता कल्प्येते, प्रयोजनविरहात् तत्तत्पदजन्योपस्थितितत्तत्पदधर्मिकपदान्तराकाङ्क्षाज्ञानघटितसामग्र्याः कार्योपधानप्रयोजकत्वेन निराकाङ्क्षपदजन्योपस्थितिबलात् अन्वयबोधापत्त्यसम्भवात् ।

यदि च आकाङ्क्षाज्ञानं न शाब्दधीकारणम्, अपितु पदार्थोपस्थितिकारणतायां जन्यतासम्बन्धेनावच्छेदकमेवेति नव्यास्त्रिवत्यादिना मणिकाराणां स्वं मतमाद्रियते तदोक्तप्रकारेण घटज्ञानमित्यादिसामग्रीव्युदा-

---

(प्रभा) ननु घटान्वितज्ञानविषयकशाब्दम्प्रति ज्ञानपदजन्यज्ञानोपस्थितेरपि घटपदसाकाङ्क्षज्ञानपदजन्यज्ञानोपस्थितित्वेनैव हेतुता नतु शुद्धज्ञानोपस्थितित्वेन । इत्थञ्च विषयानुपरक्तज्ञानविषयताशालिग्रहनिरूपितस्वरूपयोग्यतावच्छेदकतापर्याप्त्यनधिकरणत्वं प्रकृतसामग्रीघटकतावच्छेदकीभूते ज्ञानविषयकोपस्थितित्वेऽपीति शाब्दसामग्रीवारणं दुःशक्यमेवेत्यत आह नहीति । पदार्थोपस्थितेरपीति = ज्ञानपदजन्यज्ञानोपस्थितेरपीत्यर्थः । प्रयोजनविरहादिति । ननु निराकाङ्क्षघटपदज्ञानपदाच्छाब्दापत्तिवारणरूपमेव प्रयोजनमित्यत आह तत्पदजन्योपस्थितीत्यादि । ज्ञानपदजन्यज्ञानोपस्थितीति –ज्ञानपदधर्मिकघटपदाकाङ्क्षाज्ञानघटितसामग्र्या इत्यर्थः । कार्योपधानप्रयोजकत्वेनेति=घटान्वितज्ञानविषयकशाब्दबोधप्रयोजकत्वेनेत्यर्थः । निराकाङ्क्षपदजन्योपस्थितिबलादिति=घटःज्ञानमितिपरस्परंनिराकाङ्क्षपदज्ञानघटोपस्थितिज्ञानोपस्थितिबलादित्यर्थः । अन्वयबोधापत्त्यसम्भवादिति=विषयितासंसर्गेण घटप्रकारकज्ञानविशेष्यकशाब्दबोधोदयापत्त्यसम्भवादित्यर्थः । तथाचाकाङ्क्षाज्ञानरूपकारणविरहादेवोक्तबोधापत्तिवारणसम्भवे उपस्थितिजनकतावच्छेदककोटावाकाङ्क्षाज्ञाननिवेशने प्रयोजनाभावादिति भावः ।

ननु पुनःशाब्दसामग्र्याः साध्यघटकताव्यावृत्तिरशक्येत्याह यदि चेत्यादि । आकाङ्क्षाज्ञानमिति । तथाच यदि आकाङ्क्षाज्ञानं स्वतन्त्रं कारणं स्यात्तदा ज्ञानपदजन्यज्ञानोपस्थितेरेव विषयानवच्छिन्नज्ञानविषयको यो ग्रहः 'ज्ञानं गुणः' इति वाक्यजन्यशाब्दबोधरूपः तज्जनकतया विषयानवच्छिन्नज्ञानग्रहाजनकत्वाभावेन शाब्दसामग्रीवारणं स्यात् किन्तु आकाङ्क्षाज्ञानस्य उपस्थितिकारणतावच्छेदकतया उक्तशाब्दसामग्रीघटकतावच्छेदकं स्यादिति शाब्दसामग्रीवारणस्याशक्यतया तस्यास्साध्यघटकतामादाय बाधो दुर्वार इति भावः । जन्यतासम्बन्धेनावच्छेदकमेवेति । जन्यतासम्बन्धेन आकाङ्क्षाज्ञानविशिष्टपदार्थोपस्थितिः कारणमितिभावः । दीधितौ यस्या विषयग्राहकत्वमिति । यस्या इत्यत्र निष्ठत्वं षष्ठ्यर्थः यत्पदार्थः सामग्री, तथाच .यादृशसामग्रीनिष्ठविषयग्राहकता ज्ञानग्राहकताप्रयोज्या तादृशसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यम् । एवञ्च घटज्ञानमितिशाब्दसामग्रीवारणसम्भवस्तथाहि घटज्ञानमितिशाब्दसामग्रीनिष्ठविषयग्राहकताया ज्ञानग्राहकताप्रयोज्यत्वाभावेन तादृशशाब्दसामग्र्याः साध्यघटकत्वासम्भवात् । ननु घटज्ञानमितिशाब्दसामग्रीनिष्ठविषयग्राहकताम्प्रति ज्ञानग्राहकताऽवश्यम्प्रयोजिका उभयोः सामानैयत्येन

(दी० ) ज्ञानग्राहकताप्रयुक्तमेव यस्या विषयग्राहकत्वमिति यावत् । तादृश-यावत्सामग्रीग्राह्यत्वमर्थः ।

---

(गा०) सासम्भवात् पक्षधरमिश्रा एव प्रकारान्तरमनुसृतवन्तः, तमेव पक्षमुप-न्यस्यति *ज्ञानग्राहकताप्रयुक्तमिति* । यत्र ज्ञानभासकमेव विषयभानार्थं नाधिकमपेक्षितं तज्ज्ञानसामग्र्या विषयग्राहकत्वे ज्ञानग्राहकत्वम् प्रयोजकम् । उक्तशाब्द-बोधसामग्र्या विषयग्राहकत्वे च न ज्ञानग्राहकत्वम्प्रयोजकम् । तत्र ज्ञानभाना-प्रयोजकघटादिपदज्ञानस्य अधिकस्य विषयभासकत्वात् । अनुव्यवसाय-सामग्र्या विषयग्राहकत्वे च ज्ञानग्राहकत्वम् प्रयोजकम् । तत्र ज्ञानभानप्रयो-जकव्यवसायज्ञानधर्मिकविषयासंसर्गग्रहाभावयोरेव विषयभासकत्वात् ।

यद्यपि ज्ञानपदसमभिव्याहृतत्वेन घटपदज्ञानस्य ज्ञानविषयतापि जन्यतावच्छेदिका, तथापि तदवच्छिन्नजनकत्वमेव न तत्प्रयोजकत्वरूपं तद्भासकत्वम् । किन्तु एतद्बोधजनकवाक्येऽमुकपदसत्त्वादस्य बोधस्य एतद्-विषयकत्वमित्यादिव्यवहारसिद्धस्वरूपसम्बन्धविशेष एव । नहि घटज्ञानबोधे ज्ञानपदाज् ज्ञानभानमितिवत् घटपदाज् ज्ञानभानमित्यपि व्यवहारः । विषयो-पस्थितिं विना ज्ञानस्य शाब्दबोधे बहुशो भानं नतु ज्ञानोपस्थितिं विना क्वचिदपीति ज्ञानविषयोपस्थापकपदयोविशेषादिति भावः ।

---

(प्रभा) प्रयोज्यप्रयोजकभावसम्भवात् इत्यत आह यत्र ज्ञानभासकमेव विषयभासक-मित्यादि । ज्ञानभासकमेवेति = ज्ञाननिष्ठविषयत्वावच्छिन्नजन्यतानिरूपितजनकत्व-रूपं ज्ञानभानप्रयोजकमित्यर्थः । विषयभासकमिति = विषयभानप्रयोजकमिति, विषयनिष्ठ-विषयत्वावच्छिन्नजन्यतानिरूपितजनकतावत् इत्यर्थः । तथाच प्रकृते ग्रन्थोक्तदिशा निरुक्तशाब्दसामग्र्याः प्रयोज्यप्रयोजकभावविरहेण तादृशशाब्दसामग्र्याः साध्याघटकतया न पूर्वोक्तबाधावसर इति । ननु ज्ञानग्राहकत्वं ज्ञाननिष्ठविषयत्वावच्छिन्नजन्यतानिरूपित-जनकत्वम् । विषयग्राहकत्वं विषयनिष्ठविषयत्वावच्छिन्नजन्यतानिरूपितजनकत्वम् । एवञ्च प्रकृते ज्ञाननिष्ठविषयताऽपि ज्ञानपदसमभिव्याहृतत्वेन घटपदज्ञानजन्यतावच्छेदकतया ज्ञाननिष्ठविषयत्वावच्छिन्नजन्यतानिरूपितजनकतायाश्च घटपदज्ञानेऽपि सत्त्वेन ज्ञानभानप्रयो-जकस्यैव घटपदज्ञानस्य विषयभानप्रयोजकत्वात्पुनः शाब्दसामग्रीवारणमशक्यमित्याशङ्कते यद्यपीत्यादिना । घटपदज्ञानस्येति = घटपदज्ञाननिष्ठजनकतानिरूपितेत्यर्थः, जन्यतायां तदन्वयः ।

अत्र हि ज्ञाननिष्ठविषयत्वावच्छिन्नजन्यतानिरूपितजनकत्वं न ज्ञानभानप्रयोज-कत्वम् किन्तु एतद्बोधजनकवाक्येऽमुकपदसत्त्वादस्य बोधस्यैतद्विषयकत्वमित्यादिव्यवहार-सिद्धस्वरूपसम्बन्धविशेष एवेति न ज्ञानभानप्रयोजकत्वं घटपदज्ञाने । तथाचोक्तशाब्दसामग्री-वारणासम्भव इति समाधत्ते तथापीत्यादिना ।

( दी० ) यद्यपि उभयभासकसामग्र्या नैकग्राहकत्वप्रयुक्तमन्यग्राहकत्वम् तथापि ज्ञानग्राहकताप्रयोजकसामग्रीप्रयुक्तविषयग्राहकताकत्वं वाच्यम् ।

घटज्ञानपदाद्यात्मकसामग्र्यास्तु ज्ञानपदाधीनं ज्ञानग्राहकत्वम्, तच्च न घटग्राहकत्वे तन्त्रम्; अपि तु घटपदम् ।

---

( गा० ) एतावतानुव्यवसायादिस्थले तुल्यकालसम्बन्धिनोर्ज्ञानविषयभानयोरिव तथाविधयोस्सामग्रीनिष्ठज्ञानविषयभासकतयोरपि न प्रयोज्यप्रयोजकभावःसिध्यति, अपितु एकतरभानेऽन्यतरभासकहेतोरेवेति, यथाश्रुते सम्भव इत्याशंक्य निष्कृष्टार्थमाह *यद्यपीत्यादि* । *ज्ञानग्राहकतेति* । यादृशसामग्रीजन्यज्ञाने विषयभानं ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकप्रयुक्तं तादृशत्वं सामग्र्यां विशेषणं वक्तव्यमित्यर्थः ।

एतेन यथाश्रुते घटज्ञानमित्यादिशाब्दबोधरूपज्ञानग्रहस्य विषयग्रहरूपतया तत्सामग्रीनिष्ठज्ञानग्रहोपधानरूपज्ञानग्राहकताया विषयग्रहोपधानरूपविषयग्राहकतातोऽभिन्नतया तुल्यप्रयोजकप्रयुक्तत्वसत्त्वेऽपि न क्षतिः ।

प्रयोजकत्वेनेतिकरणात् तादृशशाब्दबोधे योग्यताज्ञानादीनामुभयभानप्रयोजकत्वेऽपि न दोषः । ज्ञानभानप्रयोजकत्वस्य विषयभासकमध्यनिविष्टघटपटाद्यसंग्राहकत्वेन विषयभासकतानवच्छेदकत्वात् । तदेव दर्शयति *घटज्ञानपदेति* । तादृशसामग्रीजन्यज्ञाने ज्ञानपदाधीनं ज्ञानभानमित्यर्थः । तच्च = ज्ञानपदं च । *घटग्राहकत्वे* = घटविषयकत्वे ।

---

( प्रभा ) ननु तथापि साध्याप्रसिद्धिः ज्ञानग्राहकताप्रयुक्तत्वस्यानुव्यवसायसामग्रीनिष्ठविषयग्राहकतायामप्यसत्त्वेन ज्ञानग्राहकताप्रयोज्यविषयग्राहकतासामग्र्या अप्रसिद्धेः इति दर्शयति एतावतेत्यादिना । ज्ञानविषयभानयोरिवेति = ज्ञानविषयताविषयविषयत्वयोरिवेत्यर्थः । तथाविधयोः = तुल्यकालसम्बन्धिनोः । एकतरभाने = ज्ञाननिष्ठविषयत्वे । अन्यतरभासकहेतोरिति = विषयभानप्रयोजकघटपदज्ञानरूपहेतोरित्यर्थः । विषयभानमिति = विषयनिष्ठविषयत्वम् । ज्ञानभानप्रयोजकत्वेनेति = तृतीयार्थोऽवच्छिन्नत्वम् । तत्प्रयोजकत्वे तदन्वयः । तत्प्रयोजकप्रयुक्तमिति = विषयभानप्रयोजकप्रयुक्तमित्यर्थः । तथाच यादृशजन्यज्ञाने ज्ञानभानप्रयोजकत्वावच्छिन्नविषयज्ञानप्रयोजकताप्रयोज्यं विषयभानं तादृशसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यम् पर्यवसितमिति न शाब्दसामग्र्याः साध्यघटकत्वम् । शाब्दसामग्रीजन्यज्ञाने विषयभानप्रयोजकता ज्ञानभानप्रयोजकत्वावच्छिन्ना सती न विषयभानप्रयोजिकेति अदोषात् ।

एतेनेति = यादृशसामग्रीजन्यज्ञाने विषयभानं ज्ञानभानप्रयोजकत्वेन प्रयुक्तमित्याद्यर्थकरणेनेत्यर्थः । न क्षतिरिति = न शाब्दसामग्र्याः साध्यघटकत्वमित्यर्थः । ननु ज्ञानभानप्रयोजकतासमानाधिकरणविषयभानप्रयोजकतावत्सामग्रीजन्ययावद्ग्रहविषयत्वस्य

(दी०) एकयैव शक्त्या विषयोपरक्तज्ञानग्राहकेण प्रमापदेन प्रामाण्यग्राहिणा सिद्धसाधनवारणाय यावदिति ।

---

(गा०) ननु एवम् प्रामाण्यानुमितिग्राह्यत्वमादाय सिद्धसाधनवारकं यावत्पदमनर्थकम्, इदं ज्ञानं घटविषयकं घटेच्छाजनकत्वादित्याद्यनुमानानामिव प्रामाण्यानुमानस्यापि उक्तविशेषणेनैव वारणात्, तत्रेवात्रापि ज्ञानविषयग्राहकतयोः पृथक् प्रयोजकप्रयुक्तत्वादित्याशंक्य एकप्रयुक्तोभयग्राहकताकपदविशेषघटितसामग्रीग्राह्यताप्रयुक्तसिद्धसाधनवारकतां तत्राह एकयैवेति । पदैक्येऽपि विशेषणविशेष्यभेदेन शक्तिरूपप्रयोजकभेदात् न तादृशसामग्रीसंग्रह इति तदैक्याभिधानं विषयोपरक्तेति । विषयघटितयाथार्थ्यविशिष्टेत्यर्थः । उपसर्गस्य द्योतकतया न प्रशब्दस्य याथार्थ्यरूपप्रकर्षे स्वतन्त्रशक्तिरिति भावः ।

ननु प्रमापदं यथार्थानुभवत्वविशिष्ट एव शक्तम् ननु यथार्थज्ञानत्वविशिष्टे स्मृतिकरणे, प्रमाणव्यवहारविरहात् । एवञ्चानुभवत्व जातिमङ्गीकुर्वतां नैयायिकानां न प्रमापदस्य ज्ञानत्वघटितप्रामाण्यग्राहकत्वमित्याशङ्कां

---

(प्रभा) साध्यत्वे योग्यताज्ञानादिकमादाय पुनःशाब्दसामग्र्याः साध्यघटकत्वेन वाधो दुर्वार इत्यतोऽवच्छेद्यत्वनिवेशस्तदर्थज्ञानभानप्रयोजकत्वेनेति तृतीयान्तोक्तिश्च ।

एवमिति=ज्ञानग्राहकताप्रयुक्तमेव यस्या विषयग्राहकत्वमितिनिवेशे इत्यर्थः । यादृशसामग्रीजन्यज्ञाने ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभानप्रयोजकताप्रयुक्तं विषयभानं तादृशसामग्र्यास्साध्यघटकत्वे इति यावत् । प्रामाण्यानुमितिग्राह्यत्वमादायेति=इदं ज्ञानम्प्रमा संवादिप्रवृत्तिजनकत्वादित्यनुमितिमादायेत्यर्थः । अनर्थकमिति=यादृशसामग्र्याः ज्ञानग्राहकताप्रयोज्यत्वस्य विषयग्राहकत्वेऽसत्त्वेन साध्याघटकतया बाधवारणान्निष्प्रयोजनमेवेति भावः । उक्तविशेषणेनैवेति । ज्ञानग्राहकताप्रयुक्तमेव यस्या विषयग्राहकत्वमिति विशेषणेनैवेत्यर्थः । तत्रेवेति = इदंज्ञानं घटविषयकमित्यत्रेवेत्यर्थः । अत्रापि=प्रामाण्यानुमितावपि । पृथक्प्रयोजकप्रयुक्तत्वादिति । ज्ञानग्राहकतायां व्यापकत्वं प्रयोजकं विषयग्राहकतायां व्यापकतावच्छेदकत्वं प्रयोजकमिति भावः ।

इत्याशंक्येति = यावत्पदवैयर्थ्यमाशंक्येत्यर्थः । एकप्रयुक्तोभयग्राहकतापदविशेषेति । एका या विषयघटितप्रमापदार्थनिरूपिता प्रमापदनिष्ठा शक्तिस्तत्प्रयुक्ता या ज्ञानस्य विषयस्येत्युभयस्य च ग्राहकता तन्निरूपको यः प्रमापदविशेषस्तद्घटितसामग्र्याः साध्यघटकतया तामादाय सिद्धसाधनापत्तेरिति ।

ज्ञानत्वघटितप्रामाण्यग्राहकत्वमिति । तथाच प्रमापदजन्यशाब्दसामग्र्या ज्ञानग्राहकत्वाभावेन ज्ञानग्राहकताप्रयुक्तविषयग्राहकत्वाभावेन साध्याघटकतया सिद्धसाधन-

( दी० ) तद्धि धात्वर्थतावच्छेदकज्ञानत्वपुरस्कारेणैव यथार्थज्ञानमभिधत्त। स्मृतिहेतोः प्रमाणान्तरतापत्तेस्तु भीतास्तान्त्रिकाः शास्त्रे प्रमाव्यवहारौपयिकं स्मृतिव्यावृत्तं रूपमनुमन्यन्ते ।

भ्रमपदेन प्रामाण्याग्रहाद् बाधवारणाय तदप्रामाण्येति ।

---

( गा० ) निरस्यति *तद्धीति* । तत् = प्रमापदम् । *ज्ञानत्वपुरस्कारेणैवेति* । ज्ञानत्व-घटितप्रामाण्यप्रकारेणेत्यर्थः । एवकारेण यथार्थानुभवत्वविशिष्टव्यवच्छेदः । प्रकर्षाद्विद्योतकोपसर्गपूर्वकधातोः प्रकर्षादिसहितस्वशक्यतावच्छेदकावच्छिन्न-वाचकत्वनियमादिति भावः। उपसर्गस्तु शक्यतावच्छेदककोटौ निविशतां नवा इत्यन्यदेतत्। स्मृतौ तान्त्रिकाणां प्रमाव्यवहारं शास्त्रे प्रमापदस्य पारिभाषिकतया वारयति *स्मृतीति* । *प्रमाणान्तरतापत्तेः* = प्रमाणान्तरव्यवहार-विषयतापत्तेः । स्मृतिव्यावृत्तं रूपं यथार्थानुभवत्वं प्रमाव्यवहारौपयिकमनु-मन्यन्त इत्यन्वयः ।

ननु एवमपि अप्रामाण्याग्राहकेत्यस्य वैयर्थ्यम्, भ्रमग्राहकानु-मित्यादेः उक्तविशेषणेन वारणात् तदग्राह्यत्वेऽपि बाधासम्भवादित्यत आह *भ्रमपदेनेति* । एकयैव शक्त्या विषयघटितमूर्त्तिकभ्रमत्वविशिष्टबोध-केनेति शेषः ।

नच भ्रमपदस्य प्रामाण्याश्रयाग्राहकत्वात् न तदग्राह्यत्वेऽपि बाध इति वाच्यम्, प्रमाया अप्यंशे भ्रमत्वसम्भवेन भ्रमपदस्य तादृशज्ञानबोधकतया प्रामाण्याश्रयबोधकत्वात् ।

---

( प्रभा ) वारणसम्भवे यावत्पदोपादानमिरर्थकमेवेति भावः । इत्याशङ्काम् = यावत्पद-वैयर्थ्यशंकाम् । ज्ञानत्वपुरस्कारेणैवेति । तथाच ज्ञानग्राहकताप्रयुक्तविषयग्राहकतया उक्तशाब्दसामग्र्या अपि साध्यघटकतया तामादाय सिद्धसाधनवारणाय यावत्पदोपा-दानमिति भावः ।

एवमपि = यावत्पदस्य सार्थक्येऽपि । भ्रमग्राहकानुमित्यादेः = इदं ज्ञानं भ्रमःविसंवादिप्रवृत्तिजनकत्वादित्यनुमित्यादेरित्यर्थः । उक्तविशेषणेनेति=ज्ञानग्राहकता-प्रयुक्तं यस्या विषयग्राहकत्वमितिपूर्वोक्तविशेषणेनेत्यर्थः । एकयैव शक्त्येत्यादि । तथाच भ्रमग्राहकशाब्दसामग्र्याः साध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेन बाधापत्तिरित्यप्रामाण्याग्राहकत्वस्य सार्थक्यम् ।

कस्मिंश्चिदपि प्रामाण्ये सामान्यतो यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं न प्रसिद्धमित्य-प्रसिद्धिवारणाय स्वाश्रययावज्ज्ञानग्राहकत्वं सामग्र्यांप्राङ्निवेशितं तत एव च भ्रम-ग्राहकशाब्दसामग्रीवारणं स्यात्, तस्याःप्रामाण्याग्राहकत्वादिति पुनरप्रामाण्याग्राहकत्वदलं व्यर्थमित्याशङ्कते नचेत्यादिना ।

(दी०) तन्न ? गुरुनये विषयग्राहकताया ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वात्, प्रत्युत विषयग्राहकताप्रयोजकस्यैव ज्ञानग्राहकताप्रयोजकत्वात्। सर्वस्यैव विषयग्रहस्य आत्मविषयत्वात्।

---

(गा०) सर्वधीयाथार्थ्यमते भ्रमपदं तदभाववद्धर्मिसाकाङ्क्षतद्विषयकज्ञानत्वेन तत्प्रमामेव बोधयति। एतच्च समाधिसौकर्येण। अग्राहकान्तानुपादाने गुरुमते स्वतन्त्राप्रामाण्योपस्थितिद्वितीयक्षणोत्पन्नप्रामाण्याश्रयविषयकस्वप्रकाशात्मकव्यवसायसामग्र्या मिश्रमते चोपगीताप्रामाण्यघटकविषयग्राहकताकत्वेऽपि तदप्रयुक्तप्रामाण्यघटकधर्मिग्राहकताकत्वेन उक्तविशेषणेन वारणासम्भवात् तदग्राह्यतयापि बाधस्य निष्प्रत्यूहत्वादिति वदन्ति।

*विषयग्राहकतायाः* = विषयविषयतायाः। *ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वादिति*। ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकाप्रयुक्तत्वादित्यर्थः। एकसामग्र्या एव ज्ञानविषयभासकतया यथाश्रुतासङ्गतेः। अयम्भावः, व्यवसायसामग्र्याः न ज्ञानभानप्रयोजकत्वेन घटादिरूपविषयग्राहकता, ज्ञानं गुण इत्याकारकघटज्ञानादिबोधेऽपि ज्ञानभानप्रयोजकसत्वेन घटादिभानप्रसंगात्। अपितु घटतत्सन्निकर्षादिघटितसमुदायत्वेनैव तथात्वमिति। *विषयग्राहकताप्रयोजकस्यैवेति*= विषयभानप्रयोजकत्वावच्छिन्नस्यैवेत्यर्थः। *ज्ञानग्राहकताप्रयोजकत्वात्*=ज्ञानभानप्रयोजकत्वात्। विषयभासकत्वेन ज्ञानभानप्रयोजकत्वं विपरीतवत् तदा न सम्भवेद् यदि विषयभानप्रयोजकसमुदायसत्त्वेऽपि कदाचित् ज्ञानभानं न स्यात्, नचैवमित्याह *सर्वस्यैवेति*। आत्मेति दृष्टान्तविषयोक्तम्।

---

(प्रभा) सर्वधीयाथार्थ्यमते=प्रभाकरमते। स्वप्रकाशात्मकेति=इदं ज्ञानमप्रमेतिव्यवसायसामग्र्या इत्यर्थः। उक्तविशेषणेनेति = ज्ञानग्राहकताप्रयुक्तं विषयग्राहकत्वं यस्यास्तादृशसामग्रीविशेषणेनेत्यर्थः। वदन्ति। अत्र केचिदित्यारभ्य वदन्तिपर्यन्तं पक्षधरमिश्रमतमुपन्यस्याग्रे तन्नेत्यादिना निराकरिष्यते।

पक्षधरमिश्रमतं निराकर्त्तुमुपक्रमते तन्नेत्यादिना। तत्प्रयोजकाप्रयुक्तत्वादिति = विषयभानप्रयोजकाप्रयुक्तत्वादित्यर्थः। तथाच ज्ञानभानप्रयोजकत्वावच्छिन्ना या विषयभानप्रयोजकता तत्प्रयुक्तत्वं विषयभाने नास्ति, एवञ्च गुरुमते व्यवसायसामग्र्याः साध्याघटकतया साध्याप्रसिद्धिरिति भावः। यथाश्रुतासङ्गतेरिति = विषयग्राहकताया ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वादिति यथाश्रुतदीधितेरसङ्गतिरित्यर्थः। एकसामग्र्या एव ज्ञानद्वयभासकतया विषयग्राहकतायां ज्ञानग्राहकताप्रयोजकप्रयुक्तत्वस्यानिवार्य्यत्वात्। ननु यद्येकयैव सामग्र्या ज्ञानविषययोर्भानं तर्हि ज्ञानभानप्रयोजकत्वेन विषयभानप्रयोजकप्रयुक्तत्वमपि विषयभाने दुर्वारमिति गदाधरोक्तार्थेऽप्यसङ्गतिरित्याशङ्क्य समाधत्ते अयम्भाव इत्यादिना। अग्रे स्पष्टम्।

( दी० ) अस्तु वा तत्र यथातथाभिधानम् ।

---

( गा० ) ननु यत्र ग्रहे ज्ञानविषययोरेकभानप्रयोजकत्वेन अपरभानप्रयोजकता तादृशी सामग्री विवक्षणीया, एवञ्च स्वप्रकाशकसामग्र्या विषयभासकत्वेन ज्ञानभासकत्वादेव संग्रहः । मिश्रमते घटज्ञानमितिशाब्दस्थले यथा ज्ञानभासकताया न घटभासकता, घटपदासत्त्वेऽपि तद्भानप्रसङ्गात्, तथा घटभासकत्वेनापि न ज्ञानभासकता, ज्ञानपदासत्त्वेऽपि तद्भानप्रङ्गादित्यत आह अस्तु वेति । *तथाभिधानम्*=स्वप्रकाशसामग्रीसाधारणविशेषणाभिधानम् ।

---

(प्रभा) अस्तु वा तत्र यथातथाभिधानमिति दीधितिमवतारयति नन्वित्यादि । यत्र ग्रहे इति=यादृशसामग्रीजन्यज्ञानग्रहे इत्यर्थः । ज्ञानविषययोरेकभानेति । ज्ञानविषययोर्मध्ये यदेकतरं ज्ञानं विषयो वा तस्य यत् भानं तन्निष्ठविषयतेति यावत् । तत्प्रयोजकत्वावच्छिन्ना याऽपरनिष्ठविषयता तत्प्रयोजकता तदाश्रयसामग्रीति व्युत्पत्तिः । तथाच ज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकत्वावच्छिन्नविषयनिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताकत्व-विषयविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकताकत्व-एतदन्यतरत्वसामग्रीजन्यग्रहविषयत्वं साध्यमिति पर्यवसितम् । ज्ञानविशिष्टसामग्रीजन्यग्रहविषयत्वमित्यनुगमः । वै० स्वविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकत्वावच्छिन्नविषयविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताकत्वस्वविषयविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताकत्वावच्छिन्नस्वभानप्रयोजकताकत्व एतदन्यतरसम्बन्धेनेति यावत् । गुरुमते सङ्गमयति एवञ्चेति । एतादृशविवक्षणे चेत्यर्थः । स्वप्रकाशकसामग्र्या इति=स्वप्रकाशजनकसामग्र्या इत्यर्थः । विषयभासकत्वेन ज्ञानभासकत्वादेवेति=विषयभानप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकत्वादेवेत्यर्थः । संग्रह इति=साध्यघटकत्वमिति भावः । तथाच गुरुमतसिद्धव्यवसायसामग्री विषयभानप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकताकसामग्रीपदेन संगृहीता । अथ च तज्जन्यव्यवसायात्मकग्रहविषयत्वस्य व्यवसायगतप्रमात्वे सत्त्वेन सङ्गतिरिति भावः । मुरारिमिश्रमते घटज्ञानमितिशाब्दसामग्रीं वारयति मिश्रमते इति । दृष्टान्तयति यथेत्यादि । ज्ञानभासकत्वेन न घटभासकतेति=ज्ञानभानप्रयोजकत्वावच्छिन्नघटभानप्रयोजकतेत्यर्थः । तत्र हेतुमाह घटपदासत्त्वेऽपीत्यादि । तद्भानप्रसङ्गादिति=घटभानप्रसङ्गादित्यर्थः । दार्ष्टान्तमुपादत्ते घटभासकत्वेनेत्यादि । घटभानप्रयोजकत्वावच्छिन्ना न ज्ञानभानप्रयोजकता । अत्र हेतुमाह ज्ञानपदासत्त्वेऽपीत्यादि । तद्भानप्रङ्गादिति=ज्ञानभानप्रसङ्गादित्यर्थः । तथाच समनैयत्यं नास्तीतिभावः । इत्यत इति=उक्तरीत्या सर्वसामञ्जस्ये किञ्चिदनुपपत्त्यभावादिति भावः । दीधितौ यथातथाभिधानमिति=एकप्रयोजकप्रयोज्यज्ञानभानविषयभानप्रयोजकतावती या सामग्रीत्यादिरीत्योभयसाधारणाभिधानमित्यर्थः । एतदेवाग्रे दुर्वचं कृत्वा वक्ष्यति दीधितिकारः ।

( दी० ) तथापि मिश्रमते दुर्वचम् ज्ञानविषयग्राहकतयोरनतिप्रसक्तमेकप्रयोजकप्रयोज्यत्वम् ।

---

( गा० ) दुर्वचमिति । यथाश्रुतस्य योग्यताज्ञानादिकमादाय घटज्ञानमितिशाब्दबोधादिगततदुभयभानसाधारणत्वात् । एकप्रयोजकत्वेन अपरप्रयोजकताविवक्षणे च अनुव्यवसायसामग्रीघटकव्यवसायादेर्ज्ञानविषययोरेकतरभासकत्वेन अपरभानप्रयोजकत्वे केवलज्ञानग्रहे विषयस्य केवलविषयग्रहे च ज्ञानस्य भानप्रसङ्गाद् विनिगमनाविरहाच्च तदुपगमासम्भवेन तादृशसामग्र्या एवासंग्रहात् । एकधर्मपुरस्कारेण उभयभानप्रयोजकत्वविवक्षणे च घटज्ञानमित्यादौ योग्यताविशेषज्ञानादेःतादृशज्ञानत्वादिना उभयभानप्रयोजकतया बाधवारणमशक्यम् । फलोपधानरूपप्रयोजकत्वविवक्षया एकैकहेतुसाधारणरूपेण ज्ञानादिभानप्रयोजकत्वनिराकरणे अनुव्यवसायादिसामग्रीघटकव्यवसायादेरपि घटज्ञानत्वादिना घटज्ञानादिभानाप्रयोजकतया व्यवसायमनस्संयुक्तसमवायादिसमुदायपर्याप्तधर्मस्यैव ज्ञानविषयोभयभानप्रयोजकतावच्छेदकतया तादृशसामग्रीसंग्रहे तुल्ययुक्त्या घटज्ञानमित्यादिशाब्दबोधनिष्ठतदुभयभानेऽपि घटपदज्ञानपदादिसमुदायपर्याप्तधर्मावच्छिन्नस्य प्रयोजकतया न तत्सामग्रीवारणसम्भव इति भावः ।

---

( प्रभा ) दीधितौ तथापीति = यथातथाभिधानेनार्थादेकभानप्रयोजकप्रयोज्यज्ञानभानविषयभानप्रयोजकसामग्रीत्यभिधानेनोक्तानुपपत्तिपरिहारेऽपीत्यर्थः । मिश्रमते=मुरारिमिश्रमते इत्यर्थः । दुर्वचमिति=दुर्निरूप्यमित्यर्थः । दुर्वचत्वं निरूपयति ज्ञानविषयग्राहकतयोरनतिप्रसक्तमेकप्रयोजकप्रोज्यत्वमित्यादिना । ज्ञानविषयग्राहकतयोरिति=ज्ञानग्राहकताविषयग्राहकतयोरित्यर्थः । तथाच ज्ञानविषयता-विषयविषयतेत्युभयगतमनतिप्रसक्तं सदेकप्रयोजकप्रयोज्यत्वं दुर्वचमिति भावः । कथमनतिप्रसक्तं सद् दुर्वचमित्यतो दुर्वचत्वसाधिकामतिप्रसक्तिन्दर्शयति यथाश्रुतस्येत्यादिना । यथाश्रुतस्येति = एकप्रयोजकप्रयोज्यत्वस्येत्यर्थः । योग्ताज्ञानादिकमादायेति=विषयित्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितज्ञानत्वावच्छिन्नविशेष्यताशालियोग्यताज्ञानादिकमित्यर्थः । आदिपदात्तात्पर्यपरिग्रहः ।

तदुभयभानसाधरणत्वादिति = ज्ञानभानविषयभानसाधारणत्वादित्यर्थः । यथाश्रुतस्येति पूर्वेण सम्बन्धः । तथा च एकप्रयोजकप्रयोज्यज्ञानभानविषयभानप्रयोजकसामग्रीपदेन घटज्ञानमितिशाब्दसामग्र्या अपि संग्रहेण साध्यघटकतया तज्जन्यग्रहविषयत्वस्य तत्प्रमात्वेऽसत्त्वाद् बाध इति भावः । स्वोक्तिपक्षे दोषमुद्घाटयति एकप्रयोजकत्वेनापरप्रयोजकताविवक्षणे चेति । विषयभानप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकता —ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभानप्रयोजकता—एतदन्यतरवत्सामग्रीजन्यग्रहविषयत्वं साध्यमिति । एकधर्मपुरस्कारेणेति=योग्यताज्ञानत्वादिनेत्यर्थः । एकैकहेतुसाधारणेति = योग्यताज्ञानत्वादिनेत्यर्थः ।

( दी० ) किञ्च घटज्ञानवन् घटेच्छावत्त्वादित्याद्यनुमित्या तद्ग्रहाद् बाधः । नचात्र ज्ञानग्राहकतायां व्यापकत्वं घटग्राहकतायां तदवच्छेदकत्वं प्रयोजकम्, इति नैकमुभयग्राहकताप्रयोजकम्. प्रमापदेऽपि शक्तितदवच्छेदकत्वयोरेव ज्ञानविषयग्राहकतायाम् प्रयोजकत्वात् ।

---

(गा०) ननु यत्र ज्ञानं विषयभानं ज्ञानभानाप्रयोजकाप्रयुक्तं तज्ज्ञानसामग्र्येव विवक्षणीया, घटज्ञानमित्यत्र ज्ञानभानाप्रयोजकं घटपदं घटभाने प्रयोजकमित्यत एव तद्व्युदासः । अनुव्यवसाये विषयभानप्रयोजको व्यवसाय एव, सच न ज्ञानभानाप्रयोजक इति तत्सामग्रीसंग्रहः । स्वप्रकाशमते व्यवसायसामग्रीत्वेन व्यवसायस्य सर्वाण्येव कारणानि अविशेषेण ज्ञानभानप्रयोजकानि, अतो न तदतिरिक्तस्य विषयभानेऽपेक्षेति तत्सामग्री-संग्रह इत्यतो दूषणान्तरमाह *किञ्चेति* ।

यद्यपि विषयोपरक्तज्ञानानुमितिस्थले एकस्य परामर्शादेरेव विधेयतया ज्ञानस्य, विधेयतावच्छेदकतया विषयस्य भासकता ननु व्यापकतायास्तदवच्छेदकत्वस्य च ज्ञानं विधेयतत्तावच्छेदकविषयकानुमितौ पृथक् कारणम्, तथापि प्रयोजकभेदं विना विधेयादिविषयतानां वैचित्र्यानुपपत्त्या परामर्शीयतद्विषयनिष्ठविलक्षणविषयतानाम् अनुमितौ विलक्षणतत्तद् विषयभानप्रयोजकत्वमावश्यकम्, इत्युक्तानुमितिसामग्र्यव्याप्तिरित्याशङ्क्ते. *नचेति* । *व्यापकत्वं* व्यापकत्वेन परामर्शविषयत्वम् । *तदवच्छेदकत्वम्*=व्यापकतावच्छेदकत्वेन तद्विषयत्वम् । *शक्तितदवच्छेदकत्वयोः*=शक्यत्वतदवच्छेदकत्वावच्छिन्नज्ञानविषयत्वयोः । *प्रयोजकत्वात्*=तुल्ययुक्त्या प्रयोजकत्वापातात् । तथाचोक्तयावत्पदव्यावृत्त्यसङ्गतिरिति भावः ।

ननु शक्यतावच्छेदकेऽपि शक्त्युपगमेन शक्यतया तद्भानमेव शाब्दबोधे तद्भानप्रयोजकम् .

---

( प्रभा ) विवक्षणीयेति=साध्यघटकतया विवक्षणीयेत्यर्थः । न तदतिरिक्तस्य विषयभानेऽपेक्षेति सामग्रीवारणम् ।

व्यापकत्वेन परामर्शविषयत्वमिति = व्यापकत्वप्रकारकपरामर्शविषयत्वमित्यर्थः । व्यापकतावच्छेदकत्वेन तद्विषयत्वमिति=व्यापकतावच्छेदकत्वप्रकारकपरामर्शविषयत्वमित्यर्थः । तद्भानप्रयोजकमिति । अयम्भावः, अनुमितिस्थले हि वह्नित्वादौ व्यापकताया असत्त्वेन व्यापकतानवच्छेदकत्वरूपपरामर्शीयविषयतायाः प्रयोजकता नाङ्गीक्रियते, शाब्दबोधस्थले तु तादृशप्रयोज्यप्रयोजकभावाङ्गीकारेऽपि शक्त्या एव प्रयोजकतया शक्यतानवच्छेदकरूपेण भानवारणसम्भवात् तादृशप्रयोज्यप्रयोजकभावाङ्गीकारो व्यर्थ एव । एवञ्च एकस्या एव शक्तेर्ज्ञानभानविषय-

(दी०) अव्यापकस्यानुमितिविषयत्वेऽतिप्रसङ्गस्य व्यापकतावच्छेदकत्वेनेव, अशक्यस्यापि शाब्दधीविषयत्वे अतिप्रसङ्गस्य शक्यतावच्छेदकत्वेनैव निराससम्भवात्।

शक्यतावच्छेदके शक्तिसत्त्वेऽपि न तस्याः तद्बोध उपयोगः,

---

(गा०) शक्यतया अभातस्यापि शाब्दबुद्धौ भानोपगमे गवादिपदात् सास्नादेरपि गोत्वादिवच्छाब्दबोधे भानापत्तेरित्यत आह *अव्यापकस्येति*। *अव्यापकस्य*=व्यापकतया अभातस्य। *अनुमितिविषयत्वे*=अनुमितौ धर्मितावच्छेदकीयप्रकारताविलक्षणप्रकारत्वे। *अतिप्रसङ्गस्य व्यापकतावच्छेदकत्वेनेव*=परामर्शे व्यापकतावच्छेदकतया भानस्य नियामकत्वेन यथा वारणम्। *अशक्यस्य*=शक्यतयाऽभातस्य। *शक्यतावच्छेदकत्वेन*=शक्यतावच्छेदकतया शक्तिज्ञाने भानस्य प्रयोजकतयैव।

ननु व्यापकतावच्छेदके वह्नित्वादौ धूमादिव्यापकता नास्तीति व्यापकतावच्छेदकतया भानं विधेयतावच्छेदकतया भानप्रयोजकम्। शक्यतावच्छेदके च सर्वत्र शक्तिरस्ति। तस्य पदबोध्यतया तेन रूपेण भगवदिच्छायामवश्यं भानात्, अतो नोभयत्र साम्यमित्यत आह *शक्यतावच्छेदक इति*। उपयोगः न स्वीक्रियत इति शेषः। गोत्वादिविशिष्टविशेष्यकशक्तिग्रहस्य गोत्वांशे शक्यतावगाहिनः

---

(प्रभा) भानप्रयोजकतया घटज्ञानमितिशाब्दसामग्र्यास्साध्यघटकतया तज्जन्यग्रहविषयत्वस्य च प्रमात्वेऽसत्त्वाद् बाध इत्यतो यावत्पदं सार्थकन्तथा च न मिश्रमते यावत्पदवैयर्थ्यमिति भावः। ईदृशप्रयोज्यप्रयोजकभावं दर्शयितुमाह शक्यतयेति। अभातस्यापीति। शक्तिज्ञानीयावच्छेदकताभिन्नविषयत्वाभावविशिष्टस्यापि तद्धर्मस्येत्यर्थः। शाब्दबुद्धौ भानोपगमे=शाब्दबोधीयप्रकारत्वाभिन्नविषयताविशिष्टत्वाभ्युपगमे इत्यर्थः। यथा वारणमिति। अनुमितीयधर्मितावच्छेदकनिष्ठप्रकारताविलक्षणतद्धर्मप्रकारताम्प्रति परामर्शीयव्यापकतावच्छेदकत्वरूपविषयता प्रयोजिकेतिभावः। व्यापकतावच्छेदकतयेति=अनुमितीयविधेयतावच्छेदकत्वाख्यविषयताप्रयोजिका इति भावः। पदबोध्यतयेति=पदजन्यप्रतीतिविषयतयेत्यर्थः। तेन रूपेण=गोत्वादिरूपशक्यतावच्छेदकेन रूपेणेत्यर्थः। नोभयत्रेति=अनुमितौ शाब्दबोधे चेत्यर्थः। साम्यमिति=तुल्यतेत्यर्थः। उत्तरयति दीधितौ शक्यतावच्छेदके इत्यादि। तस्या इति=शक्तेरित्यर्थः। तद्बोधे इति=शक्यतावच्छेदके शक्तिर्न स्वीक्रियते इति। गोपदाद् गोत्वावच्छिन्नो बोद्धव्यः इत्याकारकशक्तिः। गोत्वविशिष्टेति=गोत्वविशिष्टो गोपदवाच्य इत्याकारकस्येत्यर्थः। गोत्वांशे शक्यत्वानवगाहिनः तादृशशक्तिज्ञानसत्त्वेऽपि स्वरूपतो गोत्वादिभाने न काऽप्यनुपपत्तिः। पूर्वोक्तप्रयोज्यप्रयोजकभावेनातिप्रसङ्गस्यापि वारणाच्छक्तिज्ञाने गोत्वस्यानुल्लेखादित्यत आह गोत्वांशे शक्यतावगाहिन इति। गोपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितभगव-

( गा० ) स्वरूपतो गोत्वादिविषयकत्वानुपपत्त्या स्वरूपतो गोत्वाद्यवगाहिशाब्दबोधहेतुत्वासम्भवात् तदवच्छेदेन शक्त्यवगाहिनस्तद्धर्मितावच्छेदकज्ञानस्यैव तथात्वादिति भावः ।

यद्यपि पदधर्मिकगोत्वविशिष्टवाचकताग्रहस्य स्वरूपतो गोत्वप्रकारकत्वं सम्भवति, तथापि गोत्वविशिष्टवाचकत्वस्य गोत्ववाचकत्वगर्भस्य गोत्वप्रकारकत्वावच्छिन्नगोविषयकत्वविशेषितबोधजनकत्वप्रकारकभगवत्संकेतविषयत्वरूपस्य धियो हेतुत्वे बोधविशेषणतापन्नगोविशेषितविषयिताविशेषणतापन्नप्रकारित्वांशे विशेषणतया विषयत्वरूपस्य वाच्यत्वस्य गोत्वांशे भानं गोत्वस्य शाब्दधीप्रकारतानियामकं वाच्यम्, गोत्वावच्छेदेन वाच्यताज्ञानस्य हेतुत्वे च गोत्वांशे

---

( प्रभा० ) द्वितीयविशेष्यतारूपशक्तेरवच्छेदकतासम्बन्धेन गोत्वेऽवगाहिनः । स्वरूपतो गोत्वादिविषयकत्वानुपपत्त्येति = शक्तिज्ञाने उल्लिख्यमानतया गोत्वादिजातेर्गोत्वत्वेनैव रूपेण भानादिति । तथाचोक्तशक्तिज्ञानं न निरवच्छिन्नगोत्वविषयकम् अनुल्लिख्यमानजातेरेव स्वरूपतया भानेन उल्लिख्यमानायास्तादृशजातेस्स्वरूपतो भानासम्भवादिति भावः ।

ननु स्वरूपतो गोत्वादिविषयकत्वानुपपत्तौ को दोष इत्यत आह स्वरूपता गोत्वाद्यवगाहिशाब्दबोधहेतुत्वासम्भवादिति । अर्थाद् येन रूपेण यद्विषयकशक्तिज्ञानं तेनैव रूपेण तद्विषयकोपस्थितिस्तेनैव रूपेण तद्विषयकशाब्दबोध इति नियमोऽवश्यमङ्गीकार्यः । अन्यथाऽन्यरूपेण शक्तिज्ञाने भातस्य पदार्थस्यान्यरूपेण भानापत्तिः । तथाच तद्रूपावच्छिन्नप्रकारताशालिबोधम्प्रति तद्रूपावच्छिन्नप्रकारताकशक्तिज्ञानं कारणं वाच्यमन्यथा पशुपदस्य लोमवल्लाङ्गूलावच्छिन्ने शक्तिरितिज्ञानेऽपि प्रमेयत्वेन लोमभानापत्तिः । नन्वेवं स्वरूपतो गोत्वावगाहिशाब्दबुद्धित्वावच्छिन्नम्प्रति किं कारणमित्यत आह तदवच्छेदेन शक्त्यवगाहिनस्तद्धर्मितावच्छेदकज्ञानस्यैव तथात्वादिति । तदवच्छेदेन = गोत्वावच्छेदेनेत्यर्थः । शक्त्यवगाहिनः = शक्तिविषयकत्वस्येत्यर्थः । तद्धर्मितावच्छेदकेति = गोत्वधर्मितावच्छेदककेत्यर्थः । ज्ञानस्यैव = शक्तिज्ञानस्यैवेत्यर्थः । तथात्वादिति = स्वरूपतो गोत्वावगाहिशाब्दबोधहेतुत्वसम्भवादित्यर्थः । तथाच निरवच्छिन्नगोत्वनिष्ठप्रकारताकशाब्दबुद्धित्वावच्छिन्नम्प्रति गोत्वावच्छेदेन गोपदशक्त्यवगाहिज्ञानं कारणमिति समुदितार्थः । गोत्वधर्मितावच्छेदकज्ञानस्येति = गौर्गोपदशक्या इत्याकारकगोत्वधर्मितावच्छेदककशक्तिज्ञानं कारणमिति । अवच्छेदकत्वसम्बन्धेन तादृशशक्तिज्ञाने गोत्वस्य धर्मितावच्छेदकतया किञ्चिद्रूपेण ज्ञानमिति । शक्यतावच्छेदके शक्तिस्वीकारे उक्तदोषान् वारयति यद्यपीति । तथाचोक्तशाब्दबोधसामग्र्यास्साध्यघटकत्वं सम्भवति इति बोधवारणाय यावत्पदमिमश्रमतेनानर्थकमित्यभिप्रायः । गोपदं गोरूपार्थवाचकमित्याकारकस्य शक्तिज्ञानस्येत्यर्थः । स्वरूपतो गोत्वप्रकारकत्वमिति = निरवच्छिन्नगोत्वप्रकारकत्वमित्यर्थः । गोत्वस्य, विषयितया विशेषणत्वेन स्वरूपतो भानमिति । स्वरूपतस्सम्भवतीति = विषयितासम्बन्धेनोल्लिख्यमानजातेःस्वरूपतो भानसम्भवादिति । गोत्वनिष्ठ-

( दी० ) विनापि लक्षणां लक्ष्यतावच्छेदकस्येव विनापि शक्तिं तस्य वोधसम्भवात् ।

---

(गा०) वोधविशेषणतापन्नविषयिताविशेषणधर्मिविषयतावच्छेदकतारूपशक्यतावच्छेदकताभानं तद्भाननियामकमिति तन्मते गोत्वविशिष्टगोचरशाब्दधीहेतुतायां विषयितायां गोविशेषितत्वांशनिवेशाधिक्येन गौरवम् । इतरांशस्योभयमतेऽपि तुल्यशरीरत्वात् । तदनिवेशे तु भवतां धर्म्यंशे शक्तिभ्रमोऽनपेक्षणीयत्वापत्तेः ।

ननु शाब्दवोधीयसंसर्गतान्यविषयतायाः स्वांशे वृत्तिज्ञानप्रयोज्यतानियमात्, शक्यतावच्छेदकांशेऽपि शक्तिज्ञानस्य प्रयोजकत्वमावश्यकमित्याशंक्य तन्नियमं निराकरोति *विनापीति* । लक्षणाम्=स्वांशे लक्षणाग्रहम् । शक्तिम्=स्वांशे शक्तिग्रहम् । तस्य=शक्यतावच्छेदकस्य ।

ननु पशुत्वेन गौरस्मात् पदाद् वोद्धव्य इत्येतादृशाधुनिकसङ्केतात् पशुत्वेनैव गोवोधो भवति नतु तादृशसंकेतविषयतावच्छेदकेनापि गोत्वेनेति नियमाद् विशेषणांशेऽपि सङ्केतविषयत्वभानं शाब्दधीविषयत्वप्रयोजकमवश्यं वाच्यम् । न च गोत्वस्य गोविशेषणतया उक्तसङ्केतविषयतया तावतापि नोक्तातिप्रसङ्गवारणसम्भव इति वाच्यम् ? पदजन्यवोधविषयत्वेन विषयतारूपवाच्यत्वभानस्य प्रयोजकत्वोपगमेन तद्वारणसम्भवादिति चेत्, अस्त्वेवम् । एवमपि विशेषणतया वाच्यत्वस्य विशेष्यतया वाच्यत्वविलक्षणस्य पदार्थतावच्छेदकभानप्रयोजकतया प्रमापदघटितसामग्र्या निरुक्तरूपताया दुरुपपादतैव ।

---

( प्रभा ) निरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रकारितात्वावच्छिन्नविशेष्यित्वावच्छिन्नप्रकारितानिरूपितगोनिष्ठावच्छेदकताकविशेष्यित्वनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितवोधनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितजनकतात्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपदनिष्ठविशेष्यताशालिज्ञानं कारणमिति ।

अवच्छेदकत्वसम्बन्धावच्छिन्नवोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वरूपवाच्यत्वभानस्येत्यर्थः ।

निरुक्तरूपताया इति । एकप्रयोजकत्वेनापरप्रयोजकत्वरूपताया असम्भवात्तथा च यावत्पदस्यासन्निवेशेऽपि न प्रमापदमादाय सिद्धसाधनमितिभावः । विशेष्यताप्रकारतोपनायकतज्ज्ञानेति । विशेष्यताप्रकारकं तज्ज्ञानं विशेष्य इत्याकारकम् । प्रकारताप्रकारकं तज्ज्ञानं प्रकार इत्याकारकम् । तत्पदवैयर्थ्यमिति = यावत्पदवैयर्थ्यमित्यर्थः ।

( दी० ) भट्टमतेऽसम्भवाच्च । ज्ञाततालिङ्गकानुमित्यापि विषयग्रहे व्यापकतावच्छेदकत्वस्यैव नियामकतया वक्ष्यमाणत्वात् ।

नच ज्ञाततालिङ्गकत्वमेव तत्प्रयोजकम् । अनुमितिसामग्र्याः साध्यग्राहकत्वे लिङ्गविशेषस्य व्यभिचारेणातन्त्रत्वात् । ज्ञाततामात्रेण ज्ञानमात्रानुमानसम्भवात् विशेषस्य तथा स्वभावकल्पनायां मानाभावाच्च ।

---

( गा० ) ननु यावत्पदादाने माभूत् प्रामाण्यस्य प्रमापदग्राह्यतया सिद्धसाधनम् , तथापि विशेष्यताप्रकारतोपनायकतज्ज्ञानकालीनानुव्यवसायसामग्रीग्राह्यतया सिद्धसाधनं दुर्वारमेव, तादृशसामग्र्या अपि विषयग्रहे व्यवसायातिरिक्तानपेक्षणात् । अतो न तत्पदवैयर्थ्यमतो दूषणान्तरमाह *भट्टेति* । *असम्भवात्* = प्रामाण्यग्राहकतया अभिमताया अनुमितिसामग्र्या उक्तविशेषणाक्रान्तत्वासम्भवात्, तदेव दर्शयति *ज्ञाततेति* । *व्यापकतावच्छेदकत्वस्येति* । विषयगर्भप्रमात्वांशे व्यापकतावच्छेदकत्वग्रहस्येत्यर्थः । *वक्ष्यमाणत्वादिति* । घटो घटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञाततावत्त्वात् इत्यनुमानस्यैव प्रामाण्यग्राहकतया वक्तव्यत्वात्, तत्र च ज्ञानस्य साध्यत्वाद् विषयस्य तु तदवच्छेदकत्वादितिभावः ।

*ज्ञाततालिङ्गकत्वम्* = तल्लिङ्गकपरामर्शत्वावच्छिन्नजन्यत्वम् । *तत्प्रयोजकम्* =अनुमितौ विषयविशिष्टज्ञानभानप्रयोजकम् । एवकारेण व्यापकतावच्छेदकत्वभानस्य विषयभानप्रयोजकत्वव्यवच्छेदः । *लिङ्गविशेषस्य* = लिंगविशेषावगाहिपरामर्शजन्यत्वस्य । *व्यभिचारेण*=व्यभिचारादिना तल्लिंगकपरामर्शत्वेन हेतुताया असम्भवेन । *ज्ञाततामात्रेण*=शुद्धज्ञानत्वेन व्यापकतावगाहिपरामर्शबलेन । *ज्ञनमात्रेति* । विषयानवच्छिन्नस्यैव ज्ञानस्यानुमितिसम्भवादित्यर्थः ।

ननु स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तेर्लिङ्गविशेषघटिततया लिङ्गभेदेन परामर्शहेतुताभेद आवश्यकः । व्यभिचारोऽपि कथंचिद् विचारणीयः । तथाच ज्ञाततालिङ्गकपरामर्शस्य शुद्धज्ञानत्वावच्छिन्नव्याप्त्यवगाहिनोऽपि विषयोपरक्तज्ञानानुमितित्वमेव जन्यतावच्छेदकमुपगन्तव्यमिति तद्घटितसामग्र्यां ज्ञानभानप्रयोजकमात्रप्रयोज्यविषयग्राहकताकत्वमक्षतमेवेत्यत आह *विशेषस्येति* । शुद्धज्ञानव्याप्यतया ज्ञाततारूपलिङ्गविशेषावगाहिपरामर्शस्येत्यर्थः । *तथा स्वभावकल्पनायाम्* = विषयविशिष्टज्ञानविषयकत्वावच्छिन्नजनकत्वकल्पनायाम् । *मानाभावादिति* । व्यवसायानन्तरं द्वित्रक्षणमध्य

---

( प्रभा ) व्यभिचारेणेति । धूमलिङ्गकपरामर्शाभावेऽपि आलोकलिङ्गकपरामर्शादिनानुमितिसम्भवात् परस्परजन्ये व्यभिचार इति भावः ।

( दी० ) ज्ञातताविशेषत्वेन ज्ञानविशेषजन्यत्वानुमानञ्च घटेच्छात्वेन घटज्ञानजन्यत्वानुमानेन समानयोगक्षेमम्। तदादिपदेन प्रकरणात्

---

( गा० ) एव विषयोपरक्तज्ञानभानस्य आनुभविकतया कालान्तरे शुद्धज्ञानव्याप्यतया ज्ञाततावगाहिपरामर्शात् शुद्धज्ञानानुमितिनिर्वाहाय तादृशपरामर्शस्य पृथक् कारणताया आवश्यकत्वे विषयोपरक्तज्ञानानुमितौ तस्य हेत्वन्तरकल्पनं कालविशेषस्य तत्सहकारिताया अतिप्रसंगभङ्गाय कल्पनं चापेक्ष्य ज्ञानस्य ऐन्द्रियकताया एव कल्पयितुं युक्तत्वादिति भावः।

ननु घटवृत्तिघटत्वप्रकारकज्ञाततायास्तादृशज्ञाततात्वेन घटविशेष्यकघटत्वप्रकारकत्वविशिष्टज्ञानजन्यत्वरूपसाध्यानुमापकत्वात्, तत्र च व्यापकतावच्छेदकत्वमेव उभयभानप्रयोजकमिति न ज्ञानभानाप्रयोजकं विषयभानप्रयोजकमित्याशङ्कां निरस्यति *ज्ञातताविशेषत्वेनेति*। *समानयोगक्षेममिति*। अत्राप्यनुमाने विषयस्येव ज्ञानस्यापि साध्यतावच्छेदकत्वात्, अवच्छेदकताया विशेषादरे च ज्ञाततालिंगकानुमानेऽपि तद्विशेषसत्त्वादैकसामग्रीसंग्रहोऽन्यथा-रणञ्चाशक्यमितिभावः। प्रमापदस्थले एकेन पदेन ज्ञानविषयोभयग्रहात् सिद्धसाधनस्य यावत्पदेन वारणमित्युक्तं तदनुसारेण प्रमात्वाग्राहकमपि तादृशम् पदमस्ति तद्ग्राह्यतया बाधस्य दुर्वारतामाह *तदादीति*।

तदादेर्बुद्धिस्थत्वेनैव बोधकता ननु घटज्ञानत्वादिनेति भ्रमं निराकर्तुमाह *प्रकरणादिति*। विशेषरूपेण बोधौपयिकप्रकरणसहकारादित्यर्थः। प्रकरणञ्च प्रकृतत्वम्, विशेषरूपेण वक्तृबुद्धिस्थत्वमिति यावत्। सामान्यतो वक्तृबुद्धिस्थत्वेन शक्तमपि सर्वनाम विशेषरूपेण बोधयति, सहकारिविशेषापेक्षयाऽतिप्रसङ्गनिरासस्सम्भवादिति भावः। विवेचितं चेदमधिकमन्यत्र।

---

( प्रभा ) अतिप्रसङ्गभङ्गायेति। शुद्धज्ञानव्याप्यतया ज्ञाततावगाहिपरामर्शस्य शुद्धज्ञानानुमितिम्प्रति कारणतया विषयविशिष्टानुमितिम्प्रति च कारणतया द्वित्रिक्षणातिरिक्तकालेऽपि यथा ज्ञाततालिङ्गकपरामर्शात् शुद्धज्ञानानुमितिस्तथा विषयोपरक्तानुमितिरपि अनिवार्या स्यादतस्तादृशातिप्रसङ्गवारणाय द्वित्रिक्षणरूपकालस्यापि सहकारिकारणत्वं कल्पनीयमिति भावः। तत्र च व्यापकतावच्छेदकत्वमेव उभयभानप्रयोजकमिति = जन्यत्वस्य साध्यत्वे तत्र व्यापकत्वं ज्ञानस्यापि तत्र विशेषणत्वेन घटादिरूपविषयस्यापि तत्र विशेषणत्वेनोभयोस्साध्यतावच्छेदकत्वाद् व्यापकतावच्छेदकत्वस्योभयत्रापेक्षेति एकं व्यापकतावच्छेदकं विषये ज्ञाने चोभयत्र प्रयोजकमिति भावः।

विशेषादरे चेति = ज्ञाने व्यापकतावच्छेदकत्वं विषये व्यापकतावच्छेदकतावच्छेदकत्वं प्रयोजकमित्यर्थः।

सहकारिविशेषापेक्षयेति = प्रकरणादिरूपसहकारिविशेषापेक्षयेत्यर्थः।

( दी० ) पदान्तरेण वा लक्षणयाआधुनिकसङ्केतेन वा घटविषयक ज्ञानोपस्थापकेन प्रामाण्याग्रहाद् बाधाच्च ।

एतेन यादृगसामग्र्या विषयग्राहकत्वव्याप्तं ज्ञानग्राहकत्वम् तादृशयावद्ग्राह्यत्वमपि प्रत्युक्तम् ।

अत्र वदन्ति-तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद्भट्टमतसिद्धं तद्भिन्नार्थकमग्राहकान्तम् ।

---

( गा० ) *पदान्तरेण*=सर्वनामातिरिक्तेनापि घटादिपदेन । तादृशपदस्य तद्रूपावच्छिन्नावाचकस्य कया वृत्त्या तद्रूपावच्छिन्नबोधकत्वमित्याकाङ्क्षायामाह *लक्षणया आधुनिकसंकेतेन वेति* । लक्ष्यार्थप्रकारे लक्षणाग्रहस्यापेक्षितत्वेऽपि तत्र तदितरग्रहस्याप्यनपेक्षितत्वात् न विषयभानेऽधिकापेक्षेतिभावः ।

नच तत्र लक्ष्यतावच्छेदकग्रहस्यापेक्षया विषयग्रहेऽधिकस्य अपेक्षणीयतैवेतिवाच्यम् ? लक्षणाग्रहस्य प्रकारतयैव तीरत्वादीनां गंगापदजन्यधीप्रकारत्वोपपत्तेस्तत्र शक्यप्रवाहादिसम्बद्धतावच्छेदकत्वग्रहस्यानुपयोगात् । पश्वादिपदाद्भ्रान्तपुरुषस्य शक्त्या गोत्वादिप्रकारकबोधानुदयात् लक्षणाप्रतिसन्धानं विना तद्रूपविशिष्टप्रत्यायनेच्छया तत्पदाप्रयोगाच्च । शक्त्यधीनविशिष्टविषयकबोधे परं विशेषणांशे शक्तेः शक्यतावच्छेदकताया वा ग्रहस्योपयोगित्वोपगमात् । अभ्युपेत्यैकवृत्तेरुभयग्रहप्रयोजकतामपि उपपादयितुं संकेतानुधावनम् ।

एतावता विषयग्रहे अधिकानपेक्षाविवक्षान्निराकृत्य ज्ञानग्रहेऽधिकानपेक्षाविवक्षामपि निराकरोति *एतेनेति* । एकसंकेतेनोभयबोधकपदघटितसामग्रीव्यावृत्त्यसम्भवेन घटेच्छालिङ्गकघटज्ञानानुमान-ज्ञाततालिंगकप्रामाण्यविशिष्टज्ञानानुमानयोर्विशेषविरहेण चेत्यर्थः । *यादृशसामग्र्या* इति । ज्ञानग्राहकताप्रयुक्तेत्यत्र प्रयुक्तत्वस्य व्यापकतारूपत्वात् यथाश्रुतग्रन्थलभ्यमेवैनदित्यवधेयम् । *तादृशयावद्ग्राह्यत्वम्*=तज्जन्ययावद्ग्रहविषयत्वम् । मनस्संयुक्तसमवायस्य व्यवसायविषयघटादिभानाप्रयोजकत्वे मिश्रमतापरिग्रहोऽप्यत्र बोध्यः ।

*तज्ज्ञानेति* । घटज्ञानमित्यादिशब्दबोधसामग्र्या इच्छादिलिंगकज्ञानानुमितिसामग्राश्च भट्टैर्ज्ञानग्राहकतया प्रामाण्याग्राहकतया चाभ्युपग-

---

( प्रभा ) उभयग्रहेति । विषयज्ञानोभयप्रयोजकतामित्यर्थः । तज्ज्ञानप्रामाण्यविषयकज्ञानाजनकत्वेन ज्ञानविषयकज्ञानाजनकत्वेन या भट्टमतसिद्धा सामग्री तदन्या ज्ञानविषयकग्रहजनिका या सामग्री तज्जन्ययावद्ग्रहविषयत्वं मीमांसकनये साध्यमिति पर्यवसितम् । इच्छादिलिंगकेति = घटज्ञानवान्

(गा०) मात् तद्व्युदासः। अनुव्यवसायस्य ज्ञानविषयकलौकिकप्रत्यक्षात्मकस्य ज्ञानातीन्द्रियतावादिना भट्टेनानुपगमात् मनस्संयुक्तसमवायादिघटिततत्सामग्री न ज्ञानग्राहकत्वेन तदुपगता, गुरुभिरेव तस्या ज्ञानग्राहकत्वोपगमात्। ज्ञातता-लिंगकानुमितिसामग्री ज्ञानग्राहकत्वेन भट्टमतसिद्धापि तैस्तस्याः प्रामाण्यग्राहकत्वोपगमात् प्रमाण्याग्राहकत्वेन न तन्मतसिद्धेति तत्तन्मते प्रामाण्यग्राहकत्वेन अभिमतानां सामग्रीणां संग्रहः। गुरुमते घटत्ववतीत्यादिप्रामाण्यग्राहिकाणां ज्ञानविषयो घट इत्यादिशाब्दानुमितिसामग्रीणां प्रामाण्याग्राहकतया ज्ञान-ग्राहकतया च भट्टाभ्युपगतानामसंग्रहेऽपि न क्षतिः।

अयं घट इत्येतादृशप्रत्यक्षसामग्र्याः प्रामाण्यग्राहकताविचार एवेदृशविप्रतिपत्त्यादरात् भट्टमते ज्ञाततालिङ्गकानुमितिसामग्र्याः संग्रहाय *तज्ज्ञानप्रामाण्याग्राहकत्वेनेति*। पटज्ञानम् प्रमा घटज्ञानं गुण इत्येतादृशसमूहा-हालम्बनशाब्दसामग्र्या पटज्ञानप्रामाण्याग्राहकत्वेन भट्टमतासिद्धया घटत्ववत्ता-त्यादिप्रामाण्याग्रहाद् बाधवारणाय तज्ज्ञानेति प्रकृतप्रामाण्यस्य विशेषतो निवेशसूचकम्। प्रामाण्याग्राहकत्वं च प्रामाण्याग्रहानुपधायकत्वम्, तेन घट-

---

(प्रभा) घटेच्छावत्त्वादिति पूर्वोक्तानुमितिसामग्र्या इत्यर्थः। तद्व्युदासः=घटज्ञानमिति-शाब्दसामग्री तादृशेच्छालिङ्गकसामग्रीव्युदास इत्यर्थः। तथाच न पूर्वोक्तशाब्दबोधमिच्छा-लिङ्गकानुमितिञ्चादाय बाध इति भावः। समन्वयं दर्शयति अनुव्यवसायस्येत्यादि। व्यवसायसामग्रीति=चक्षुस्संयोगादिरूपेतिभावः। ज्ञानविषयो घट इत्यादीति=घटो घटत्वप्रकारकज्ञानविशेष्य इति। असंग्रहेऽपि न क्षतिः=तादृशसामग्रीणां साध्याघटकत्वेऽपि नानुपपत्तिः। विप्रतिपत्त्यादरादिति। अयंघटइत्यादिव्यवसायादिना प्रमात्वग्रहस्यैव मीमांसकैः प्रतिज्ञाततया तत्र साध्यप्रसिद्धिरपेक्षिता। परत्रास्तु मा वाऽस्तु का क्षति-रिति भावः।

ननु प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्नत्वमेव निवेश्यतां तज्ज्ञानपदोपादानं व्यर्थमित्यत आह पटज्ञानं प्रमा घटज्ञानं गुण इति। तथाच तज्ज्ञानेत्यत्र तत्पदानुपादाने पटज्ञानं प्रमा घटज्ञानं गुण इत्याकारकसमूहालम्बनशाब्द-बोधसामग्रीप्रामाण्याग्राहकत्वेन च न भट्टमतसिद्धाऽपितु केवलघटज्ञानशाब्दबोधसामग्र्येव तादृशत्वेन भट्टमतसिद्धा, तदन्यत्वस्य च निरुक्तसमूहालम्बनसामग्र्यां सत्त्वेन तज्जन्यग्रहवि-षयत्वस्य घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रामाण्ये विरहाद् बाधस्स्यादिति भावः। निवेश-सूचकमिति। तज्ज्ञाननिष्ठतत्प्रामाण्यव्यक्तिलाभार्थं तत्पदम्, तथाच निरुक्तसमूहालम्बन-शाब्दबोधसामग्र्याः घटत्ववति घटत्वप्रकारकज्ञानत्वरूपतत्प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया तदन्यत्वस्य तत्र विरहान्न तमादाय तत्र बाधावसर इति भावः। प्रामाण्यग्रहानुपधायकत्वमिति=अव्यवहितपूर्वत्वसम्बन्धेन प्रामाण्यग्रहविशिष्टत्वा-भाववत्त्वेन एवमव्यवहितपूर्वत्वसम्बन्धेन ज्ञानग्रहविशिष्टत्वेन च या भट्टमतसिद्धा तदन्यत्व-

(गा०)ज्ञानमित्यादिशाब्दसामग्र्याःघटज्ञानम्प्रमेत्यादिप्रामाण्यविषयकशाब्दादि-स्वरूपयोग्यत्वेऽपि न क्षतिः। एवं ज्ञानग्राहकत्वमपि ज्ञानग्रहोपधायकत्वं गुरुणा प्रामाण्यग्राहकत्वेन सिषाधयिषितायाः अयं घट इति प्रत्यक्षादिसामग्र्या अपि उपनीतभानाङ्गीकर्तृभट्टेन ज्ञानविषयो घट इत्युपनीतभानादिस्वरूपयोग्यत-योपगमात्।

नच ज्ञानविषयकत्वघटितधर्मावच्छिन्ननिरूपितयोग्यतानिवेशेऽपि नायं दोष इति वाच्यम्? तथासति आत्ममनोयोगादीनां ज्ञानविषयकत्वावच्छि-न्नाजनकत्वात् तद्घटिततया वारणीयानां सामग्रीणामपि ज्ञानग्राहकतया भट्टमत-सिद्धत्वानुपपत्तेः।

अथैवं भवन्मतेऽपि आत्मशरीरादीनां भट्टमतेऽन्यत्र प्रामाण्यग्राहकतया तद्घटितानां वारणीयसामग्रीणां प्रमाण्याग्राहकतया तु भट्टमतसिद्धत्वम्।

यदि चात्मादीनां तथात्वेन भट्टमतसिद्धत्वविरहेपि वारणीयसामग्रीघटक-पदज्ञानपरामर्शादीनां प्रामाण्यग्रहानुपधायकत्वेन भट्टमतसिद्धतया तद्घटित-समुदायस्य तथात्वेन भट्टमतसिद्धभिन्नत्वानुपपत्त्या तद्वारणं सुघटमित्युच्यते तदैतन्मतेऽपि उक्तरीत्या निर्वाह इति चेत् सत्यम्, एवं सति पदाजन्ययोग्यता-

(प्रभा) मित्यर्थः। उपनीतभानेति = ज्ञातो घट इति उपनीतभानेत्यर्थः। स्वरूपयोग्यतयो-पगमादिति। अयं घट इति प्रत्यक्षसामग्र्याश्चक्षुःसंयोगादिघटिताया इति पूर्वेणान्वयः। अर्थाज्ज्ञानविषयो घट इत्युपनीतज्ञानसामग्र्या तज्ज्ञानप्रामाण्यग्रहानुपधायकतया ज्ञानग्रहा-स्वरूपयोग्यतया भट्टमतसिद्धभिन्नतया साध्यघटकत्वेन बाधस्स्यादित्यतो ज्ञानग्रहोपधायकत्व-निवेश आवश्यक इति भावः।

ज्ञानविषयो घट इत्युपनीतसामग्र्यास्साध्यघटकतां वारयति नचेत्यादिना। ज्ञानविषयकत्वघटितेति = ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छे-दकधर्मवत्स्वरूपयोग्यतानिवेशेऽपीत्यर्थः। अयम्भावः, तत्प्रकारकप्रत्यक्षे तद्विषयकज्ञानस्य कारणतया प्रकृते ज्ञानविषयो घट इत्यत्र घटभानं चक्षुःसंयोगादिना, ज्ञानभानं तु स्मरणा-त्मकज्ञानलक्षणासन्निकर्षेणेति, चक्षुःसंयोगादिजन्यतावच्छेदकं घटविषयकत्वं नतु ज्ञानविषय-कत्वं, ज्ञानविषयकत्वं हि तादृशस्मृतिजन्यतावच्छेदकमित्यतोऽयंघट इति प्रत्यक्षसामग्र्या-श्चक्षुःसंयोगादिघटिताया ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक-धर्मवत्स्वरूपस्वरूपयोग्यत्वाभावेन तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्नतया साध्यघटकत्वेन नास्ति बाध इति भावः। आत्ममनोयोगादीना-मिति = ज्ञानपदस्य ज्ञानविषयताप्रयोजकत्वेन ज्ञानविषयकत्वं नात्मजन्यतावच्छेदकमिति भावः। तद्घटिततया=आत्ममनोयोगादिघटिततयेत्यर्थः। तृतीयार्थः प्रयोज्यत्वम्, अनु-पपत्तेरित्यनेनान्वयः। वारणीयानां सामग्रीणामिति = घटज्ञानमितिशाब्दसामग्रीणां घटज्ञानवान् घटेच्छावत्त्वादित्यनुमितिसामग्रीणामित्यर्थः। ज्ञानग्राहकतया भट्टमतसिद्ध-भिन्नत्वानुपपत्तेरिति = घटज्ञानमितिशाब्दसामग्रीणामात्ममनोयोगादिघटिततया आत्म-मनोयोगादेश्च ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत्त्वाभावेन

( गा० ) ज्ञानघटितयोग्यताविषयकशाब्दसामग्रीविशेषेण गुरुमते प्रामाण्यग्रहाद् बाधस्य शङ्काया ग्रन्थकृतोऽसङ्गतिः।

तादृशयोग्यताज्ञानस्य ज्ञानग्राहकतया भट्टाभ्युपगतभिन्नत्वेऽपि कारणान्तरस्य तथात्वेन भट्टमतसिद्धत्वस्य तत्र सत्त्वात् तद्घटितसमुदायात्मकसामग्र्यास्तथात्वेन भट्टमतसिद्धभिन्नत्वानुपपत्तेः। अतः प्रामाण्यग्रहफलोपधानप्रयोजकतानवच्छेदकतया ज्ञानग्राहकतावच्छेदकतया भट्टाभ्युपगतं यादृशं रूपं तदन्यज्ञानग्रहोपधानप्रयोजकतावच्छेदकरूपावच्छिन्नसामग्रीग्राह्यत्वं साध्यमेतदभिमतम्। तथा च कारणसमुदायपर्याप्तस्य ज्ञानग्रहोपधानप्रयोजकतावच्छेदकधर्मस्य स्वरूपयोग्यतानवच्छेदकत्वात् तदवच्छेदकतया भट्टमतसिद्धभिन्नत्वावश्यकत्वात् ज्ञानग्रहोपधाननिवेशनमावश्यकम्। तादृशसाध्यानुसरणं निष्प्रयोजनमिति न शंक्यम्, वारणीयसामग्रीघटकज्ञानभासकानां सर्वेषाम् प्रत्येकम् मिलितानाञ्च यत्र ज्ञायमानलिङ्गादिविधया प्रामाण्यविषयकानुमित्युपधायकता तादृशसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नतया तज्जन्यप्रामाण्याविषयकज्ञानमादाय बाधस्य दुर्वारतया यथाश्रुतस्य सामग्र्याम् प्रामाण्याग्राहकतया भट्टमतसिद्धान्यत्वविशेषणघटितसाध्यस्य विवक्षणासम्भवात्।

---

( प्रभा ) तादृशशाब्दसामग्र्या ज्ञानग्रहस्वरूपयोग्यत्वेन भट्टमतसिद्धत्वाभावात् तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्रहस्वरूपयोग्यत्वेन च भट्टमतसिद्धभिन्नत्वेन साध्यघटकतया बाधस्तदवस्थ एवेति भावः।

तादृशयोग्यताज्ञानस्येति = ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत्स्वरूपयोग्यताज्ञानस्येत्यर्थः। प्रामाण्यग्रहेति = प्रामाण्यग्रहफलोपधानप्रयोजकतानवच्छेदकतया ज्ञानग्राहकतावच्छेदकतया भट्टाभ्युपगतं यादृशं समुदायत्वं तदन्यज्ञानग्रहोपधानप्रयोजकतावच्छेदकरूपावच्छिन्नसामग्रीग्राह्यत्वं साध्यमिति भावः। वारणीयसामग्रीघटकेति=शाब्दबोधसामग्रीघटकेत्यर्थः। ज्ञायमानलिङ्गादिविधयेति[१] इदं ज्ञानं प्रमा तत्सामग्रीमत्त्वात्, तथाच प्रामाण्यग्रहफलोपधायकतानवच्छेदकतया ज्ञानग्रहफलोपधायकतावच्छेदकतया च भट्टाभ्युपगतं यादृशं समुदायत्वं तादृशसमुदायत्वभिन्नं ज्ञानग्रहफलोपधायकतावच्छेदकीभूतं यत्समुदायत्वं तदवच्छिन्नसामग्रीजन्ययावद्ग्रहविषयत्वं मीमांसकमते साध्यं पर्यवसितम्। अन्यथा घटज्ञानशाब्दबोधसामग्रीणां यावतीनां यत्र घटज्ञानम्प्रमा तादृशसामग्रीमत्त्वादित्याकारकप्रामाण्यानुमितिफलोपधायकत्वं सम्भवति तादृशस्थले प्रामाण्यग्रहानुपधायकत्वेन ज्ञानग्रहोपधायकत्वेन च निरुक्तशाब्दबोधसामग्र्या भट्टमतसिद्धभिन्नतया तज्जन्यघटज्ञानशाब्दबोधविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधः, अस्माकम् मते तु न, शाब्दबोधसामग्रीनिष्ठसमुदायत्वस्य प्रामाण्यग्रहोपधायकतानवच्छेदकत्वेन भट्टमतसिद्धतया तदन्यत्वस्य तादृशसमुदायत्वे विरहात्।

---

१ ज्ञायमानलिंगत्वेनानुमितिहेतुता नतु समुदायत्वेन, ज्ञायमानलिंगत्वं हि ज्ञायमानव्याप्तिमत्त्वम्।

( गा० ) उक्तसाध्यादरे तु प्रामाण्याविषयकज्ञानग्रहोपधानप्रयोजकता- वच्छेदकस्य तज्ज्ञानग्रहोपधायकसमुदायपर्याप्तधर्मस्य प्रामाण्यविषयकतत्तत्का- रणलिंगककिञ्चित्साध्यकानुमित्युपधानप्रयोजकतानवच्छेदकत्वेन तादृशसामग्री- जन्यप्रामाण्याविपयकग्रहस्य साध्याघटकत्वेन बाधवारणसम्भवात्।

वस्तुतस्तु प्रामाण्यग्रहानुपधायकत्वेन भट्टमतसिद्धत्वं न पृथङ् निवेश्यते अपितु ज्ञानग्राहकान्तर्गतो ग्रह एव प्रामाण्याविषयकत्वेन विशेष्यते लाघवात्। एवंच प्रामाण्याविषयकग्रहजनकत्वेन भट्टमतासिद्धत्वनिवेशे व्यवसायादि- सामग्रीघटकात्मादेर्भट्टमतेऽपि प्रामाण्याविषयकज्ञानग्रहजनकतया

---

( प्रभा ) ननु लिङ्गज्ञानस्यानुमापकत्वं नतु ज्ञायमानलिङ्गस्येत्याशंक्याह वस्तु- तस्तु इति। तथाच प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतसिद्धा या सामग्री तद्भिन्ना या ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वं साध्यमिति पर्यवसितम्। संगमनप्रकार- श्चेत्थम्-भट्टमते व्यवसायस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमित्यतिरिक्तेन केनचिदन्येन व्यवसायग्रहो न जायते, एवञ्च गुरुमतसिद्धव्यवसायसामग्री च न ज्ञानग्राहकत्वेन भट्टमतसिद्धा। एवं मिश्रमतसिद्धानुव्यवसायसामग्री च ज्ञानग्राहकत्वेन भट्टमतसिद्धा इत्यतः प्रामाण्याविषयकज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वस्य व्यवसायानुव्यवसायादि- सामग्र्यां सत्त्वेन साध्यघटकतया तत्संग्रहेण साध्यसत्त्वोपपत्तिः। भट्टमतसिद्धानुमितिसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वेऽपि तादृशसामग्रीजन्यतादृशानुमित्यात्मकज्ञानग्रहस्य भट्टमते प्रामाण्याविषयकत्वाभावात् ज्ञाततालिङ्गकानुमितिसामग्र्या अपि प्रामाण्याविष- यकज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नतया संग्रहः। घटज्ञानमितिशाब्दसामग्र्या ज्ञानग्राह- कत्वेन भट्टमतसिद्धत्वम्, तादृशशाब्दबोधश्च न प्रामाण्यविषयक इत्यपि सिद्धम्। एवञ्च प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतसिद्धतया साध्याघटकतया नास्ति बाध इति। ग्रह एवेति=द्वितीयग्रह एवेत्यर्थः।

फलोपधायकतानिवेशकामो व्यवसायानुव्यवसायसामग्र्योः साध्याघटकतया गुरुमिश्रमते बाधं सम्पादयति एवञ्चेत्यादिना। प्रथमं मतत्रये बाधं दर्शयति व्यवसायेत्यादिना। व्यवसायादिसामग्रीघटकात्मादेरिति=व्यवसायादिजनकसामग्रीघटकात्मादेरित्यर्थः। आदिपदादनुव्यवसायपरिग्रहः। आत्मादेरित्यत्र शरीरपरिग्रहः। निष्ठत्वं षष्ठ्यर्थः, ज्ञानग्रह- जनकतयेत्यनेन सम्बन्धः।

आत्मशरीरादेर्लिङ्गविधया प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतसिद्धत्वस्य सत्त्वेन तद्घटितसामग्र्या भट्टमतसिद्धभिन्नत्वं न स्याद्, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकै- कदेशभेदस्याप्रामाणिकत्वात्। प्रामाण्याविषयकज्ञानग्रहजनकतयेति=न भट्टमतसिद्ध- त्वमित्यनेनान्वयः,प्रामाण्याविषयकज्ञानग्रहस्वरूपयोग्यतयेत्यर्थः। प्रामाण्याविषयको यो ज्ञानग्रहो घटज्ञानविषयकशाब्दबोधादिस्तज्जनकताऽऽत्मनि भट्टेनाभ्युपगम्यत एवेति प्रामाण्या- विषयकज्ञानग्रहजनकत्वेनात्मादेर्भट्टमतसिद्धतया तादृशात्मादिघटितव्यवसायादिसामग्र्यां भट्टमतसिद्धभेदो न स्याद् व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदस्य प्रामाणिकत्वा-

( गा० ) तादृशज्ञानानुमितौ लिंगविषयया ज्ञानभानेऽपि प्रयोजकतया-ऽनुव्यवसायजनकव्यवसायस्य प्रामाण्याविषयकेऽपि स्वान्वयबोधे तन्मते ज्ञायमानपदार्थविधया कारणस्य स्वात्मकज्ञानभासकतया अभिमतसामग्र्या नोक्तप्रकारेण भट्टमतासिद्धत्वम्, अतः फलोपधायकतावच्छेदकधर्म एव तादृशज्ञानग्रहफलोपधायकतावच्छेदकतया भट्टमतसिद्धभिन्नत्वं निवेश्यमित्य-ग्रिमग्रन्थसंगतिः ।

---

( प्रभा ) दित्थञ्च भट्टमतसिद्धभिन्नत्वाभावाद् व्यवसायसामग्र्याःसाध्याघटकतया संग्रहेऽपि गुरुमते काऽपि ज्ञानग्राहिका सामग्री नास्ति या तादृशभट्टमतसिद्धभिन्ना स्यादिति साध्या-प्रसिद्धिरिति भावः । तादृशज्ञानानुमितौ इति = समवायेन प्रमाकालीनघटज्ञानवान् तादात्म्येनात्मनः, एवमवच्छेदकतासम्बन्धेन घटज्ञानवान् तादात्म्येन शरीरात् इत्याद्यनुमिता-वित्यर्थः । लिङ्गविधयेति=हेतुतयेत्यर्थः । मिश्रमते साध्याप्रसिद्धिन्दर्शयति अनुव्यव-सायजनकव्यवसायस्येति । अग्रिमकारणस्येत्यनेन सम्बन्धः कुत्र कारणस्येति जिज्ञासाया-माह स्वान्वयबोधे इति । स्वविषयकज्ञानस्मृतिम्प्रति स्वस्य हेतुत्वेन व्यवसायस्य जनकत्व-मिति बोध्यम् । प्रामाण्याविषयकेऽपीति । अपिशब्दस्य स्वान्वयबोधे इत्यनेन सम्बन्धः, स्वान्वयबोधेऽपीति योजना । स्वंव्यवसायस्तद्विषयकशाब्दबोधेऽपीत्यर्थः । तन्मते=भट्टमते इत्यर्थः । ज्ञायमानपदार्थविधया कारणस्येति । पूर्वोक्तव्यवसायस्येत्यनेन सम्बन्धः । अयंभावः, पदार्थस्यान्वयबोधकारणतावादिनो भट्टस्य मते व्यवसायविषयकशाब्दबोधे व्यवसायो हि हेतुः । भट्टस्य मते शाब्दबोधे पदन्न करणं किन्तु पदार्थ एव । अत एवापूर्व-वाक्यार्थमनुभूयैवाभिनवकाव्यं कवयो रचयन्ति । तादृशापूर्ववाक्यार्थज्ञानमसन्निकृष्टत्वान्न प्रत्यक्षम् , व्याप्तिज्ञानापूर्वकत्वान्नानुमितिः, शब्दाभावान्न शाब्दबोधः, परन्त्वन्वयबोध एव, तादृशबोधे चिन्तावशोपस्थिताः पदार्था एव हेतवः नतु पदानि इति भट्टाभि-मानस्तथाच मिश्रमतसिद्धानुव्यवसायसामग्री प्रामाण्याविषयकज्ञानग्रहस्वरूपयोग्यत्वेन भट्टमतसिद्धैवेति भट्टमतसिद्धभिन्नत्वाभावस्य मिश्रमतसिद्धानुव्यवसायसामग्र्यामसत्त्वेन तादृशसामग्र्याःसाध्याघटकतया मिश्रमते न काचिदीदृशी प्रसिद्धा सामग्री या प्रामाण्याविष-यकज्ञानग्रहजनकत्वेन भट्टमतसिद्धभिन्ना स्यात्तथा च मिश्रमतेऽपि साध्याप्रसिद्धिरिति भावः । स्वात्मकज्ञानभासकतयेति = व्यवसायात्मकज्ञानभानप्रयोजकतयेत्यर्थः । अभिमत-सामग्र्या इति = साध्यघटकतयाऽभिमता या व्यवसायसामग्री तस्या एवम्मिश्रमते साध्य-घटकतयाऽभिमता या सामग्री तस्या इत्यर्थः । न इति । भट्टमतासिद्धत्वमित्यनेन सम्बन्धः । उक्तप्रकारेण न भट्टमतासिद्धत्वमिति योजना । उक्तप्रकारेणेति = उपयुक्तो यः प्रकारः व्यवसायादिसामग्रीघटकेत्यारभ्य स्वात्मकज्ञानभासकतयेत्येतत्पर्यन्तो व्यापारस्तेनेत्यर्थः । तृतीयार्थः प्रयोज्यत्वम्, उक्तप्रकारप्रयोज्यो भट्टमतासिद्धत्वाभाव इति योजना । तथाच गुरुमते मिश्रमते च साध्याप्रसिद्धिस्तद्वारणायाह फलोपधायकतावच्छेदकधर्म एवेति । तादृशज्ञानग्रहेति = प्रामाण्याविषयकज्ञानग्रहेत्यर्थः । तथा च प्रामाण्याविषयकज्ञानग्रह-

(दी०) अयं घट इत्यादिज्ञानजनकसामग्र्याः प्रामाण्यग्राहकत्वेन भा-ट्टाङ्गीकृतत्वात् गुरुमतसाधारण्यसम्पादनाय ज्ञानग्राहकत्वेनेति ।

---

(गा०) ज्ञानग्राहकत्वेनेत्यस्य प्रयोजनं स्वयमाह अयं घट इत्यादीति । भट्टाङ्गीकृतत्वादिति । नच तादृशसामग्र्यन्तर्गतस्य घटत्वादिग्राहकसंयुक्तसम-वायस्य समवायानङ्गीकर्तृभट्टमतसिद्धत्वाभावान्न तादृशसामग्र्या भट्टमत-

---

(प्रभा) फलोपधायकतावच्छेदकतया भट्टमतसिद्धं यद्रूपं तद्भिन्नं यद् ज्ञानग्रहफलोपधायकतावच्छेदकं रूपं तद्रूपावच्छिन्नसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यं पर्यवसितम् ।

तथा च व्यवसायसामग्रीगतसमुदायत्वस्य प्रामाण्याविषयकज्ञानग्रहस्वरूपयोग्यतावच्छेदकतया भट्टाभ्युपगतत्वेऽपि न प्रामाण्याविषयकज्ञानग्रहफलोपधायकतावच्छेदकतया भट्टाभ्युपगतत्वमिति व्यवसायसामग्र्यास्साध्यघटकत्वमिति, एवमनुव्यवसायेऽपि । घटज्ञानमितिशाब्द-सामग्रीगतसमुदायत्वं तु तथात्वेन भट्टाभ्युपगतमिति वाधवारणमपि सिद्ध्यति । अग्रिम-ग्रन्थसंगतिरिति = ओदनकामकार्यताज्ञानविषयः पाक इत्यत्र वाधदानपरदीधितिग्रन्थ-संगतिरित्यर्थः । तथाहि ओदनकामकार्यताज्ञानविषयः पाक इत्यत्र तादृशयोग्यताज्ञानघटित-सामग्रीगतसमुदायत्वं हि प्रामाण्याविषयकज्ञानग्रहफलोपधायकतया भट्टमतसिद्धं नास्ति इत्य-तस्तादृशसामग्र्याःसाध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् वाध इति भावः ।

प्रामाण्यग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वदले ज्ञानग्राहकत्वदल-प्रयोजनं दर्शयति दीधितौ अयं घट इत्यादिना । आदिपदादयं पट इत्यादिसंग्रहः । अयं भावः, तज्ज्ञानप्रामाण्यग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमात्रनिवेशे अयं घट इत्यादिव्यवसाय-सामग्र्यास्तज्ज्ञानप्रामाण्यग्राहकत्वेन भट्टमतसिद्धतया तद्भिन्नत्वाभावेन साध्याघटकतया गुरुमते साध्याप्रसिद्ध्यापत्तेः । गुरुमतसाधारण्यसम्पादनायेति । ज्ञानातीन्द्रियत्ववादिभट्टमते ज्ञानानुव्यवसायासत्त्वेन मिश्रमतसिद्धानुव्यवसायसामग्र्या अलीकतया तादृशसामग्र्यां तज्ज्ञानप्रामाण्यग्राहकत्वेन भट्टमतसिद्धभिन्नत्वसौलभ्येन तादृशसामग्र्याःसाध्यघट-कतया न मिश्रमते काप्यनुपपत्तिरतो मिश्रमतसाधारण्यायेति नोक्तम् । तादृशभट्टमत-सिद्धभिन्नत्वदले ज्ञानग्राहकत्वेनेत्यस्य निवेशाभावेऽपि न गुरुमतसाधारण्यानुपपत्तिरित्या-शङ्कते नचेत्यादिना । तादृशसामग्र्यन्तर्गतस्येति = अयंघट इति व्यवसायसामग्र्यन्त-र्गतस्येत्यर्थः । घटत्वादिग्राहकसंयुक्तसमावायस्येति = घटत्वप्रत्यक्षजनकस्य संयुक्तसमवायस्ये-त्यर्थः । आदिपदात्पटत्वाद्युपग्रहः समवायानङ्गीकर्तृभट्टमतसिद्धत्वाभावादिति । अयंभावः, भट्टो हि घटघटत्वयोः समवायसम्बन्धं नाङ्गीकरोति किन्तु तयोस्तादात्म्यसम्बन्धमेव । एवञ्च तन्मते समवायस्यालीकतया तद्घटिताया अयं घट इति प्रत्यक्षसामग्र्या अपि भट्टमतसिद्ध-त्वाभावेन तज्ज्ञानप्रामाण्यग्राहकत्वेन भट्टमतसिद्धभिन्नतया साध्यघटकत्वोपपत्तौ तदर्थं तादृशभेदकेटौ ज्ञानग्राहकत्वेनेति निवेशो व्यर्थ इति भावः । तादृशसामग्र्या इति =

(गा०) सिद्धत्वमिति वाच्यम् , समवायत्वेन तदनङ्गीकारेऽपि घटत्वादिसम्बन्धत्वेन तदभ्युपगमात् । घटादौ समवायस्यैव वस्तुतो घटत्वादिसम्बन्धत्वात् ।

ननु प्रामाण्यग्राहकपरोक्षसामग्रीभिन्नत्वं निवेश्यते तावतैव गुरुमते व्यवसायात्मकज्ञानप्रत्यक्षसामग्र्या मिश्रमतेऽनुव्यवसायसामग्र्याः परोक्षसामग्रीभिन्नत्वेन भट्टमते च ज्ञाततालिङ्गकानुमितिसामग्र्याः परोक्षसामग्रीत्वेऽपि प्रामाण्याग्राहकभिन्नत्वेन विशिष्टभेदस्याक्षततया मतत्रयसाधारण्योपपत्तेः । प्रामाण्याग्राहकशाब्दानुमितिसामग्र्योश्च तादृशभेदासत्त्वेन व्यावृत्तिसम्भवादिति चेन्न ? ज्ञाततालिङ्गकानुमितिसामग्र्याः प्रामाण्यग्राहकत्वासिद्धिकाले तज्जन्यानुमितेः साध्यघटकयावद्ग्रहान्तर्गतत्वासिद्ध्या उक्तसाध्यसिद्धावपि तादृशानुमितेः प्रामाण्यावगाहिताया असिद्ध्या भट्टस्योद्देश्यासिद्धेः ।

---

(प्रभा) अयं घट इति प्रत्यक्षसामग्र्या इत्यर्थः । समवायत्वेन तदनङ्गीकारेऽपि=समवायत्वेन रूपेण समवायानङ्गीकारेऽपीत्यर्थः । घटत्वादिसम्बन्धत्वेन तदभ्युपगमादिति । अयं भावः, घटघटत्वयोः कश्चित्सम्बन्धस्तु भट्टेनापरेणापि स्वीकर्त्तव्यः संसर्गावगाहित्वात् किन्तु स एव संसर्गो भट्टमते तादात्म्यमपरत्र मते समवायः, संज्ञायामेव तयोर्विवादात् । घटादौ समवायस्येति । य एवापरमते घटादौ घटत्वादिसमवायः स भट्टमते तादात्म्यम् ।

ननु प्रामाण्याग्राहकपरोक्षसामग्रीभिन्नत्वेनैव ज्ञानग्राहकसामग्रीविवक्षणे लाघवसम्भवाद्दीधितिकृतान्निरुक्तरीत्या गुरुतरनिवेशनं व्यर्थमित्याशङ्कते नन्वित्यादिना । प्रामाण्याग्राहकेति । तथाच प्रामाण्याग्राहकपरोक्षसामग्रीभिन्ना या ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वं साध्यं पर्यवसितम् । तथाच प्रामाण्याग्राहिका या परोक्षसामग्री सा च शाब्दसमग्री ननु प्रत्यक्षसामग्रीति तद्भिन्नैव गुरुमतसिद्धव्यवसायसामग्री तस्यास्साध्यघटकतया गुरुमते समन्वयः । एवम्मिश्रमतसिद्धानुव्यवसायसामग्री च प्रामाण्याग्राहकपरोक्षसामग्रीभिन्नेति तत्संग्रहः । एवम्भट्टमतसिद्धज्ञाततालिङ्गकानुमितिसामग्री यद्यपि परोक्षसामग्रीरूपा तथापि न प्रामाण्याग्राहकीभूता किन्तु प्रामाण्यग्राहिकैवेति तत्रापि प्रामाण्याग्राहकपरोक्षसामग्रीभिन्नत्वसत्त्वात्तत्संग्रहः ।

अत एव परोक्षसामग्र्यां प्रामाण्याग्राहकत्वविशेषणमुपात्तम् । घटज्ञानमितिशाब्दसामग्री घटेच्छालिङ्गकघटज्ञानवानित्यनुमितिसामग्री च प्रामाण्याग्राहिका अथ च परोक्षसामग्रीरूपाऽपीति तत्र तद्भिन्नत्वविरहेण तस्यास्साध्याघटकतया नास्ति बाध इति भावः । इदन्तु बोध्यम् , परोक्षसामग्रीभिन्नत्वनिवेशे ओदनकामकार्यताज्ञानविषयः पाक इत्याद्युत्तरबाधो न स्यात् तत्र ओदनसाधनतारूपयोग्यताज्ञानरूपशाब्दसामग्र्याः प्रामाण्यग्राहकतया परोक्षसामग्रीरूपतया च तादृशसामग्रीभिन्नत्वानुपपत्तेरिति । खण्डयति इति चेन्नेत्यादिना । ज्ञाततालिङ्गकानुमितिसामग्र्या प्रामाण्यग्राहकत्वासिद्धिकाले=यावत्कालपर्यन्तं ज्ञाततालिङ्गकानुमितिसामग्र्या प्रामाण्यं गृह्यते इति व्यवस्था न सिद्धा तावत्काले इत्यर्थः । तज्जन्यानुमितेरिति=ज्ञाततालिङ्गकानुमितिसामग्रीजन्यानुमितेरित्यर्थः । साध्यघटकयावद्ग्रहान्तर्गतत्वेति । अयंभावः, प्रामाण्याग्राहकत्वं विशेषणं हि परोक्ष-

( गा० ) प्रामाण्यग्राहकतयोभयवादिसिद्धानुमित्यादिसामग्रीग्राह्यतामादायापि साध्यपर्यवसानात् । नैयायिकमतासिद्धत्वोक्त्यानुव्यवसायसामग्र्यसंग्रहः । गुरुमतासिद्धत्वं मिश्रमतासिद्धत्वं वा यदि निवेश्यते तदा व्यवसायसामग्र्या गुरुमतेऽनुव्यवसायसामग्र्याश्च मिश्रमते प्रामाण्यग्राहकतया विशिष्टभेदसत्त्वेऽपि

---

( प्रभा ) सामग्र्यां भट्टमतसिद्धानुमितिसामग्रीसंग्रहार्थमेवोपादीयते किन्तु इदानीं प्रमात्वे स्वतोग्राह्यत्वविचारावसरे ज्ञाततालिङ्गकानुमितिसामग्र्या अपि प्रामाण्यं गृह्यते इत्यपि साध्यमेव नतु सिद्धमेवञ्च ज्ञाततालिङ्गकानुमितिसामग्र्यां प्रामाण्यग्राहकत्वस्य साध्यत्वे साध्यघटकप्रामाण्याग्राहकपरोक्षसामग्रीभिन्नपदेन ज्ञाततालिङ्गकानुमितिर्न धर्तुं शक्यते । तथाच भट्टस्योद्देश्यासिद्धिः नतु साध्याप्रसिद्धिः, संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिसामग्र्याः प्रामाण्यग्राहकत्वस्य भट्टनैयायिकोभयमतसिद्धतया प्रामाण्याग्राहकपरोक्षसामग्रीभिन्नपदेन तादृशसंवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिसामग्र्या संग्रहेण साध्यसत्त्वोपपत्तेः ।

अनुमित्यादिसामग्रीग्राह्यतामादायापीति=प्रामाण्यग्राहकतया भट्टनैयायिकोभयवादिसिद्धा या संवादिप्रवृत्तिलिङ्गिका इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्याकारिकाऽनुमितिस्तज्जनकसामग्रीजन्यतादृशानुमित्यात्मकग्रहविषयतामादायापीत्यर्थः ।

ननु तथाऽपि प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन नैयायिकमतसिद्धभिन्ना या ज्ञानग्राहिका सामग्रीत्येवोच्यतामलम्भट्टमतसिद्धत्वोक्त्येत्याशङ्कायामाह नैयायिकमतसिद्धत्वोक्तौ अनुव्यवसायसामग्र्यसंग्रह इति । अनुव्यवसायसामग्र्यास्तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन नैयायिकमतसिद्धतया तद्भिन्नत्वविरहेण तदसंग्रहे मिश्रोद्देश्यासिद्धिर्नतु साध्याप्रसिद्धिः, इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्यनुमितिमादाय साध्यसत्त्वोपपत्तेः । गुरुमतसिद्धव्यवसायसामग्री च न ज्ञानग्राहकत्वेन नैयायिकमतसिद्धा इति तत्र प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च नैयायिकमतसिद्धभिन्नत्वोपपत्तिः । शाब्दसामग्री च प्रामाण्यग्राहकत्वेन नैयायिकमतसिद्धैवेति बाधवारणम् । ज्ञाततालिङ्गकानुमितिसामग्री च ज्ञानातीन्द्रियत्वमनभ्युपगच्छतां नैयायिकानाम्मतेऽलीकैव नतु तत्सिद्धेति तत्रापि तद्भिन्नत्वोपपत्तिः । ओदनकामकार्यताज्ञानविषयः पाक इत्यत्र बाधसंगतिश्च ।

ननु तथापि प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन गुरुमतसिद्धभिन्नत्वमेवोच्यतां व्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुणाङ्गीकृतत्वाभावेन तत्संग्रहः । स्वप्रकाशवादिगुरुमतेऽनुव्यवसायानङ्गीकारात्तद्भिन्नत्वोपपत्तिः । एवं ज्ञाततालिङ्गकानुमितिसामग्र्या अपि गुरुणानङ्गीकृतत्वात्तत्रापि तद्भिन्नत्वोपपत्तिः । बाधवारणमिति । अग्रिमबाधपरग्रन्थसङ्गतिश्चेति । एवं प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च मिश्रमसिद्धभिन्नत्वमेवोच्यतां गुरुमतसिद्धव्यवसायसामग्र्या ज्ञानग्राहकत्वेन मिश्रमतसिद्धत्वाभावात्तत्संग्रहः । मिश्रमतसिद्धानुव्यवसायसामग्री च न प्रामाण्याग्राहकत्वेन मिश्रमतसिद्धेति तत्संग्रहः । भट्टमतसिद्धज्ञाततालिङ्गकानुमितिश्च मिश्रमतेऽलीकैवेति तत्रापि तद्भिन्नत्वोपपत्तिः । शाब्दसामग्री च प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन मिश्रमतसिद्धैवेति न बाधः । नापि ओदन-

(गा०) उपनीतघटज्ञानादि विषयकस्य ज्ञानजन्यज्ञाततावान् घट इत्यादिप्रत्यक्षस्य सामग्र्या गुरुमिश्रमतासिद्धतया घटज्ञानादिप्रामाण्याग्रहाद् भट्टमते बाधस्यादिति भट्टमतसिद्धभिन्नत्वोपादानम् ।

यत्तु 'पश्यतश्श्वेतिमा रूपम्' इत्यादिन्यायेन पदाजन्योपस्थितिविषयपदार्थान्वयबोधस्य ज्ञानावगाहिनः सामग्र्या मिश्रादिमतासिद्धतया घटज्ञानादि-

(प्रभा) कामकार्यताज्ञानविषयः पाक इत्यग्रिमबाधपरग्रन्थासङ्गतिश्चेत्याशङ्क्य उभयत्रैव दूषणमुपादत्ते उपनीतघटादिविषयकस्येति ।

गुरुमतासिद्धत्वनिवेशाभावे एवम्मिश्रमतासिद्धत्वनिवेशाभावेऽन्यथा बीजमुपदर्शयतां यत्तुवादिनाम्मतं दूषयितुमुपन्यस्यति यत्तु इति । पश्यतः श्वेतिमा रूपं हेषाशब्दञ्च शृण्वतः । खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः । श्वेतिम आ रूपमितिच्छेदः, आङ् ईषदर्थे, श्वेतत्वजातिविशिष्टं रूपमीषत्पश्यत इत्यर्थः । नन्वेवं तेप्राग्धातोरित्यनुशासनात् आपश्यत इति युक्तमितिचेत् गत्यादिसंज्ञानां प्रागेव प्रयोगोऽतथाभूतानां तु व्यवहितोऽपीति मतेन व्यवधानेनापि आङः प्रयोगसम्भवात् । अत एव पातञ्जले महाभाष्ये संज्ञानियमपक्षस्य सिद्धान्ततया व्यवहिते गत्युपसर्गसंज्ञानिषेधेऽपि प्रयोगे बाधाभावात् । अतएव "तस्य स्थित्वा कथमपि पुर इतिमेघदूतम्, अभवद् युगपद् विलोलजिह्वा युगलीढोभयसृक्कभागमाविरितिमाघः" आविःपुरश्शब्दयोर्व्यवहितेऽपि प्रयोगः । तथाच प्रकृतेऽप्यापश्यत इत्यन्वयः साधुः । एतेनोपस्थिताःपदार्थास्तदुपस्थितिर्वा शाब्दबोधहेतुर्नतु पदज्ञानं तद्विनाऽपि शाब्दबोधोदयेन व्यभिचारात् इति पदज्ञानस्य व्यभिचारित्वं शाब्दबोधे भट्टेन प्रदर्शितम् । अत्र श्वैत्यादिज्ञानस्य प्रत्यक्षादिजन्यत्वेऽपि विशिष्टज्ञानस्यालौकिकप्रत्यासत्त्यनङ्गीकर्तुस्तस्य मते प्रमाणपञ्चकाजन्यत्वेन शाब्दमतावन्तर्भावनीयतया तस्याश्चाकाङ्क्षाज्ञानं विनैवोत्पत्तिरितिभावः ।

अश्वत्वस्य धावनस्य चानुमानिकत्वख्यापनाय क्रमेण हेषाखुरविक्षेपध्वन्योराकर्णनमुक्तम् । अत्र हि श्वेतरूपदर्शने हेषाशब्दश्रवणेन गवादिद्रव्यासंसर्गनिश्चये श्वेतत्वमश्वसंसर्गं विनानुपपन्नमितिधीरश्वत्वस्य भासिका खुरविक्षेपशब्दश्रवणे च खुरविक्षेपशब्द उपलभ्यमानःधावनकर्तृत्वं विनानुपपन्न इति धीर्धावनस्य, श्वेतरूपस्याश्वान्यद्रव्यवृत्तित्वबाधधीसहिताऽधावद्द्रव्यवृत्तित्वबाधधीसहिता च द्रव्यवृत्तित्वधीरश्वत्वधावनोभयालिङ्गिकेति केचित् । इदन्तु बोध्यम्, श्वेतोऽश्वो धावतीति ज्ञानं न प्रत्यक्षम् अश्वत्वादिद्रव्यनिष्ठजातिव्यञ्जकाभावात्, नाप्यनुमितिः श्वेतत्वव्याप्त्यग्रहात्, नाप्युपनीतभानं चाक्षुषत्वप्रयोजकाश्वेन्द्रियसन्निकर्षविनाशात्, बहिर्विषये मनसोऽसामर्थ्यात् हेषादेरपदत्वाच्च न पदं करणमित्यनायत्या उपस्थिताः पदार्थास्तदुपस्थितिर्वा शाब्दबोधे हेतुः, प्रमाणपञ्चकाजन्यत्वेन शाब्दमतावन्तर्भावनीयतया तस्याप्याकाङ्क्षाज्ञानं विनाऽप्युत्पत्तिरिति । किन्तु कार्यान्वितशक्तिवादे च प्रथममयं श्वेतोऽश्वो हेषावत्त्वादित्यनुमानं ततोऽयं श्वेतोऽश्वो धावति खुरविक्षेपशब्दविशेषवत्त्वादित्यपरम् । यद्वा श्वेतोऽश्वो हेषावत्त्वे सति खुरविक्षेपशब्दविशेषवत्त्वादित्यनुमानम् । एवञ्च प्रकृते ज्ञानपदाजन्यस्य शाब्दबोधे भानम् ।

सामग्र्या मिश्रादिमतासिद्धतयेति । तथाच तादृशसामग्र्याःप्रामाण्याग्राहकत्वेऽपि

(गा०) प्रामाण्याग्रहाद् भट्टमतेपि बाधस्स्यादिति मिश्रादिमतसिद्धत्वोपेक्षाबीजवर्णनम्, तदसत् ? भट्टमतसिद्धभिन्नत्वनिवेशेऽपि ज्ञानविषयो घट इत्यादिमानसोपनीतभानसामग्र्या मिश्रमते प्रामाण्याग्रहेण बाधस्य दुर्वारत्वात्। भट्टोपनीतभानाङ्गीकारेऽपि वह्निविशेष्यकज्ञाने मनसोऽसामर्थ्येन घटादिविशेष्यकमानसोपनीतभानानङ्गीकारात्, तत्र पदार्थकरणकान्वयबोधस्यैवोपपत्तौ तादृशमानसोपनीतभानसामग्र्या भट्टमतासिद्धत्वात्।

यदि च तादृशज्ञानमुभयसिद्धमेव, तस्य मानसप्रत्यक्षरूपतैव भट्टेन नोपेयते किन्तु पदार्थकरणकान्वयबोधरूपतैवेत्यसंसर्गाग्रहपदार्थोपस्थितिरूपा तत्सामग्री अपि उभयसिद्धैवेति तद्वारणमिति मन्यते, तदा मिश्रमतभिन्नत्वनिवेशेऽपि तुल्यरीत्या भट्टमते उक्तबाधस्य वारणसम्भवात्।

अथ भट्टमतसिद्धभिन्नत्वनिवेशे उपनीतघटज्ञानविषयकपटज्ञानानुव्यवसायेन घटज्ञानप्रामाण्याग्रहात् मिश्रमते बाधः, तादृशस्यापि पटज्ञानानुव्यवसायस्य भट्टानभ्युपगतत्वात्, तत्सामग्र्याः पटज्ञानादिघटितायास्तथात्वात्।

नच तत्र घटज्ञानपटज्ञानयोर्भासकं सामग्रीद्वयं तत्संवलनादुभयविषयकमेकं ज्ञानम्, एवञ्च तत्र घटज्ञानग्राहिका तज्ज्ञानादिरूपा सामग्री भट्टेन अन्वयबोधसामग्रीत्वेन उपेयत एवेति वाच्यम्, यतस्समूहालम्बनस्थल एव ग्राहकसामग्रीभेदः, यत्र चोपनीतघटज्ञानसमानाधिकरणपटज्ञानत्वादिना तादृशघटज्ञानविशिष्टे आत्मनि पटज्ञानत्वेनैव वा पटज्ञानानुव्यवसायः तत्र तादृशविशिष्टविषयकानुव्यवसायसामग्र्या विशिष्टघटकतया घटज्ञानग्राहिकाया भट्टमतसिद्धाया घटज्ञानप्रामाण्याग्राहकत्वात् बाध एव। एवमुपनीतघटज्ञानरूपविषयोपरक्ततद्विषयकशाब्दबोधाद्यनुव्यवसायसामग्र्या घटज्ञानग्राहिकया तदीयप्रामाण्याग्रहादपि बाधो दुर्वारः।

---

(प्रभा) ज्ञानग्राहकत्वं मिश्रेण नाङ्गीक्रियते। एवञ्च तादृशसामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्नतया साध्यघटकतया तज्जन्यतादृशशाब्दबोधात्मकग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेन भट्टमतेऽपि बाधःस्यादिति।

तादृशज्ञानमिति = ज्ञानविषयो घट इति ज्ञानमित्यर्थः। उभयसिद्धमिति = मिश्रभट्टोभयमतसिद्धमित्यर्थः। तद्वारणमिति = बाधवारणमित्यर्थः। उपनीतघटज्ञानविषयकपटज्ञानानुव्यवसायेनेति = घटज्ञानविशिष्टपटज्ञानवानहमित्यनुव्यवसायेनेत्यर्थः।

सामग्रीद्वयमिति = घटज्ञानभासको ज्ञानलक्षणासन्निकर्षः, पटज्ञानभासिका चात्ममनःसंयोगादिघटिता सामग्री। सामग्रीत्वेनोपेयते इति। तथाच घटज्ञानग्राहकसामग्र्यां निरुक्तभट्टमतसिद्धभिन्नत्वविरहेण तस्याः साध्यघटकतयाऽसंग्रहेण न तामादाय बाध इति भावः। उपनीतघटज्ञानसमानाधिकरणेति। घटज्ञानसमानाधिकरणपटज्ञानवानहमितिभावः।

( गा० ) नच घटज्ञानं जानामीत्यादिशाब्दबोधाद्यनुव्यवसाये घटत्ववतीत्यादिप्रामाण्यमपि भासते-तद्विषयीभूते घटज्ञानमित्यादिव्यवसायेऽपि तत्प्रामाण्यसत्त्वादिति वाच्यम्, पुरोवर्त्तिज्ञानत्वादिना घटज्ञानविषयकव्यवसाये तादृशप्रामाण्यासत्त्वेन तदनुव्यवसाये तादृशप्रामाण्याभानादिति चेन्न ? ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितस्वाश्रयप्रकारताशालिग्रहसामग्र्या एव ज्ञानग्राहकसामग्रीपदेन विवक्षणीयत्वात्, उक्तघटज्ञानोपनीतभानेषु घटज्ञानांशे तादृशात्मनिष्ठविशेष्यतानिरूपितप्रकारताविरहेणैव तत्सामग्र्याः साध्याघटकतया बाधानवकाशात् ।

नचात्मनो लौकिकप्रत्यक्षे पटादिज्ञानस्य इच्छादेर्वा विशेषगुणस्य विद्यमानस्य भानावश्यकतया लौकिकप्रत्यक्षविषयात्मांशेऽविद्यमानघटज्ञानोपनीतभाने या पटादिज्ञानीयलौकिकभानांशे धर्मितावच्छेदकतया घटज्ञानप्रकारता तस्या निरुक्तात्मविशेष्यतानिरूपितत्वविरहेऽपि एवमुपनीतघटज्ञानावच्छिन्न आत्मनि यदिच्छादेर्लौकिकप्रत्यक्षं तत्सामग्र्या भट्टमतसिद्धत्वेऽपि घटज्ञानवदात्मत्वेन परात्मोपनीतभानरूपे पटज्ञानानुव्यवसाये तादृशपरात्मविशेष्यतानिरूपितघटज्ञानप्रकारतासत्त्वात् तादृशानुव्यवसायेन घटज्ञानप्रामाण्यग्रहाद् बाधो दुर्वार एवेति वाच्यम् ? उपनीतस्य परात्मनो मुख्यविशेष्यतयानुव्यवसायविषयत्वे तज्ज्ञानस्य समूहालम्बनरूपतया सामग्रीभेदेन तत्र घटज्ञानभासकसामग्र्या अन्वयबोधसामग्रीत्वेन भट्टमतसिद्धतया घटज्ञानप्रामाण्यस्य तद्ग्राह्यत्वेऽपि बाधानवकाशात्, तादृशात्मनः स्वात्मांशे कथंचित् प्रकारत्वे चात्मनो

---

( प्रभा ) घटज्ञानविषयकव्यवसाये इति । घटज्ञानवानहमित्याकारकव्यवसाये इत्यर्थः । अयंच घटानुव्यवसायः घटज्ञानस्य व्यवसायः यश्च विषयानुव्यवसायः सच ज्ञानव्यवसाय इति । उक्तघटज्ञानोपनीतभानेषु=घटज्ञानविशिष्टपटज्ञानवानहमित्यत्रेत्यर्थः । तथाच तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्ना या ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितस्वाश्रयप्रकारताशालिग्रहजनिका सामग्री तज्जन्यग्रहविषयत्वं साध्यं पर्यवसितम् । बाधानवकाशादिति । तथाचोक्तसामग्र्यां निरुक्तभट्टमतसिद्धभिन्नत्वसत्त्वेऽपि आत्मनिष्ठविशेष्यतानिरूपितप्रकारताविरहात्तादृशसामग्र्याः साध्याघटकतया नास्ति बाधावकाश इति भावः ।

लौकिकप्रत्यक्षे=घटमहं जानामीत्याद्याकारके । घटज्ञानवदात्मत्वेनेत्यादि । घटज्ञानवदात्मकालीनपटज्ञानवानहमित्यत्रेति यावत् । बाधो दुर्वार इति=तादृशानुव्यवसायसामग्र्याः साध्यघटकतया ततश्च घटवति घटत्वप्रकारकज्ञानत्वरूपप्रामाण्यग्रहाद् बाध इति भावः । मुख्यविशेष्यतयेति । ननूपनीतं विशेषणतयैव भासते तथा चेदमसंगतमितिचेन्न, मानसे तु नायं दोष इति सिद्धान्तेन सङ्गतेः । कथञ्चिदिति =घटज्ञानवान्सोऽहं पटज्ञानवानिति ज्ञाने प्राक्तशोऽहं न स इति ज्ञानेऽपि कथञ्चित्स्वात्मनि परात्मासंसर्गाग्रहरूपं कारणमुपेत्येत्यर्थः ।

( गा० ) मुख्यविशेष्यताया निवेशनीयतया बाधवारणसम्भवात् । नचैवमोदनकामकर्तव्यताबोधविषयः पाक इत्यादिवाक्यजन्यशाब्दबोधे पाकविशेषणतया ओदनसाधनताज्ञानस्य अन्वयप्रयोजकरूपात्मकस्य भानेऽपि आत्मविशेषणतया तज्ज्ञानाभानात् तादृशशाब्दबोधेन तज्ज्ञानप्रामाण्याग्रहेऽपि न बाधप्रसक्तिरित्यग्रिमतादृशबाधशङ्काया असङ्गतिरिति वाच्यम् ? यथाश्रुताभिप्रायेण तदाशङ्कायास्सङ्गमनीयत्वात् ।[1] यथा त्रिवक्षणे तु आत्मांश

---

( प्रभा ) मुख्यविशेष्यताया इति । अथैवमीदृशरीत्या घटज्ञानवत्परात्मविशिष्टपटज्ञानवत्स्वात्मज्ञानस्य परात्मनो मुख्यविशेष्यत्वाभावेन वारणेऽपि कथं पटज्ञानवत्स्वात्मविशिष्टघटज्ञानवत्स्वात्ममुख्यविशेष्यकसामग्रीवारणं तादृशसामग्र्याः पटज्ञानलौकिकप्रत्यक्षजनकतया भट्टैरनभ्युपगमादितिचेन्न, ज्ञानान्तरविशेष्यतानापन्नत्वस्य साक्षात्परम्परया वा ज्ञानान्तरविशेष्यतापन्नत्वरूपत्वात् । यद्वा ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठमुख्यविशेष्यतायाः समानाधिकरणो यस्तन्निरूपितस्वाश्रयवृत्तिप्रकारताकग्रहः स एव विवक्षणीयः । स्वात्मनिष्ठतादृशग्रहस्य परात्मनिष्ठविशेष्यतासामानाधिकरण्याभानं न दोषः ।

यत्त्वेवं सति भट्टाचार्याणां मुख्यत्वनिवेश आपातत एव घटज्ञानवत्परात्मविशिष्टपटज्ञानवत्स्वात्मग्रहस्यापि विशेष्यताया आश्रये स्वात्मनि तन्निरूपितस्वाश्रयवृत्तिप्रकारताकग्रहविरहादिति, तत्तुच्छम् , उपनीतघटज्ञानसमानाधिकरणपटज्ञानत्वादिना आत्मनि ज्ञानसमानाधिकरणघटकत्वेनात्मनो विशेष्यतया तन्निरूपितस्वाश्रयवृत्तिप्रकारताकग्रहस्य तद्वद्वृत्तित्वेन मुख्यत्वस्यावश्यकत्वात् । वस्तुतो जागरे नियमतः स्वात्मनि विजातीयमनःसंयोगसत्त्वेनानुव्यवसायस्य स्वात्ममुख्यविशेष्यकत्वान्न पूर्वपक्षावतार इति ।

यथाश्रुताभिप्रायेणेति = ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितस्वाश्रयप्रकारताशालिग्रहजनकसामग्रीतिविवक्षानादरे इत्यर्थः । यथाविवक्षणे इति = ज्ञानान्तरविशेष्यतानापन्नेत्यादिरीत्या विवक्षणे इत्यर्थः ।

---

१ नन्वेवं योग्यतायाः शाब्दबोधभानोपगमेऽपि बाधवारणसम्भवात् समाधानासंगतिरित्यत आह यथाविवक्षणे त्विति ।

ननु मिश्रमतासिद्धत्वं दातुं शक्यते एव व्यवसायानन्तरज्ञाततालिङ्गकज्ञानानुमितेर्विषयविशिष्टज्ञानानुमितिरूपाया ज्ञानप्रत्यक्षत्वेन मिश्रमतेऽपि प्रामाण्यग्राहकत्वात् तदनुत्तरशुद्धज्ञानानुमितेश्च मिश्राणां ज्ञानविषयतालिङ्गकानुमितित्वेन तत्सामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च मिश्रमतसिद्धत्वादित्यत आह यथाश्रुतेति । तथाच मिश्रमतासिद्धत्वनिवेशे आयासः सचेह नास्तीति भट्टमतासिद्धत्वं सम्यगिति भावः । विषयेति हेतुगर्भम् । विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषय इति व्याप्तीत्यर्थः । विषयभाने तद्गर्भप्रामाण्यस्य न भानमित्याशङ्काव्युदासाय विषयभानं साधितम् ।

(गा०) एवं यत्र इच्छाश्रयत्वाद्यन्वयितावच्छेदकतया ज्ञानस्य भानं तत्र तादृशज्ञानप्रामाण्याभानेन बाधप्रसक्त्या अन्वयितावच्छेदकरूपस्य शाब्दबोधे भानाभ्युपगमेन समाधानस्य संगमनीयत्वात् ।

यद्यपि ज्ञानजन्यज्ञाततावान् घट इत्यादिप्रत्यक्षेण प्रामाण्यग्रहेण भट्टमते बाधस्य मिश्रादिमतसिद्धभिन्नत्वनिवेशेऽपि उक्तविवक्षायामप्रसक्तिः, तथापि ज्ञाततालिङ्गकशुद्धज्ञानादिसाध्यकात्मादिपक्षकानुमितिसामग्र्या मिश्राद्यनभ्युपगततया प्रामाण्याग्रहेण बाधस्य वारणाय यथाश्रुतानुसारेण वा भट्टमतसिद्धत्वोक्तिः ।

आत्मपक्षकज्ञाततालिङ्गकप्रामाण्यविशिष्टज्ञानसाध्यकानुमितिसामग्रीमादायैव भट्टमते प्रामाण्यस्य यथोक्तसाध्यवत्त्वनिर्वाहः नतु ज्ञाततापक्षकानुमितिसामग्रीमादाय, आत्मपक्षकानुमितेरेवानुव्यवसायसमानविशेष्यकतया तादृशानुमितेरेव तैरभ्युपगन्तव्यत्वात् , अन्यथा अनुभववैषम्यापत्तेः ।

अथैवमपि उपनीताप्रामाण्यविषयकघटादिज्ञानानुव्यवसायेन तदीयप्रामाण्याग्रहात् तादृशसामग्र्या अपि भट्टमतासिद्धत्वात् मिश्रमते बाधस्य दुर्वारतेति चेन्न ? प्रामाण्यभासकसामग्र्या विषयनिरूप्यत्वमर्यादोपबृंहिताया अपि अप्रामाण्यभासकसामग्र्यपेक्षया बलवत्त्वेनानुव्यवसायेऽप्रामाण्यस्य व्यवसायांशे भानासम्भवात् प्रामाण्यभानस्यावश्यकत्वात् । तथाविधसामग्र्या अबलवत्त्वे घटत्वप्रकारकत्वादिना व्यवसायभाने तत्र तदभावादेरपि भानप्रसङ्ग इत्यग्रे वक्ष्यमाणत्वात् ।

यदि चोक्तप्रामाण्यभानसामग्र्या बलवत्त्वोपगमेऽनभ्यासदशापन्नज्ञाने प्रामाण्यसंशयानुपपत्तिरिति मीमांसकैः अप्रामाण्योपस्थितिदशायां तादृशदोषवशात् अनुव्यवसायेऽप्रामाण्यभानमवश्यमेवोपगन्तव्यम्, तथाच तादृशानुव्यवसायसामग्र्या ज्ञानग्राहकत्वेन भट्टानभ्युपगततया प्रामाण्याग्रहात् मिश्रमते बाधो दुर्वार एवेत्युच्यते तदाऽप्रामाण्याग्राहकत्वमपि स्वातन्त्र्येण सामग्रीविशेषणं देयम् ।

---

(प्रभा) ननु गुरुमिश्रमतसिद्धभिन्नत्वनिवेशे ज्ञानजन्यज्ञाततावान् घट इत्यादिप्रत्यक्षसामग्र्या गुरुमिश्रयोर्मते ज्ञाततायाः शशविषाणायमानतया प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन गुरुमिश्रमतसिद्धसामग्रीभिन्नत्वस्य तत्राक्षतत्वेन तादृशभट्टमतसिद्धसामग्रीजन्यग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रामाण्ये विरहेण बाध इति च प्रागुक्तं किन्तु ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितस्वाश्रयप्रकारतेत्यादिविवक्षायां तु तस्य न प्रसक्तिः, तादृशात्मनिष्ठविशेष्यतानिरूपितप्रकारताविरहेणैव तत्सामग्र्याः साध्याघटकतया बाधानवकाशादित्याशङ्कते यद्यपीत्यादिना । उक्तविवक्षायामिति = ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितेत्यादिरीत्या विवक्षायामित्यर्थः ।

सन्निकर्षापेक्षया दोषप्राबल्यमाह यदिचेति । अभ्यासदशायामिष्टापत्ति-

(गा०) वस्तुतस्तु अप्रामाण्योपस्थितेरनुव्यवसायपूर्वं सत्त्वे तुल्यबलसामग्रीभ्यां प्रामाण्याप्रामाण्योभयसंशयरूप एवानुव्यवसायस्तत्र जन्यते, धर्मिज्ञानस्य संशयहेतुताया मीमांसकैरनभ्युपगमात्। तथाच नादृशानुव्यवसायसामग्र्यापि प्रामाण्यग्रहान्न बाधः।

नच यत्रानुव्यवसायपूर्वं नाप्रामाण्यमुपस्थितं तत्राप्यनभ्यासदशापन्नज्ञानप्रामाण्यसंशयात् तदनुरोधेन अनुगतदोषात् तत्र प्रामाण्याग्रहस्तैरवश्यमङ्गीकार्यः तथा च तत्स्थलीयसामग्र्या प्रामाण्याग्रहाद् बाधो दुर्वार एवेति वाच्यम्? अप्रामाण्याग्राहकत्वविशेषणेनापि तादृशबाधवारणासम्भवात्। तद्वारणाय तत्रानुव्यवसायः प्रामाण्यं गृह्णात्येव, तादृशानुव्यवसाये विनष्टे सत्येव च तज्जनितसंस्कारात् प्रामाण्याविषयकज्ञानरूपधर्मिस्मरणे तदुपनीततद्धर्मिविषयकः प्रामाण्यसंशय इत्येव स्वीकरणीयत्वात्। एतेन स्यातःज्ञेय अप्रामाण्याग्राहकत्वविशेषणदानेऽग्राहकान्तस्य निरुक्तार्थकत्वविरोध इति निरस्तम्।

यत्तु व्यवसायोल्लिखितप्रकारविशिष्टधर्मिविशेष्यकत्वमेव अनुव्यवसायेन गृह्यते नतु धर्मान्तरविशिष्टविशेष्यकत्वमिति नानुव्यवसाये तदभाववद्विशेष्यकत्वघटिताप्रामाण्यावगाहितेति समाधानम्। तत्तुच्छम्? धर्मान्तरविशिष्टविशेष्यकत्वस्य लौकिकविषयताया एवानभ्युपगमेन उपनीतभ्रमत्वस्य प्रमात्वाभावस्य च अनुव्यवसायेनावगाहनेऽविरोधात्। पित्तादिदोषाद् यथा शंखादौ अपीतत्वादेरग्रहे पीतिमाद्यारोपस्तथा दोषविशेषाद् यत्रानुव्यवसाये अप्रामाण्यमात्रभानं तत्सामग्रीमादाय बाध इत्यपि न शंक्यम्, अनुभवानुरोधेन क्वचित् तथा दोषकल्पनेऽपि प्रकृते तथाविधदोषकल्पकानुभवविरहात्।

---

(प्रभा) रेवेत्यत आह अनभ्यासेति। व्यवसायगर्भतद्भानसामग्र्या बलवत्त्वात् तुल्येति। प्रामाण्यभासिका सामग्री लौकिकसन्निकर्षगर्भा अप्रामाण्यभासिका च दोषगर्भेति तुल्यत्वम्। तदनुरोधेनेति = औत्तरकालिकप्रामाण्यसंशयानुरोधेनेत्यर्थः। तत्र = अनुव्यवसाये। अन्यथा अनुव्यवसायस्य प्रामाण्यनिश्चयत्वेन प्रतिबन्धकतया ततःप्रामाण्यसंशयो न स्यादिति भावः।

ननु धर्मिनाशे धर्मिमानं न स्याचद्भासकसन्निकर्षाभावादत आह तज्जनितेति। प्रामाण्यविषयकस्मरणरूपत्वे तु प्रामाण्यसंशयो न स्यादतः प्रामाण्याविषयकेति। मीमांसकानां धर्मिज्ञानाकारणत्वस्योक्तत्वादाह तदुपनीतेति। इत्येवेति। मिश्रभट्टाभ्यामिति शेषः। पूर्वकल्पं निरस्यति एतेनेति।

नर्विति। अन्यथा इदन्त्वादिविशिष्टविशेष्यकत्वादेर्ग्रहापत्तिः। अनुव्यवसायात्पूर्वं प्रामाण्योपस्थितौ दोषविशेषान्न प्रामाण्यभानं लौकिकसामग्रीतोऽपि दोषविशेषबलवत्त्वस्य सत्प्रतिपक्षादौ वक्तव्यत्वादिति शङ्कते पित्तादीति। अपीतत्वादेरिति

( दी० ) विशिष्टव्यतिरेकस्य तत्रापि सत्त्वाददोषः। ज्ञाततापत्यक्षजनक-सामग्रीवारणाय ज्ञानग्राहकेति।

( गा० ) अथ यत्र घट एव अघटोऽयं घट इत्याहार्यं तत्र तदनुव्यवसायस्य घटत्वाभाववति घटत्वप्रकारकत्वेन तज्ज्ञानविषयकस्य घटत्ववतीत्यादि-प्रामाण्याग्राहकत्वात् भट्टमतासिद्धतत्सामग्रीमादाय बाध इति चेन्न ? प्रकार-विरुद्धधर्मावच्छिन्नविशेष्यत्वाघटितप्रामाण्यस्यैव पक्षत्वोपगमात् तादृशा-प्रामाण्याश्रयग्राहकसामग्र्या एव साध्यघटकत्वात्। अयं घट इत्यादिज्ञान-निष्ठमनस्सन्निकर्षघटितसामग्र्या ग्राहकत्वेन भट्टमतसिद्धभिन्नत्वोक्त्यापि संग्रहसम्भवात् ज्ञानग्राहकत्वपर्यन्तनिवेशनप्रयोजनं गुरुमते व्यवसायसामग्र्यु-पग्रह एवेत्याशयेन मिश्रमतानुपन्यासः। *विशिष्टव्यतिरेकस्य*=प्रामाण्याग्राह-कत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तद्भेदस्य। *तत्र*=तादृशसा-मग्र्याम्। एवं प्रतियोगिकोटौ ज्ञानग्राहकत्वानिवेशे भेदविशेष्यसामग्र्यामपि तद्विशेषणं व्यर्थं स्यात्, तन्निवेशस्यावश्यकत्वे च विशेष्ये तद्विशेषण-स्यापि सार्थक्यमिति सूचयितुम् भट्टमते तद्व्यावृत्तिं दर्शयति *ज्ञाततापत्यक्ष-जनकेति*। घटादिसामग्र्यामपि विशिष्टभेदसत्त्वात् तज्ज्ञानग्राहकत्वस्य सामग्री-विशेषणत्वाभावे तत्सामग्रीपरिग्रहेऽपि केवलग्राहकत्वनिवेशेनापि तद्व्यावृत्ति-सम्भवात् सामग्रीजन्यग्रह एव यावत्त्वविशेषणे तज्जन्यग्रहाप्रसिध्या च न बाधसम्भव इति सा नोपात्ता।

यद्यपि घटादिग्राहकसामग्रीमादाय दर्शितव्यावृत्तिसम्भवात् ज्ञात-ताप्रत्यक्षपर्यन्तसामग्रीनिवेशनमफलं, तथापि मिश्रादिमतासिद्धत्वम् परित्यज्य भट्टमतसिद्धत्वपर्यन्तनिवेशव्यावृत्तिर्ज्ञाततापत्यक्षमादायैव सम्भवतीति ज्ञात-ताप्रत्यक्षपर्यन्तानुधावनम्। ज्ञानविशेषितज्ञाततविषयकानुमित्यादेर्मिश्रादि-भिरपि ज्ञानविषयतागोचरानुमितित्वेन स्वीकारात् तत्सामग्र्या अपि ज्ञान-

(प्रभा) लौकिकसन्निकर्षस्य दौर्बल्यप्रापकम्। आहार्येति। आहार्यभ्रमत्वस्य लौकिकताया अन्यत्र व्यवस्थापितत्वात्। प्रकारविरुद्धेति। अत्र विपरीतानुगमाय विरुद्धपदम्। तथाच तादृशधर्मावच्छिन्नत्वेन विशेष्यता विवक्षणीयेति भावः।

ननु प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धा या सामग्री तद्भिन्न-सामग्रीजन्यग्रहविषयत्वमेव निवेश्यतां किम्पुनर्ज्ञानग्राहकत्वनिवेशनेत्याशङ्क्य द्वितीयज्ञान-ग्राहकत्वस्यानुयोगिकोटौ निवेशस्य प्रयोजनमुपदर्शयति दीधितौ ज्ञाततापत्यक्षजनकसामग्री-वारणाय ज्ञानग्राहकेति। तथा च प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वस्य ज्ञाततापत्यक्षसामग्र्यामसत्त्वेन तद्भिन्नत्वस्य तत्र सत्त्वात् तादृशसामग्रीजन्यज्ञाततापत्यक्षा-त्मकग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति अनुयोगिविशेषणमपि ज्ञानग्राहकत्व-मावश्यकमिति भावः।

( दी० ) नच विषयबाधभ्रमकालीनानुव्यवसायेन प्रामाण्याग्रहात्

(गा०) ग्राहकसामग्रीत्वेन तन्मतसिद्धता। ज्ञानजन्यज्ञातवान् इत्यनुमित्यादि-सामग्र्या गुरुणा अनङ्गीकारेऽपि सापि अन्यथाख्यातिवादिना मिश्रेण उपगतैवेति तादृशसामग्रीमादाय भट्टमतसिद्धभिन्नत्वनिवेशव्यावृत्त्यसङ्गतिरिति प्रत्यक्षोपादानम्।

यद्यपि ज्ञातताप्रत्यक्षमपि ज्ञानविषयत्वोपनीतभानरूपतया मिश्रानुमतम्, तथापि ज्ञातताख्पविषयघटिततत्सामग्री ज्ञानग्राहकत्वेन न तन्मतसिद्धेति तामादाय व्यावृत्तिसङ्गतिः। ज्ञानग्राहकत्वेनेत्यत्र ज्ञानपदम् प्रकृतप्रामाण्याश्रयपरम्, अन्यथा पटादिज्ञानविषयकघटादिशाब्दबोधादिसामग्र्या गुरुमते घटादिज्ञानप्रामाण्यग्राहिकाया असंग्रहात्। तथाच अनुयोगिविशेषणमपि प्रकृतप्रामाण्याश्रयग्राहकत्वं बोध्यम्; अन्यथा पटादिज्ञानग्राहकसामग्र्या घटादिज्ञानप्रामाण्याग्रहेण बाधप्रसङ्गात्।

एतेन ग्राहकसामग्रीमात्रस्यैव गुरुमते ज्ञानग्राहकतया तन्मते ज्ञानपदवैयर्थ्यमिति परास्तम्, प्रकृतप्रामाण्याश्रयपरतया तत्सार्थक्यात्।

अथ प्रामाण्यघटकघटत्वादिप्रकारकत्वाश्रयग्राहकसामग्रीनिवेशेनैव उपपत्तौ प्रामाण्याश्रयग्राहकसामग्रीनिवेशनमनर्थकम्, नचैवं ज्ञाततायाः अपि घटत्वादिप्रकारकत्वाश्रयत्वात् तद्ग्राहकसामग्रीमादाय बाध इति वाच्यम्? ज्ञानग्राहकत्वेनेत्यत्रापि घटत्वादिप्रकारकत्वाश्रयग्राहकताया एव विवक्षणीयतया घटत्वादिप्रकारकज्ञातताप्रत्यक्षसामग्र्या भेदप्रतियोगिकोटौ निवेशनीयत्वादिति चेन्न? प्रामाण्यपर्यन्तानिवेशे घटत्वादिप्रकारकभ्रमानुव्यवसायसामग्र्या वास्तवघटत्वाद्याश्रयविशेष्यकत्वघटितस्य प्रामाण्यस्याग्रहेण बाधस्य दुर्वारत्वात्।

*विषयबाधभ्रमकालीनेति*। नायं घट इत्यादिभ्रमाव्यवहितोत्तरोत्पन्नेत्यर्थः। नच तदानीमयं घट इत्यादिव्यवसाय एव न सम्भवति इति कथमनुव्य-

(प्रभा) असंग्रहादिति। प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वात्। ज्ञानविषयो घट इत्यादिशाब्दानुमितिसामग्रीणामसंग्रहेऽपि न क्षतिरित्यादेः प्राक्सिद्धान्तितत्वेन पटज्ञानकालीनो घट इति शाब्दादिसंग्रहापातो व्यर्थ एवेति न शङ्क्यम्, घटादिपदस्य वस्तुविशेषोपलक्षणतया तत्प्रत्यक्षाप्रसिद्धेः ज्ञानान्तराविषयकशाब्दबोधाद्यप्रसिद्धेश्चौकशाब्दबोधमादायैव तत्प्रामाण्ये साध्यसत्ताया वाच्यत्वात्। पटज्ञानविषयो घट इतिशाब्दात्मकव्यवसायसामग्र्याः संग्रहस्य भट्टेनेत्यादिपंक्तौ दर्शनीयतया स्वाश्रयज्ञानविषयघटशाब्दबोधाद्यसंग्रहनैयत्यस्य व्यक्तत्वाच।

नायं घट इति। तथाच नायं घट इत्याकारकबाधभ्रमोत्तरकाले लौकिकसन्निकर्षवशाद् घटव्यवसाये सति तदनन्तरं जातो योऽनुव्यवसायस्तदीयविषयत्वस्य घटत्ववद्विशेष्य-

( दी० ) वाधः, तदापि तद्ग्रहोपगमाद् , वाधग्रहाभावेन विशेषणाद् वा । रीतिरुक्तैव ; अथ गुरुनये घटेन जलमाहरेत्यादौ छिद्रेतरत्वादेरिव ओदनकामकर्तव्यतावोधविषयः पाक इत्यादौ शब्दादनुपस्थितस्यापि अन्वयप्रयोजकस्य ओदनादिसाधनताज्ञानस्यापि शाब्देन ग्रहात् तत्प्रामाण्याग्रहाच्च वाधः ।

---

( गा० ) सायोदय इति वाच्यम् ? भिन्नेन्द्रियादिजन्यवाधभ्रमोत्तरं लौकिकसन्निकर्षजन्यव्यवसायसम्भवेन अनुव्यवसायोपपत्तेः । गुरुमते तादृशव्यवसायात्मकज्ञानग्रहे विशेष्ये घटत्वादिमत्ताया लौकिकसन्निकर्षाद् भाने तादृशवाधभ्रमो न विरोधीति प्रामाण्यभानसम्भव इति मिश्रमतानुसरणम् । वाधस्य प्रमात्वे व्यवसायस्य प्रामाण्याश्रयत्वासम्भवात् *वाधभ्रमेत्युक्तम्* । समाधत्ते *तदापीति* । तद्ग्रहोपगमात् = विषयस्य तद्वत्त्वांशे निर्धर्मितावच्छेदकप्रामाण्यग्रहोपगमात् इत्यर्थः । समानविशेष्यकस्यापि ज्ञानस्य विशेष्यांशे समानप्रकारकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति भावः । समानविषयतामात्रेण विरोधित्वे प्रकारधर्मिकावृत्तित्वज्ञानस्य तत्प्रकारकज्ञानसामान्यं प्रति विरोधित्वे वा पुनराह *वाधग्रहाभावेनेति* । धर्मिणि प्रकारवत्त्वग्रहप्रतिबन्धकाभावेनेत्यर्थः ।

अथैवमपि विशेष्यत्वाद्यंशे घटत्वादिना घटादेर्वाधग्रहे विशेष्यतात्वावच्छिन्नांशे घटत्वादिविशेषितघटीयत्वादिघटितप्रामाण्यभानासम्भवाद् वाधो दुर्वार एव, वाधग्रहपदेन प्रामाण्यभानप्रतिबन्धकमात्रविवक्षणे 'तदापि तद्ग्रहोपगमात्' इत्यनेन एतत्समाधानस्य वैकल्पिकताविरोध इति चेन्न ? विशेष्यतात्वस्य घटादिधर्मितावच्छेदकतया न प्रामाण्यघटकता, अपितु एकत्र द्वयमिति रीत्या विशेष्यताविशेषणत्वेन उभयोस्तथात्वमित्याशयेन विकल्पसङ्गतेः । अत एव ज्ञाने विषयितांशे च विषयवाधग्रहदशायाम् उत्पन्नव्यवसाये ज्ञानभानासम्भवेन स्वप्रकाशतानुपपत्तिरित्यपि समाहितम् ।

ननु वाधभ्रमो गुरुमते ज्ञानद्वयरूपः, मिश्रमते विशिष्टविषयकैकज्ञानरूपः तयोः कथमनुगतरूपेण प्रवेश इत्यत आह *रीतिरुक्तैवेति* । तत्तद्धर्मिनिरूपिततत्तद्धर्मनिष्ठाविशेषणताकत्वेन प्रामाण्यग्रहप्रतिबन्धकत्वेन वानुगमसम्भव इति भाव इति भुजङ्गभूषणभट्टाचार्याः । *तत्प्रामाण्याग्रहात्* = ओदनसाधनताज्ञानप्रामाण्याग्रहात् ।

---

( प्रभा ) कत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकज्ञानत्वरूपप्रमात्वे विरहान्मिश्रमतेऽपि वाधः, नायं घट इत्याकारकवाधकाले घटत्ववत्त्वेन घटस्यानुव्यवसाये भानासम्भवादिति भावः । प्रामाण्यग्रहोपगमादिति । तथाच तत्रानुव्यवसाये घटत्ववत्त्वांशे निर्धर्मितावच्छेदकप्रमात्वस्य भानसम्भवेन न वाध इति भावः ।

(दी०) भट्टेन शब्दादनुपस्थितार्थस्य शाब्दबोधप्रवेशानभ्युपगमात् । तदग्रहेऽपि कर्तव्यतावोधग्रहात् न ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमिति चेन्न,

---

(गा०) नचौदनसाधनतात्वेन साधनताभाने साधनेतरावृत्तित्वादिघटितस्य साधनतात्वस्य भानेन साधनत्वेन साधनभानात् तज्ज्ञाने साधनत्ववति साधनत्वप्रकारकत्वरूपं प्रामाण्यमस्तीति तदपि तेन गृह्यत एव, गुरुमते स्ववृत्तिप्रामाण्यमात्रस्यैव ज्ञानेन ग्रहादिति वाच्यम् ? साधनतात्वस्याखण्डोपाधिरूपतायाः साधनत्वानां कार्यादिभेदेन भिन्नानाम् अनुगमाय अवश्यमुपगन्तव्यतया तद्भाने साधनत्वेन साधनभानानियमात्, साधनमुख्यविशेष्यकज्ञानीयविशेष्यतावटितप्रामाण्यस्य तादृशशाब्दबोधावृत्तेस्तादृशबोधविषयवृत्तेः तेन ग्रहीतुमशक्यतया उक्तरूपसाधनतात्वभानेऽपि बाधस्य दुर्वारत्वाच्च ।

तादृशसामग्र्या ज्ञानग्राहकत्वेन भट्टमतासिद्धत्वं दर्शयति *भट्टेनेति* । *शाब्दबोधप्रवेशानभ्युपगमादिति* । तथाच घटज्ञानविषयो घट इत्यादिशाब्दाद्यात्मकव्यवसायसामग्र्या गुरुमते संग्रहानुरोधेन ज्ञानग्राहकत्वेनेत्यत्र ज्ञानपदस्य प्रकृतप्रामाण्याश्रयज्ञानपरतया उक्तत्वात् उक्तसामग्र्याः प्रकृतप्रामाण्याश्रयौदनसाधनत्वज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमव्याहतमेवेति न तादृशसामग्रीव्यावृत्तिरिति भावः । गुरुमतेऽपि घटत्वप्रकारकज्ञानविषयो घट इत्यादिव्यवसायसामग्रीवदुक्तव्यवसायसामग्र्यपरिग्रहेऽपि न क्षतिरिति सामान्यतो ज्ञानग्राहकत्वमेव निवेशनीयमतो नोक्तक्रमेण बाध इत्याशयेन शङ्कते *तदग्रहेऽपि* इति । *तदग्रहे*=ओदनसाधनताज्ञानाग्रहे ।

---

(प्रभा) अथ घटेन जलमाहरेत्यादौ योग्यतावशाद् यथा घटकरणकशाब्दबोधेऽपदार्थस्य छिद्रेतरत्वस्य भानं तथा ओदनकामकार्यताज्ञानविषयः पाक इत्याकारकशाब्दबोधेऽपि ओदनसाधनताज्ञानविषयतारूपयोग्यताज्ञानवत्त्वात्तादृशयोग्यत्वस्यौदनसाधनताज्ञानविषयत्वस्य शाब्दबोधे भानम्भवतीति तादृशयोग्यताज्ञानघटितनिरुक्तशाब्दबोधसामग्र्या ज्ञानग्राहकत्वेन भट्टमतासिद्धतया तज्जन्यग्रहविषयत्वस्यौदनसाधनताज्ञाननिष्ठौदनसाधनत्ववति ओदनसाधनत्वप्रकारकज्ञानत्वरूपप्रमात्वे विरहाद् बाधो दुर्वार इत्याशङ्कते दीधितौ *अथेत्यादिना* । ओदनकामकार्यताज्ञानविषयः पाक इत्यत्रापि जात्यखण्डोपाध्यतिरिक्ततया साधनतात्वभाने साधनतात्वस्य च साधनेतरावृत्तित्वे सति सकलसाधनवृत्तित्वरूपतया साधनत्वेन साधनभानमप्यनिवार्यम् । एवञ्च साधनत्ववति साधनत्वप्रकारकज्ञानत्वरूपं प्रमात्वमपि तत्र भातमेवेत्याशङ्कते *नचेति* । साधनत्ववति साधनतात्वभानेऽपि प्रकारद्वयमाश्रित्य बाधं वारयति *साधनतात्वस्याखण्डोपाधिरूपतायाः इत्यादिना* । निरुक्तशाब्दसामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वविरहात्साध्याघटकत्वयैव नास्ति बाध इत्याशङ्कते दीधितौ *भट्टेनेत्यादिना* ।

( दी० ) शब्दाजन्यकाम्यसाधनताज्ञानघटितायाःशाब्दसामग्र्याःभट्टेनानभ्युपगमात् ।

---

( गा० ) यद्यपि सामान्यतो ज्ञानग्राहकतानिवेशेनोक्तवारणेऽपि घटत्वप्रकारकेच्छाविषयोऽयमित्यादौ शब्दानुपस्थितस्य योग्यतात्मकघटत्वादिप्रकारकज्ञानस्य शाब्देन ग्रहात् तत्प्रामाण्याग्रहात् बाधो दुर्वार एव । ज्ञानग्राहकत्वेनेत्यत्र सविषयकग्राहकत्वविवक्षणे इच्छादिविषयकज्ञानप्रामाण्यपक्षकस्थले सिद्धसाधनम्, तादृशप्रामाण्यग्राहिकाया व्यवसायसामग्र्याःप्रामाण्याग्राहकत्वेन इच्छारूपसविषयग्राहकत्वेन भट्टाभ्युपगतत्वात् तद्भिन्नप्रामाण्यानुमित्यादिसामग्रीग्राह्यत्वस्य प्रामाण्ये सत्त्वात् । अस्तु वा ज्ञानमित्यादिशाब्दबोधाद्यात्मकव्यवसायप्रामाण्यवत् तदपि प्रामाण्यम् पक्षबहिर्भूतम्, अस्तु च ज्ञानपदं सविषयपरमेव, तथापि कम्बुग्रीवादिमान् इत्यादौ घटत्वादिप्रकारकज्ञानविषयत्वस्यापि पदानुपस्थितस्य अन्वयितावच्छेदकतया भानात् तादृशज्ञानप्रामाण्यस्य च तत्राभानात् बाधस्य दुर्वारतैव । तथापि सामान्यतो ज्ञानग्राहकत्वनिवेशमभ्युपेत्य सम्भवाभिप्रायेण उक्तस्थल एव प्रकारान्तरेण बाधं संगमयति *शब्दाजन्येति* । शब्दाजन्यकाम्यसाधनताज्ञानोपस्थितिघटितसमुदायपर्याप्तसामग्रीत्वस्य ज्ञानग्रहोपधायकतावच्छेदकतया भट्टमतासिद्धत्वादित्यर्थः ।

न च तत्र शाब्दबोधस्य आनुभविकत्वे तज्जनककाम्यसाधनताज्ञानोपस्थितेः पदजन्यत्वमेव भट्टेन कल्पनीयम् । तथा च तत्साधारणसामग्रीत्वमपि तादृशशाब्दबोधोपधायकसमुदायपर्याप्तत्वादिप्रकारेण प्रामाण्याविषयकज्ञानग्रहोपधायकतावच्छेदकतया भट्टाभिमतमिति वाच्यम् ? यत्कालीनकाम्यसाधनताज्ञानोपस्थितौ पदजन्यत्वविरहो भट्टेनापि निश्चितः, तत्कालीनशाब्दबोधजनकतज्जन्यज्ञानोपस्थितेःशाब्दबोधानुपधायकत्वेन भट्टाभिमतायाः शाब्दबोधोपधायकत्वेन भट्टेनाज्ञानात् तत्साधारणसमुदायत्वस्य उक्तप्रकारेण तदीयाभ्युपगमेऽभानात् तत्कालीनसामग्रीमादाय बाधस्य दुर्वारत्वात् ।

---

( प्रभा ) निरुक्तशाब्दसामग्र्या भट्टेनानभ्युपगमादेव भट्टमतसिद्धभिन्नत्वं सुलभमिति दर्शयति दीधितौ शब्दाजन्येत्यादिना ।

शब्दाजन्येति । कारणाकारणसाधारणतादृशसामग्रीत्वस्य भट्टमतेऽतिप्रसक्तत्वेन ज्ञानग्रहोपधायकतानवच्छेदकत्वादितिभावः । शाब्दबोधव्यक्तिविशेषमादाय सङ्गमयति यत्कालीनेति । पदजन्यत्वेन गृहीतज्ञानोपस्थितिघटितसामग्रीत्वात् पदाजन्यज्ञानोपस्थितिघटितसामग्रीवृत्तिसमुदायत्वमन्यदित्यावेदयितुं यत्कालीनेत्यादि । तादृशसमुदायत्वं ज्ञानज्ञानग्रहोपधायकतावच्छेदकमिति न भट्टस्य ज्ञानं, पदाजन्यज्ञानोपस्थितौ ज्ञानग्रहोपधायकत्वाज्ञानात्तत्प्रतिबन्धकस्य तत्र ज्ञानग्रहानुपधायकत्वज्ञानस्यैव सत्त्वादित्यर्थः ।

(गा०) यदि चोक्तविशेषदर्शनदशायां तत्कालीनकाम्यसाधनताज्ञानोपस्थितित्वादिरूपविशेषधर्मपुरस्कारेण तादृशोपस्थितेः शाब्दबोधोपधायकतया भट्टज्ञानविषयत्वासम्भवेपि तादृशविशेषदर्शनशून्यतादशायामुक्तविशेषधर्मप्रकारेण ज्ञानदशायामपि उपस्थितित्वादिसामान्यधर्मप्रकारेण तदीयज्ञानविषयत्वसम्भवात् उक्तरूपेण तदुपस्थितिसाधारणसामग्रीत्वं भट्टाभ्युपगमविषय एवेत्युच्यते, तदा चक्षुस्संयोगादिघटितव्यवसायसामग्र्या अपि सामान्यतो ज्ञानग्रहोपधायकत्वेन भट्टाभ्युपगमविषयत्वे बाधकाभावात् तन्निष्ठसमुदायत्वमपि दुस्संग्रहं स्यात् ।

नच प्रामाण्याविषयकज्ञानग्रहोपधायकतावच्छेदकतया भट्टमतसिद्धभिन्नत्वं वक्तव्यम्, व्यवसायसामग्र्यां प्रामाण्याग्राहकत्वसहितज्ञानग्राहकत्वप्रकारकं भट्टज्ञानं गुरुमते न्यायमते च न प्रमा, गुरुमते तस्याः प्रामाण्याग्राहकत्वस्य, न्यायमते ज्ञानग्राहकत्वस्य च बाधादिति वाच्यम्? एवं सति अनुव्यवसायसामग्र्याः सामान्यतो ज्ञानग्राहकत्वप्रकारकभट्टज्ञानस्य प्रामाण्याग्राहकत्वविषयकत्वेऽपि नैयायिकमते उभयांश एव प्रमात्वात् प्रामाण्यानुमित्यादिसामग्रीणामेव साध्यघटकतया निषेधसाधने बाधात् । तस्माद् येन रूपेण स्वाश्रयग्रहोपधायकतावच्छेदकता सामग्रीपर्याप्तधर्मस्य तादृशरूपे प्रामाण्यग्राहकतावच्छेदकत्वविशिष्टज्ञानग्राहकतावच्छेदकत्वप्रकारकभट्टाभ्युपगमविषयतानवच्छेदकत्वं विवक्षणीयम् । चक्षुस्संयोगादितत्कारणसमुदायपर्याप्तधर्मत्वेन च व्यवसायादिसामग्रीपर्याप्तधर्मस्य स्वाश्रयग्रहोपधायकतावच्छेदकता तादृशधर्मत्वस्य न निरुक्तभट्टाभ्युपगमविषयतावच्छेदकत्वमिति गुरुमतादिसंग्रहः । उक्तशाब्दबोधसामग्रीपर्याप्तधर्मस्य पदजन्यकाम्यसाधनताज्ञानोपस्थितिमनिवेश्य पाकविशेष्यकतादृशज्ञानविषयत्वरूपयोग्यताज्ञानादिरूपतत्तत्कारणपर्याप्तधर्मत्वेन

---

( प्रभा ) विशेषदर्शनेति = यत्कालिककाम्यसाधनताज्ञानोपस्थितिः पदाजन्यतया न ज्ञानग्रहोपधायिकेति बाधदर्शनेत्यर्थः । तादृशेति । यत्समुदायत्वस्योक्तप्रकारेण तदीयाभ्युपगमे मानाभावस्तस्यैव कालान्तरे तदीयाभ्युपगमे मानमिति न बाध इत्याशयः । अत एव यत्कालीनतत्कालीनेत्युपलक्षणम् । प्रकारान्तरेणापि बाधं निरस्यति उक्ते ति । तद्दशायाम् = उक्तविशेषदर्शनदशायाम् । व्यवसायेत्यनुव्यवसायोपलक्षणम् । सामान्यत इति = ज्ञानभासकसामग्री स्वानन्तरोत्पन्नज्ञानविषयकग्रहोपधायिकेत्यभ्युपगमेत्यर्थः ।

गुरूणां सिषाधयिषिताया एव सामग्र्याःनैयायिकानामतथात्वे परतस्त्वासिद्धिरविरोधादित्यालोच्य न्यायमते चेत्युक्तम् । तस्मात् = व्यवसायसामग्र्या दुस्संग्रहत्वात् । येन रूपेण स्वाश्रयग्रहोपधायकतावच्छेदकता दर्शिता तस्य निरुक्तभट्टाभ्युपगमविषयतानवच्छेदकत्वमाह पदजन्येति । योग्यताज्ञानादीति = पदाजन्ययोग्यताज्ञानेत्यर्थः । योग्यताविषयकशाब्दबोधे अर्थाबाधरूपयोग्यताज्ञानत्वेन तादृशयोग्यताज्ञानकारणत्वस्य भट्टेनोपगमात् । अत्र यादृशशाब्दबोधे न तदनुप्रवेशस्तादृशसामग्री भट्टमतसिद्धभिन्नापि न स्वाश्रय-

( दी० ) मैवम्, शाब्दबोधे हि योग्यताज्ञानं कारणम्, साच तेषामन्वय-प्रयोजकरूपवत्त्वम्, तेन तज्ज्ञानम् प्रथमं मृग्यते। नच शाब्दबोधे तदनुप्रवेशोऽपि नियतो माना भावात्। नहि उपस्थितत्वादेव शाब्दबोधे भानम्, उपस्थितावाधित-यावत्पदार्थानामेव तथा भानप्रसङ्गात्। नियोज्यान्वयेऽपि काम्यसाधनताज्ञानस्य प्रथमं ज्ञानम् नतु शाब्दबोधेऽपि तद्भानम् इत्यपूर्वे वक्ष्यते।

---

( गा० ) तादृशज्ञानग्राहकतावच्छेदकता, पदजन्यकाम्यसाधनताज्ञानोपस्थित्या-दिपर्याप्तधर्मत्वेन च निरुक्तभट्टाभ्युपगमविषयतेति वाधो दुर्वार एव।

नच तादृशयोग्यताज्ञानस्य भट्टमतेऽपि शाब्दधीहेतुतया तन्मतेऽपि तस्य सामग्रीशरीरे निवेशनमावश्यकम्; तथाच अधिकपदजन्यतादृशयोग्यता-ज्ञानोपस्थितिनिवेशेऽपि दर्शितसामग्र्या भट्टमतसिद्धत्वमस्त्येवेति वाच्यम्? एवमपि पदजन्ययोग्यताज्ञानविरहकालीनदर्शितशाब्दसामग्रीमादाय बाधस्य दुर्वारत्वात्। ( येन रूपेण गुरुमते सामग्रीपर्याप्तधर्मस्य ज्ञानग्राहकतावच्छेद-कता तद्रूपस्य निरुक्तभट्टाभ्युपगमविषयतावच्छेदककोटिप्रवेशो व्याहत एवेति वाच्यम्, अधिकान्तर्भावेन पर्याप्तिघटितधर्मस्य विलक्षणया न्यूनपर्याप्त्या-ऽघटितत्वात्। पाठान्तरमेतत् )।

योग्यताज्ञानस्य शाब्दधीहेतुत्वेऽपि पदानुपस्थितयोग्यतायाः शाब्दबोधविषयत्वानभ्युपगमात् नोक्तसामग्री काम्यसाधनताधीग्राहिकेति तथा तत्प्रमाण्याग्रहेऽपि न क्षतिरिति समाधत्ते *मैवमित्यादिना*। पदजन्योपस्थित्या-दिसत्त्वे योग्यतायाश्शाब्दबोधप्रवेशे बाधकाभाव इत्यतो 'नियत' इत्युक्तम्।

नन्वेवं स्वर्गकामो यजेतेत्यादौ कामनाविशिष्टस्य यागे कार्यताबोधोपयो-गित्वरूपनियोज्यत्वेनान्वये काम्यसाधनताज्ञानोपयोगित्वरूपयोग्यतायाः पदानु-पस्थिताया अपि अन्वयितावच्छेदकतया भानमिति तत्सिद्धान्तो भज्येतेत्यत आह *नियोज्यान्वयेऽपीति*। *प्रथमं ज्ञानमिति*। तैरस्वीक्रियत इति शेषः। तावतैवे-ष्टसाधनताघटकापूर्वोपस्थित्याद्यर्थम् अपूर्ववाच्यताया आवश्यकत्वादिति भावः। *नतु शाब्दबोधेऽपीति*। नचैवं "इष्टसाधनताविधिपक्षे स्फुटैवानुपपत्तिः,

---

( प्रभा ) ग्रहोत्पत्तिप्रयोजिकेति सूचयित्वा यादृशशाब्दबोधे न तदनुप्रवेशस्तादृशसामग्रीं व्यावर्त्तयितुं नियतपदमित्याशयेन तादृशसामग्रीं स्फुटयति पदजन्येति। तथाच तादृश-शाब्दबोधसामग्र्या भट्टमतसिद्धत्वादेव व्यावृत्तिरितिभावः।

ओदनकामकार्यताज्ञानविषयः पाक इत्यत्र प्रसक्तं बाधं वारयति मैवमित्या-दिना। मानाभावादिति। तथाच योग्यताज्ञानं हि शाब्दबोधे कारणं नतु योग्यतायाः शाब्दबोधे भानं भवतीत्यत्र कश्चिन्नियमो वर्त्तते मानाभावादेवञ्च नोक्तबाध इति भावः। कामनाविशिष्टस्येति। इष्टेति। यागे साक्षादिष्टसाधनत्वं बाधितम्।

( दी० ) क्वचिच्छिद्रेतरत्वादेरपि भानम्, एकविशेषबाधे शाब्दबोध-सामान्यसामग्र्या विशेषान्तरप्रकारकबोधजननस्वाभाव्यात् ।

---

(गा०) कार्यताविधिपक्षेऽपि अन्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न विशेषः" इति मणिकारलेखनविरोध इति वाच्यम्? तादृशग्रन्थस्य हि फलीभूतशाब्दबोध एवेष्टसाधनताया अन्वयितावच्छेदकतया भाने न तात्पर्यं किन्तु स्वर्गसाधनत्वस्य अन्वयप्रकारतया अन्वयप्रयोजकरूपयोग्यतात्मकतया तज्ज्ञानस्य फलीभूतबोधात् पूर्वं अवश्यमङ्गीकर्त्तव्यतया तद्बोधकप्रमाणान्तरविरहेण शाब्दमेव ज्ञानं पूर्वमङ्गीकर्त्तव्यम्, तत्रापि विधेस्तात्पर्योपगमादित्यत्रैव । अधिकं नियोज्यान्वये वक्ष्यामः ।

नन्वेवं घटेन जलमाहरेत्यादौ पदानुपस्थितं छिद्रेतरत्वादिकमन्वयितावच्छेदकतया भासते इति तत्सिद्धान्तभङ्ग इत्यत आह *क्वचिदिति* । *एकविशेषबाध इति* । नचैवं यथा सच्छिद्रे घटे जलाहरणसाधनताबाधात् छिद्रेतरघटत्वावच्छिन्ने पदानुपस्थितेऽपि जलाहरणसाधनत्वान्वयधीस्तथा काम्यसाधनताज्ञानाविषयपाके कार्यताधीविषयत्वबाधबलात् पदानुपस्थितेऽपि काम्यसाधनताधीविषयत्वविशिष्टे पाके कार्यतान्वयधीरावश्यकी इति तादृशसामग्रीमादायैव बाध इति वाच्यम्? भट्टैरपीतरबाधबलेन पदानुपस्थितार्थस्य शाब्दबोधे भानोपगमात् ।

अथैवमपि अर्थाध्याहारवादिनां गुरूणां मते तात्पर्यसत्त्वे पदानुपस्थितस्यापि काम्यसाधनताज्ञानादेर्भानावश्यकतया बाधवारणमशक्यमेवेति चेन्न? यद्यद्रूपावच्छिन्नसमुदायपर्याप्तत्वेन प्रामाण्याविषयकज्ञानग्राहकतावच्छेदकता भट्टाभ्युपगता तत्तद्रूपशून्यकारणान्तर्भावेन पर्याप्तत्वस्य स्वाश्रयग्राहकतावच्छेदकत्वविशेषणत्वोपगमेन सामञ्जस्यात् ।

गुरुमते व्यवसायसामग्रीघटकचक्षुस्संयोगादेः मिश्रमते चानुव्यवसायसामग्रीघटकव्यवसायादेःतत्तद्रूपशून्यत्वात् तदन्तर्भावेन पर्याप्तस्य ज्ञानग्राहकतावच्छेदकरूपस्य संग्रहः । अध्याहृतज्ञानग्राहकसामग्र्यां पदजन्यतदुपस्थितेरधिकायाः भट्टमते निवेशेऽपि तन्मतासिद्धकारणस्य गुरुमतेऽनिवेशाद् गुरुमतसिद्धतादृशसामग्रीपर्याप्तज्ञानग्राहकतावच्छेदकं रूपं न निरुक्तरूपशून्य-

---

( प्रभा ) इतरेति । भट्टैरपि यद्धर्मविपरीतवद्यद्धर्मावच्छिन्नधर्मिकयद्धर्मावच्छिन्नाभावग्रहस्य तद्धर्मावच्छिन्नधर्मिकतत्प्रकारकशाब्दबोधहेतुत्वोपगमात् । ईदृशकार्यकारणभावबलेनैव पदानुपस्थिततदर्थस्य भानात् । तथाच भट्टमतसिद्धत्वादेव न बाध इति भावः । अर्थाध्याहारेति । यत्किञ्चिदेकपदाधीनपदार्थोपस्थितिपदानधीनापरपदार्थोपस्थितिद्वयघटितसामग्र्या गुरुशाब्दबोधजनकत्वादितिभावः । यद्यदिति वीप्सा समुदायप्रसिद्धये ।

गुरुमत इति । व्यवसायानुव्यवसायसामग्रीघटकानां भट्टमते ज्ञानग्राहकत्वाभावा-

(गा० ) कारणान्तर्भावेन पर्याप्तमितितद्रूपावच्छिन्नग्राह्यत्वेऽपि प्रामाण्यस्य न बाधः। नच तादृशपदजन्योपस्थितित्वादिशून्यपदाजन्योपस्थितिमन्तर्भाव्य गुरुमतसिद्धज्ञानग्रहोपधायकतावच्छेदकरूपस्य पर्याप्तत्वात् न तादृशधर्मव्यावृत्तिरिति वाच्यम्? पदाजन्योपस्थितेरपि विशेषणतावच्छेदकप्रकारकज्ञानादिविधया भट्टमते तादृशशाब्दबोधहेतुत्वेन तादृशविशेषणतावच्छेदकप्रकारकज्ञानत्वादिधर्मवत्त्वेन निरुक्तरूपशून्यताविरहात्।

वस्तुतो गुरुमतेऽपि पदाजन्यार्थोपस्थितेः तत्तदर्थोपस्थितित्वेन शाब्दसामग्रीघटकत्वं नोपेयते, तात्पर्यादिज्ञानस्य तत्तदर्थविषयतानियमेन तन्निवेशेनैवोपपत्तेः। तथा च गुरुमतसिद्धसामग्रीघटकनिखिलकारणानां भट्टमतेऽपि उक्तसामग्रीघटकत्वं निर्विवादमेवेत्युक्तरीत्या सामञ्जस्यम्। ज्ञाततालिङ्गकानुमितिसामग्रीघटकसिद्ध्यभाववाधविशेषाभावादीनां प्रामाण्याविषयकज्ञानग्रहोपधायकभट्टमतसिद्धसामग्र्यामनन्तर्भावात् तादृशसामग्र्यास्तन्मते परिग्रहः। अतो ज्ञाततालिङ्गकपरामर्शस्य ज्ञातत्वप्रकारकोपस्थितित्वादिना प्रामाण्याविषयकज्ञानग्रहोपधायकपदाजन्योपस्थितिघटितान्वयबोधसामग्रीघटकत्वेऽपि न क्षतिः। एवञ्च पदानुपस्थितताया अन्वयप्रयोजकरूपात्मकयोग्यताया योग्यताज्ञानबलादेव शाब्दबोधे भानस्वीकारेऽपि तादृशयोग्यताज्ञानस्य भट्टमतेऽपि शाब्दबोधहेतुतया तत्सामग्रीघटकत्वेन तादृशयोग्यताघटकानां पदजन्योपस्थितेर्भट्टमतेऽधिकायास्तादृशयोग्यताविषयकशाब्दबोधेऽपेक्षितत्वेऽपि उक्तरीत्या तादृशसामग्र्या वारणसम्भवात, शाब्दबोधे तात्पर्यसत्त्वे योग्यताज्ञानबलाद् योग्यताभानं निर्युक्तिकमिति वस्तुगत्यनुरोधेन ग्रन्थकृता तन्निराकृतम्।

---

(प्रभा) ज्ञानं गुण इत्यादिशाब्दबोधसामग्रीघटककारणनिष्ठरूपाणामेव यच्छब्देन धर्तव्यत्वादिति भावः। गुरुमतसिद्धतादृशसामग्रीपर्याप्तज्ञानग्राहकतावच्छेदकरूपस्य भट्टमते ज्ञानग्राहकतानवच्छेदकत्वादुक्तविवक्षायामपि यद्यद्रूपशब्देन ज्ञानं गुण इति शाब्दबोधकारणगततच्छून्यकारणान्तर्भावेण पर्याप्तत्वं दुर्वारमित्याशङ्कावारणायानिवेशादित्यन्तम्। तथाच पदजन्यकाम्यसाधनताज्ञानोपस्थितिघटितसामग्र्यां सत्यां भट्टमते तादृशशाब्दबोधोदयात्तादृशसामग्रीत्वमेव यद्यद्रूपावच्छिन्नेत्यादिक्रमेण भट्टमतसिद्धं तत्तद्रूपशून्यं च गुरुमतेऽध्याहृतज्ञानग्राहकं शाब्दसामग्रीघटककारणमिति।

विशेषणतावच्छेदकप्रकारकज्ञानस्याकारणत्वेऽप्याह वस्तुत इति। तात्पर्यादीति। काम्यसाधनताज्ञानप्रकारकपाकप्रतीतिजनकत्वेनेच्छाप्रकारकपाकपदज्ञानम्। आदिना अर्थाबाधरूपयोग्यताज्ञानं पाकःकाम्यसाधनताज्ञानयोग्यः इत्याकारकं ग्राह्यम्। तत्तद्रूपशून्यकारणपर्याप्तत्वमुपेक्ष्य तदन्तर्भावेण पर्याप्तत्वप्रयोजनमाह ज्ञाततेति। भट्टमतेऽपीति। विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन। वस्तुतोऽर्थाबाधरूपयोग्यताज्ञानत्वेनेतिशेषः। तात्पर्यसत्त्वे इति। तात्पर्यसत्त्वे गुरुमतेऽपि योग्यताज्ञानस्य पृथक्कारणत्वे मानाभावाद् भट्टमतासिद्धकारणं गुरुमते नैवास्तीति तत्सामग्रीवारणम्।

( दी० ) नच स्वर्गकामकर्तव्यताबोधविषयो यागविषयकं कार्यमिति वेदजन्यं ज्ञानं गुणो ज्ञानत्वादित्यनुमानादिना ग्राह्यज्ञानप्रामाण्याग्रहाद् बाधः।

वेदजन्यताद‍ृशज्ञानस्य भट्टनये शशविषाणकल्पतया तद्ग्राहकसामग्र्या भट्टेनानभ्युपगमादिति वाच्यम्, अन्यथाख्यातिवादिनस्तस्य शशविषाणं द्रव्यं

---

( गा० ) अथैवमपि सामग्र्यघटिते प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन यद् भट्टमतसिद्धं तदन्ययावज्ज्ञानग्राह्यत्वरूपसाध्येऽध्याहृतज्ञानविषयकज्ञानवानात्मेत्याद्याकारकशाब्दबोधाविषयतया प्रामाण्यस्य गुरुमते बाधो निराबाध एवेति चेत्? तत्कल्पे शाब्दान्यत्वेन ताद‍ृशज्ञानस्य विशेषणीयत्वात्।

यत्तु ताद‍ृशशाब्दबोधस्यानुभविकत्वे भट्टेनापि पदाध्याहारकल्पनया ताद‍ृशबोध उपपादनीय इति स शाब्दबोध उक्तरूपेण भट्टमतसिद्धोऽपीति समाधानम्, तदसत्? यत्र पदजन्याया ज्ञानोपस्थितेरभाव उभयवादिसिद्धस्तत्रत्यबोधे ज्ञानविषयताया भट्टानभ्युपगतत्वात् तद्ग्राह्यत्वमादाय बाधस्य दुर्वारत्वात्, ज्ञानभासकसामग्र्यनन्तरोत्पन्नं ज्ञानं ज्ञानविषयकमिति सामान्यतोऽभ्युपगमः अयं घट इत्याकारकस्वप्रकाशात्मकव्यवसायमपि विषयीकरोति इति ताद‍ृशाभ्युपगमव्यावृत्तरूपेणैवाभ्युपगमस्य निवेश्यत्वात्।

वस्तुतस्तु यत्रात्मादेः पदार्थान्तरस्य पदादुपस्थितिः ज्ञानस्य चान्यत उपस्थितिस्तत्रापि उपनीतभानस्थलीयो ज्ञानान्वयबोधो भट्टाभ्युपगतः, परन्त्वसौ गुरुमते तात्पर्याद्विज्ञानघटितसामग्रीजन्यः शाब्दयामीत्यनुव्यवसायविषयः, भट्टमते त्वसंसर्गाग्रहपदार्थोपस्थित्यात्मकसामग्रीमात्राधीन उक्तानुव्यवसायविषयः, एतावतैव च शब्दादनुपस्थितस्यार्थस्य शाब्दबोधेऽप्रवेश इति भट्टमतसिद्धान्तस्योपपत्तिरिति कथिताध्याहृतार्थविषयकशाब्दबोधः प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन च भट्टमतसिद्ध एवेति बोध्यम्।

अनुमानादिनेत्यादिना ताद‍ृशशाब्दबोधस्मृतिसामग्रीपरिग्रहः। *ग्राह्यज्ञानेति*। ताद‍ृशवेदजन्यज्ञानेत्यर्थः। बाध इति। गुरुमत इत्यादिः। इदमुपलक्षणम्, मनस्संयुक्तसमवायजन्यं घटमहं जानामि इति ज्ञानं गुणो ज्ञानत्वादित्यनुमानादिना ग्राह्यज्ञानप्रामाण्याग्रहात् मिश्रमते बाध इत्यपि द्रष्टव्यम्।

*वेदजन्यताद‍ृशज्ञानस्येति*। मनस्संयुक्तसमवायजन्यस्योक्तज्ञानस्यापि तथात्वं बोध्यम्। *तद्ग्राहकेति*। ताद‍ृशज्ञानग्राहकेत्यर्थः। *भट्टेनानभ्युपगमादिति*। तथाच ताद‍ृशसामग्र्या निरुक्तरूपेण भट्टमतसिद्धा या सामग्री तद्भिन्नत्वेन

---

(प्रभा) पूर्ववत् ज्ञानवानात्मेत्यादौ गुरुमते सामान्यतो भट्टाभ्युपगमविषयत्वाद्बाधवारणमाशङ्क्य निराकरोति ज्ञानेति। व्यावृत्तेति = ज्ञानभासकसामग्र्यविषयत्वं विशेषणमित्यर्थः। तद्व्यक्तिभिन्नत्वमित्येके। शाब्दान्यत्वं मास्त्वित्याशयेन समाधानान्तरमाह वस्तुतस्त्विति।

( दी० ) विषाणत्वादित्यनुमानादौ विरोधाभावात् । भट्टमतासिद्धज्ञानग्राहकताक-शाब्दानुमितिस्मृतिसामग्रीभिन्नत्वेन सामग्री विशेषणीयेत्यपि कश्चित् ।

---

(गा०) तज्जन्यग्रहस्य साध्यघटकयावद्ग्रहान्तर्गतत्वादिति भावः। *इत्यनुमानादौ विरोधाभावादिति* । तथा च यथा प्रसिद्धविषाणे शशीयत्वावगाहिन्याः शशविषाणं द्रव्यम् इत्याकारकानुमितेर्भट्टमतसिद्धतया तत्सामग्र्यपि तन्मतसिद्धा, तथा स्वर्गकामनियोज्यकं यागविषयकं कार्यमित्याद्याकारकसामग्र्यन्तरजन्यबोधस्य वेदजन्यत्वाद्यंशे भ्रमरूपतया भट्टाभ्युपगताया उक्तानुमित्यादेस्सामग्र्यपि प्रामाण्याविषयकज्ञानग्रहजनकतया भट्टमतसिद्धैवेति तद्ग्राह्यत्वेऽपि तादृशज्ञानप्रामाण्यस्य न बाध इति भावः। उक्तानुमित्यादिसामग्र्या भट्टानभ्युपगतत्वाभिमानिनो विशेषणान्तरप्रवेशेनोक्तबाधसमाधानमुपन्यस्यति *भट्टमतासिद्धेति* । उक्तानुमित्यादिसामग्र्या भट्टमतासिद्धज्ञानग्राहकताकतया व्यावृत्तिः ।

ज्ञाततालिङ्गकानुमितिसामग्र्या भट्टमते संग्रहाय ग्राहकताकान्तं सामग्रीविशेषणम्, तस्याश्च ज्ञानग्राहकता न भट्टमतासिद्धेति तत्संग्रहः। भट्टमतसिद्धसामग्र्यास्तन्मतेऽप्रसिद्ध्या तन्मतसंग्रहाय भट्टमतासिद्धत्वं सामग्रीविशेषणमुपेक्ष्य भट्टमतासिद्धज्ञानग्राहकताकत्वपर्यन्तं तद्विशेषणमुपात्तम्। तादृशी च सामग्री तन्मते घटाद्यनुमितिसामग्र्येव प्रसिद्धा, ज्ञानग्राहकतया भट्टमतसिद्धं यत्तदन्यत्वस्य तत्र भट्टमतेऽपि सत्त्वात् । भट्टमतासिद्धज्ञानग्राहकताकसामग्रीसामान्यभेदनिवेशे गुरुमिश्रमतासंग्रहः। व्यवसायानुव्यवसायसामग्र्योर्ज्ञानग्राहकतया भट्टमतासिद्धत्वादिति शाब्दानुमिति स्मृतीनामुपादानम्, तासां च प्रत्यक्षान्यत्वेनैव निवेशः; नतु विशिष्य। तेनानुमितौ ग्राहकान्तविशेषणेनैव भट्टमतसंग्रहे शाब्दादिसामग्रीसामान्यभेदनिवेशेऽपि क्षतिविरहात् तत्सामग्र्यां तादृशविशेषणवैयर्थ्यमित्यपि समाहितम् । अतीन्द्रियगुरुत्वादिविषयघटितप्रामाण्यं पश्चाद् बहिर्भावनीयम्। तेन गुरुमते तादृशप्रामाण्याश्रयव्यवसायसामग्र्या भट्टमतासिद्धज्ञानग्राहकताकपरोक्षसामग्रीत्वनियमेऽपि गुरुमते न बाधः।

अथवा ज्ञानांशे परोक्षस्य सामग्री विवक्षणीया । ज्ञानांशे परोक्षत्वं च ज्ञानविषयकज्ञानजन्यत्वं, गुरुत्वादिप्रकारकव्यवसायस्यापि ज्ञानविषयकज्ञानाजन्यतया तत्सामग्र्या अपि गुरुमते संग्रहः। एवंच दर्शिताकारानुव्यवसायविषयकोपनीतभानसामग्र्या ग्राह्यज्ञानप्रामाण्याग्रहेऽपि न मिश्रमते बाधः। तादृशोपनीतभानेऽपि उक्तानुमित्यादिवत् निरुक्तस्य ज्ञानांशे परोक्षत्वस्य सत्त्वात् तत्सामग्र्या उक्तविशेषणेन व्यावृत्तेः। एतन्मते दर्शितपदाजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या अपि अनेनैव विशेषणेन व्यावृत्तेः तद्वारणाय दर्शितप्रयासो नास्तीति बोध्यम्। एवं घटज्ञानकालीनपटज्ञानवानहमित्याद्याकारक-

( दी० ) तत्प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन यो भट्टमतसिद्ध-स्तदन्यो यावान् विशिष्टोऽविशिष्टो ज्ञानग्रहः तद्विषयो नत्वेति निष्कृष्टमर्थं वक्ष्यति स्वाश्रयेत्यादिना ।

---

(गा०) घटज्ञानांशोपनीतभानात्मकपटज्ञानानुव्यवसायसामग्र्या घटज्ञानाद्यभा-वग्राहकसामग्र्या च भट्टमतासिद्धया घटज्ञानप्रामाण्यग्रहेण मिश्रमते बाधोऽने-नापि विशेषणेन शक्यवारणः । उक्तानुमित्यादिसामग्र्या दर्शितरीत्यैव वारण-सम्भवात् तद्वारणायाधिकविशेषणप्रवेशो व्यर्थ इत्यस्वरससूचनाय *काश्चादंत* । अत्र ज्ञानग्रहत्वेन ज्ञानग्राहकसामग्रीजन्यग्रहनिवेशसम्भवे तादृशसामग्रीजन्य-ग्रहत्वेन तन्निवेशः शिरोवेष्टनेन नासिकास्पर्शनमनुधावतीति ज्ञानग्रहत्वेन ग्रहं निवेश्य तद्विषयत्वकोटिकविप्रतिपत्त्यकथनेन मूलस्य न्यूनता, एवं प्रथम-विप्रतिपत्तावपि ज्ञानपदस्य स्वाश्रयार्थकताया उक्तत्वात् तृतीयविप्रतिपत्तौ ग्राहकपदस्य ग्राहकसामग्रीपरत्वे तस्याः ततो न भेदः ।

नचाप्रामाण्याग्राहकत्वविशेषणाप्रवेशादेव विशेषः, पक्षसङ्को-चेनैव अप्रामाण्यग्राहकसामग्रीग्राह्याश्रयकप्रामाण्ये बाधवारणसम्भवादिति मिश्रमतं सम्यक्, तथा सति यादृशज्ञाने प्रामाण्यसंशयः तत्प्रामाण्यस्य पक्ष-बहिर्भावेन तत्र मीमांसकैः स्वतस्त्वासाधनात्, प्रामाण्यसंशयानुपपत्तिरूप-वक्ष्यमाणदूषणासङ्गतेः । एकस्यैव ज्ञानप्रामाण्यमिति पक्षवाचकपदस्य प्रथम-विप्रतिपत्त्यनुरोधात् अप्रामाण्यग्राहकसामग्रीग्राह्याश्रयकपरत्वम्, तृतीयविप्रति-पत्त्यनुरोधेन च तदितरप्रामाण्यपरत्वमिति विरोधाच्च । एवं ज्ञानं गुण इत्यादिशाब्दबोधसामग्रीवारणाय प्रामाण्याग्राहकत्वेनेत्यादिरूपाप्रामाण्या-ग्राहकत्वस्य तृतीयविप्रतिपत्तावपि अवश्यं विवक्षणीयतया दुर्वार एवोभया-विशेषः । यश्च स्वाश्रये ज्ञानत्वप्रवेशाप्रवेशाभ्याम् मिश्राभिहितो विशेषः, सोऽप्यसंगतः । प्रयोजनसत्त्वे उभयत्रैव तत्प्रवेशावश्यंकत्वादित्यालोच्य तृतीयविप्रतिपत्तौ ग्राहकपदस्य गृह्णाति विषयीकरोति इति व्युत्पत्त्या ग्रहपरत्वं, गृह्यते इत्यस्य च विषयीक्रियत इत्यर्थपरत्वमभिसन्धाय तृतीयविप्रतिपत्तेरेव सामग्र्यघटितसाध्यपरत्वमाह *तत्प्रामाण्येति* । विशिष्टो-ऽविशिष्टो वेत्यस्य विषयबाधगृहाभावेनेत्यादिः । पूर्ववत् मतभेदेन विकल्पः ।

ननु तत्र यावत्पदाश्रवणात् कुतो ज्ञानगृहे यावत्त्वलाभः । नचैवकारादेव तल्लाभः, एवकारस्य यावत्पदसमानार्थकत्वविरहात् । नच विशेषणसंगतैव-कारस्य अयोगव्यवच्छेदार्थकतया शंखः पाण्डर एवेत्यादौ यथा यावच्छंखे पा-ण्डरत्वबोधः तथात्रापि यावद्गृहे प्रामाण्यग्राहकत्वबोधनिर्वाह इति वाच्यम् ?

---

आदिना घटज्ञानवानहम्पटज्ञानवान् इत्यस्योपग्रहः ।

(दी०) यथा च तस्मादयमर्थो लभ्यते तथैवकारार्थविवेचने प्रपञ्चितमस्माभिः। केचित्तु तत्र ग्राहकं यावत्त्वेन विशेषणीयम्, एवकारश्च प्रामाण्यमात्रस्य तथात्वलाभायेत्याहुः।

---

(गा०) शंखः पाण्डर एवेत्यादौ पाण्डरत्वस्य शंखविशेषणतया पाण्डरत्वे शंखनिष्ठाभावाप्रतियोगित्ववत् प्रामाण्यविशेषणग्राह्यताबोधकपदसमभिव्याहृतैवकारात् प्रकृते स्वाश्रयग्रहविषयतायामेव प्रामाण्यत्वव्यापकतालाभसम्भवेन विवक्षितस्य प्रामाण्यग्राहकत्वे स्वाश्रयग्राहकत्वव्यापकत्वस्यालाभात्। सरोजेन नीलेन भूयत एवेत्यादौ क्रियासंगतैवकारेण अत्यन्तायोगव्यवच्छेदस्यैव प्रत्यायनात् प्रकृतेऽपि एवकारस्य क्रियासंगततया अयोगव्यवच्छेदबोधकत्वासम्भवाच्च इत्याशङ्काम् परिहरति *यथा चेति*। *एवकारार्थविवेचने इति*। ज्ञानमर्थं गृह्णात्येवेतिवत् ज्ञानं रजतं गृह्णात्येवेति अप्रयोगात् गृहणादिरूपार्थवाचकधातुसमभिव्याहृतेनापि एवकारेण अयोगव्यवच्छेद एव प्रत्याय्यते।

ज्ञानमर्थं गृह्णात्येवेत्यादौ कर्तृप्रत्ययस्थले कर्त्तरि ज्ञाने यथा क्रियाकर्तृत्वायोगव्यवच्छेदःप्रतीयते तथा ज्ञानेनार्थो गृह्यत एवेत्यादौ कर्मप्रत्ययस्थले विशेषणविशेष्यभाववैपरीत्येऽपि विशेषणीभूतेऽपि कर्त्तरि अविशेषणस्यापि क्रियाकर्तृत्वस्यायोगव्यवच्छेदःप्रतीयते नतु विशेष्यकर्मणि विशेषणीभूततत्तत्कर्तृकक्रियाकर्मत्वायोगव्यवच्छेदः, ज्ञानग्राह्यत्वायोगस्याप्रसिद्धेः। विशेषणे विशेष्यनिष्ठाभावप्रतियोगित्वव्यवच्छेदस्य अयोगव्यवच्छेदरूपत्वेऽप्रसिद्धिविरहेऽपि उक्तस्थले तद्बोधस्वीकारे ज्ञानग्राह्यत्वे रजतत्वव्यापकताया अबाधेन ज्ञानेन रजतं गृह्यत एवेत्यादिप्रयोगापत्तेर्दुर्वारत्वात्। एतज्ज्ञानग्राह्यत्वेऽर्थत्वव्यापकताविरहेण एतज्ज्ञानेनार्थो गृह्यत एवेत्यादिप्रयोगानुपपत्तेश्च। एवं च प्रकृतेऽपि प्रामाण्यग्राहकत्वे स्वाश्रयग्रहत्वव्यापकत्वम् प्रत्येतव्यम् इति विवक्षितार्थलाभः। तद्बोधो यथाकथञ्चिदुपपादनीय इति भावः।

अत्रापि विशेष्यतावच्छेदकावच्छेदेन विशेषणायोगव्यवच्छेद एवकारेण प्रत्याय्यत इत्यभिमानिनां यावत्पदपूरणेन सिद्धसाधनं वारयतां मिश्राणाम् मतमुपन्यस्यति *केचित्तु इति*। *यावत्त्वेन विशेषणीयमिति*। नन्वेवमेवकारवैयर्थ्यमत आह *एवकारश्चेति*। *प्रामाण्यमात्रस्य तथात्वलाभाय* = पक्षतावच्छेदकप्रमापदप्रवृत्तिनिमित्तत्वावच्छेदेन साध्यवत्त्वलाभाय। तत्सामानाधिकरण्यमात्रेण साध्यसाधने योगिज्ञानादिमात्रवृत्तिप्रामाण्यविशेषे अंशतस्सिद्धसाधनापत्तिरिति भावः। अत्र च प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे साध्यस्य स्वत्वघटितत्वेन अननुगमेनांशतो बाधः। उपदर्शितैवकारव्युत्पत्त्यैव ग्राहकस्य यावत्त्वलाभे यावत्पदपूरणं चानुचितमित्यस्वरसः।

( दी० ) अन्ये तु तत्प्रामाण्याग्राहकत्वेन यदुभयवादिसिद्धं तद्भिन्नत्वमग्राहकान्तार्थः ।

---

( गा० ) ज्ञानं गुण इति शाब्दबोधादिना प्रामाण्याग्रहात् बाधस्य वारणाय ओदनकामकर्त्तव्यताबोधविषयः पाक इत्यादिशाब्दबोधे पदानुपस्थितस्य ओदनसाधनत्वादिज्ञानस्य योग्यताबलात् अन्वयितावच्छेदकतया भाने तादृशशाब्दबोधे तज्ज्ञानप्रामाण्याग्रहात् बाधस्य च वारणाय अवलम्बितमतमन्येषामुपन्यस्यति *अन्ये त्विति*। तत्प्रामाण्याग्राहकत्वेन=तत्प्रामाण्यग्रहाजनकत्वेन । उभयवादिसिद्धम्=नैयायिकमीमांसकोभयवादिसिद्धम् । अग्राहकान्तार्थः, सामग्र्यां विशेषणमिति शेषः । व्यवसायानुव्यवसायसामग्र्योः प्रामाण्याग्राहकत्वेन नैयायिकसिद्धतया तत्संग्रहायोभयसिद्धत्वनिवेशः । गुरुमतसिद्धाया दर्शितकाम्यसाधनताज्ञानादिविषयकसामग्र्याः प्रामाण्याग्राहकतया गुरुनैयायिकोभयसिद्धतया न तत्संग्रहः ।

नच शब्दाजन्यतादृशज्ञानोपस्थितेः नैयायिकमते शाब्दसामग्र्यप्रविष्टतया तद्घटितशाब्दसामग्री न नैयायिकसिद्धेति कथं तद्वारणमिति वाच्यम् ? तादृशोपस्थितिघटितकारणस्तोमस्य शाब्दसामग्रीत्वेन नैयायिकासिद्धत्वेऽपि प्रामाण्याग्राहकत्वेन तत्सिद्धत्वात् ।

---

( प्रभा० ) उभयवादिसिद्धम् । तथाच तत्प्रामाण्याविषयकज्ञानाजनकत्वेन नैयायिकमीमांसकोभयवादिसिद्धं यत्तदन्यज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वं मीमांसकनये साध्यमित्यर्थः । अनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयमतसिद्धभिन्नत्वात् संग्रहः । एवं गुरुमतसिद्धव्यवसायसामग्र्या भट्टमतसिद्धज्ञाततालिङ्गकानुमितिसामग्र्या अपि तत्प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयमतासिद्धतया संग्रहो बोध्यः । घटज्ञानशाब्दबोधसामग्र्याश्च तत्प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयमतसिद्धत्वान्न तमादाय मीमांसकनये बाधः । ओदनकामकार्यताज्ञानविषयः पाक इत्याकारकौदनसाधनताज्ञानविषयकशाब्दबोधसामग्र्या योग्यताज्ञानघटिताया गुरुमतसिद्धाया अप्योदनसाधनत्वादिप्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयसिद्धतया न तादृशसामग्रीमादाय बाधः । प्रामाण्याग्राहकत्वेन नैयायिकमतसिद्धभिन्नत्वनिवेशे व्यवसायानुव्यवसायसामग्र्योरसंग्रहः । नच तत्प्रामाण्याग्राहकत्वेन यन्मीमांसकमतसिद्धं तदन्यत्वमेव सामग्र्यां निवेश्यतामिति वाच्यम्, मीमांसकानामेकैकग्रहणेऽनुव्यवसायादिसामग्रीणां गुरुमते प्रामाण्याग्राहकतयाऽसंग्रहापत्तेः । प्रामाण्याग्राहकत्वेन मीमांसकसकलमतसिद्धभिन्नत्वनिवेशेऽनुव्यवसायादिसामग्र्यादेः संग्रहसम्भवेऽपि यथासन्निवेशे न वैयर्थ्यमिति ध्येयम् । नैयायिकमतसिद्धायाः प्रामाण्याग्राहिकाया ज्ञातताप्रत्यक्षजनकसामग्र्या वारणाय तादृशोभयसिद्धभिन्नत्वं ज्ञानग्राहिकायां सामग्र्यामेव विशेषणीयम् । ज्ञानादौ द्रव्यत्वभ्रमजनकसामग्रीवारणाय ज्ञानग्राहकसामग्र्या तदभाववति तत्प्रकारको यस्तदग्राहकत्वं विवक्षणीयम् ।

(दी० ) यदा ययोर्विवादस्तदा तात्पर्यवशात् तदुभयपरमुभयपदम्, अतो नाननुगमो दोषाय। नैयायिकासिद्धया ज्ञाततावघटिततत्प्रत्यक्षजनकसामग्र्या प्रामाण्याग्रहात्

---

(गा० ) नन्वत्र मीमांसकसामान्यं यः कश्चन वा निवेश्यते? आद्ये व्यवसायानुव्यवसायसामग्र्योर्गुरुमिश्रमते संग्रहानुपपत्तिः। प्रथमायाः प्रामाण्याग्राहकतया (मिश्रभट्टानुमततया द्वितीयायाश्च तथात्वेन गुरुमतसम्मततया) मीमांसकसिद्धत्वावच्छिन्नभेदाभावात्। द्वितीये च सप्तमपदार्थरूपबाधाद्यभावघटितज्ञानानुमित्यादिविशेषसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतसिद्धभिन्नतया प्रामाण्यस्य तया अग्रहेण भट्टमते बाध इत्यत आह *यदा ययोरिति*। अतः=तात्पर्यभेदात्। अननुगमः=अनुगतरूपेण मीमांसकानुपादानम्। न दोषायेत्यन्वयः। विवादभेदेन साध्यभेदस्वीकारे क्षतिविरहात्, शब्दैक्यमात्रस्यानपेक्षितत्वात्। सामग्रीपदार्थाननुगमेनार्थभेदस्य दुष्परिहरत्वादिति भावः।

ज्ञानग्राहकत्वरूपविशेष्यांशसार्थक्योपपत्तये नैयायिकोपादानमिति दर्शयति *नैयायिकेति*। ज्ञाततायां भट्टमतसिद्धत्वेऽपि नैयायिकासिद्धतया उभयासिद्धत्वमाविष्कर्त्तुं नैयायिकासिद्धत्वाभिधानम्। तादृशज्ञाततावघटितत्वेन तत्प्रत्यक्षसामग्र्या उभयवाद्यसिद्धत्वलाभः। *प्रामाण्याग्रहादिति*। बाधवारणायेति शेषः।

---

(प्रभा ) ननु ज्ञाततालिङ्गकानुमितेः कथम्परित्याग इति चेत्। गुरुमिश्रयोर्मतेन ज्ञाततालिङ्गकानुमितौ प्रामाण्याग्राहकत्वस्य सत्त्वेऽपि तयोर्मते ज्ञाततायाः शशविषाणायमानतया ज्ञाततालिङ्गकानुमितेरपि शशविषाणायमानतया ज्ञाततालिङ्गकानुमितेः गुरुमिश्रमतासिद्धत्वम्। ज्ञाततालिङ्गकानुमितेर्भट्टमतसिद्धत्वेपि प्रामाण्याग्राहकत्वेन भट्टमतसिद्धत्वं नास्तीति तत्र प्रामाण्याग्राहकत्वेन मीमांसकमतसिद्धत्वसामान्याभावः सुघटः, पूर्वत्र विशेष्याभावेन विशिष्टाभावः, उत्तरत्र विशेषणाभावेन विशिष्टाभाव इति। व्यवसायानुव्यवसाययोस्तु प्रामाण्याग्राहकत्वेन भट्टमतसिद्धत्वमेवेति। सप्तमपदार्थरूपबाधाद्यभावघटितेति। अत्रेदं तत्त्वम्। अनुमितौ बाधनिश्चयस्यापि कारणता, अभावश्च गुरुमतेऽधिकरणरूपो नातिरिक्तः, एवञ्च सर्वासामनुमितीनां सामग्रीमध्ये बाधाद्यभावप्रवेशाद् अनुमितिसामग्री गुरुमतसिद्धभिन्ना इति ज्ञानानुमितिसामग्र्यपि गुरुमतसिद्धभिन्नैवेति। विशेषसामग्र्या इति। बाधाद्यभावघटित 'घटज्ञानवान् घटेच्छावत्त्वादि' त्याद्यनुमितीत्यर्थः। ननूक्तानुमितेस्तु गुरुमिश्रमतसिद्धतया एतदनुमितिसामग्री न तयोर्मतेऽप्रसिद्धा किन्तु प्रामाण्याग्राहिकेति प्रामाण्याग्राहकत्वेनोक्तानुमितिसामग्री गुरुमतसिद्धैवेति चेन्न, अभावस्याधिकरणरूपतावादिगुरुमते बाधाद्यभावघटितज्ञानानुमितिसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतासिद्धत्वसिद्धेः।

तत्प्रत्यक्षसामग्र्या=ज्ञातताप्रत्यक्षसामग्र्या इत्यर्थः।

(दी०) ज्ञानग्राहकेति। नच ज्ञानं द्रव्यमित्यन्यथाख्यातिसामग्र्या प्रामाण्याग्रहात् उक्तयावत्सामग्रीग्राह्यत्वाभावरूपपरतस्त्वसाधने सिद्धसाधनमिति वाच्यम् ?

(गा०) भट्टेन समं विवादे प्रामाण्यग्राहकत्वेन तन्मतमात्रासिद्धत्वनिवेशे बाधाप्रसक्त्या ज्ञानग्राहकत्वोपादानमनर्थकमापद्येतेति भावः। *अन्यथाख्यातिसामग्र्येति*। गुरुमतासिद्धत्वेन उभयमतसिद्धभिन्नतयेतिशेषः। सिद्धसाधनम् = अर्थान्तरम्। नैयायिकसिद्धतादृशान्यथाख्यातिसामग्र्याः प्रामाण्याग्राहकतयैव तन्मते उक्तपरतस्त्वसत्त्वेन चरितार्थतया गुरुणा समं विवादे तस्याः प्रामाण्याग्राहकत्वासिद्धिरिति यावत्। नतु सिद्धसाधनं यथाश्रुतमेव। गुरुणा प्रामाण्याविषयकग्राहकत्वेन तादृशपरतस्त्वाभ्युपगमासम्भवात्।

अथैवमपि अनुव्यवसायसामग्र्या गुरुमतासिद्धया प्रामाण्याग्रहात् अर्थान्तरस्य वक्ष्यमाणविशेषणेनापि वारणासम्भवादसंगतिः। यदि चानुव्यवसायस्य ज्ञानप्रत्यक्षत्वेन तत्सामग्र्याः तत्प्रत्यक्षसामग्रीत्वेन गुरुमतसिद्धत्वमस्त्येवेति मन्यते, तदा तादृशसामग्रीत्वेन तस्याः प्रामाण्यग्राहकत्वमपि गुरोरनुमतमिति प्रामाण्याग्राहकत्वेन तन्मतासिद्धत्वं दुरपह्नवमेव। यदि च मनस्संयुक्तसमवायादिसमुदायत्वेन प्रामाण्याग्राहकत्वं तस्यां गुरुणा स्वीक्रियत इति न तादृशानुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतासिद्धत्वमित्युच्यते तदा उक्तान्यथाख्यातिसामग्र्या दोषादिरूपाया ज्ञानसामग्रीत्वादिना गुरुमतासिद्धत्वेऽपि दोषादिघटितसमुदायत्वादिना प्रामाण्याग्राहकत्वं तस्या गुरुमतासिद्धमेवेति कथमियमाशङ्का ?

यदि च व्यवसायसामग्र्या अपि प्रामाण्याविषयकज्ञानजनकसामग्रीत्वादिना प्रामाण्याग्राहकत्वस्य गुर्वादिमतसिद्धतया तज्ज्ञानव्यक्त्युत्पादकसामग्रीत्वेन प्रामाण्याग्राहकत्वाभ्युपगमविषयभिन्नत्वमवश्यं विवक्षणीयमिति शङ्कासङ्गतिः, अन्यथाख्यातिजनकसामग्र्याः दोषादिघटितायास्तेन रूपेण

(प्रभा) अर्थान्तरस्येति = अनुव्यवसायसामग्रीमादायोक्तपरतस्त्वसत्त्वेन चारितार्थ्याद् गुरुणा समं विवादे प्राथमिकज्ञानग्राहकसामग्र्याः प्रामाण्याग्राहकत्वसिद्धिरित्यर्थः। न्यायमतेऽनुव्यवसायसामग्र्यां गुरुमतसिद्धत्वं शङ्कते यदिचेति। अस्त्येवेति। न्यायमते इति शेषः। गुरोरिति = तावता ज्ञानप्रत्यक्षसामग्रीत्वं धर्मितावच्छेदकीकृत्य प्रामाण्यग्राहकतानिश्चयेन प्रतिबन्धादनुव्यवसायसामग्र्यां तेन रूपेण प्रामाण्याग्राहकत्वनिश्चयो न्यायमतेन गुरोः सम्भवतीत्यर्थः। ज्ञानप्रत्यक्षोत्पादकसामग्रीत्वेनाभ्युपादानासम्भवादनुव्यवसायसामग्रीवारणं शङ्कते यदीति। विशेष्यवृत्तेः केनापि रूपेणाभावानङ्गीकारादिति भावः। शङ्कायाः सर्वथा तुच्छत्ववारणाय ज्ञानसामग्रीत्वादिनेति। आदिना ज्ञानग्राहकसामग्रीत्वपरिग्रहः।

इदानीमभ्युपगमे धर्मितावच्छेदकं निवेश्य शङ्कां सङ्गमयति यदिचेति। सामग्री-

(गा०) गुरुणानभ्युपगमेन तद्वारणासम्भवात्, नैयायिकसिद्धधर्मिज्ञानतदनन्तरजातवोध्यस्मरणरूपज्ञानद्वयोत्तरान्यथाख्यातिस्थले तादृशज्ञानद्वयस्यैव गुरुणा भ्रमत्वस्वीकारात्, एकतरव्यक्तिसामग्रीत्वस्य न्यायमतसिद्धान्यथाख्यातिकारणकलापे असत्त्वात् तादृशकारणकलापस्य न्यायमते गुरोः तादृशाभ्युपगमविषयत्वाभावादित्युच्यते, तदा अनुव्यवसायसामग्र्या अपि व्यवसायरूपतया स्वीकृतज्ञानग्रहव्यक्तिसामग्रीत्वेन प्रामाण्यग्राहकत्वाया एव गुरुणाङ्गीकारात् तद्ग्राह्यतयाऽर्थान्तरेण व्यवसायसामग्र्याः प्रामाण्यग्राहकत्वासिद्धिर्दुर्वारैवेति ।

मैवम् ? अनुव्यवसायसामग्र्याःप्रामाण्यग्राहकत्वसिद्धावपि ज्ञानस्य स्वप्रकाशतानिराकर्तॄणां नैयायिकानां प्राथमिकज्ञानग्राह्यत्वरूपस्वतस्त्वस्य प्रामाण्ये निराकरणेन उद्देश्यसिद्धेः । अन्यथा व्यवसायसामग्र्या न्यायमते ज्ञानग्राहकत्वरूपविशेषणानाक्रान्ततया तस्याः साध्याघटकत्वेन तद्ग्राह्यतायाः कथञ्चिदपि निराकरणायोगेन समीहितासिद्धेर्वज्रलेपायितत्वात् ।

---

(प्रभा) त्वादिनेत्यादिना प्रामाण्याविषयकसविषयकजनकसामग्रीत्वग्रहः । एकतरेति = धर्मिज्ञानोत्पादकसामग्रीत्वस्य धर्मिज्ञानघटिततया बाध्यस्मरणोत्पादकसामग्रीत्वस्य बाध्यस्मरणघटिततया सत्त्वेन ज्ञानं गुण इत्यादिशाब्दबोधव्यक्तिमेव तज्ज्ञानपदेनोपादाय तदुत्पादकसामग्रीत्वेनोभयमतसिद्धान्यत्वादित्यर्थः । अन्यथाख्यातिव्यक्त्युत्पादकसामग्रीत्वञ्च गुरुमतेऽसिद्धमेवेति भावः । व्यवसायरूपतया स्वीकृतज्ञानगृहव्यक्तीति । इयं तज्ज्ञानव्यक्तिपदार्थ इति सूचनाय व्यक्तिपदम् । तथाच न्यायमतेऽनुव्यवसायसामग्र्याः प्रामाण्यग्राहकत्वेन गुरुमतासिद्धत्वमनपवादमिति भावः । अत्र मिश्रेण समं विवादे आहत्य नैयायिकानामुद्देश्यं सिद्ध्यत्येव, नत्वेतावता त्रिभिर्विवादे तेषामाहत्य तत्सिद्धिरावश्यकी । भट्टेन समं विवादे ज्ञाततालिङ्गकानुमितिसामग्र्याःप्रामाण्यग्राहकत्वस्य दुःसाधनत्वात् न्यायमते तादृशसामग्र्या एवाप्रसिद्धेःतस्यां ज्ञानविषयतालिङ्गकत्वमुररगम्य तत्साधने ज्ञाततायां विवादपर्यवसानापत्तेः । एवञ्च गुरुणा समं विवादे साध्याघटकीभूताया व्यवसायसामग्र्याः प्रामाण्यग्राहकत्वसिद्धावपि न क्षतिः, सर्वथोद्देश्यासिद्धिविरहादित्याशयेन समाधत्ते अनुव्यवसायेति । यावदनुव्यवसायसामग्र्याःप्रामाण्यग्राहकत्वे साधनीये यत्किञ्चित्तत्सामग्र्यास्तदग्राहकत्वस्य विरोधित्वादिति भावः । तर्हि गुरुणा समं विवादे नैयायिकानां सर्वथोद्देश्यं न सिद्ध्येदित्यत आह ज्ञानस्येति । न्यायमते व्यवसाययोर्भेदव्यवस्थाप्यज्ञानस्य स्वविषयकत्वखण्डनेन व्यवसायसामग्र्याः साध्यघटकज्ञानग्राहकत्वखण्डनादेव प्रामाण्यग्राहकत्वरूपोद्देश्यसिद्धिरितिभावः । एवं भट्टेन समं विवादे ज्ञाततारूपपदार्थान्तरमस्तु मा वाऽनुमितिसामग्री तल्लिङ्गिका वस्त्वन्तरलिङ्गिका वा सर्वाऽपि साध्यघटिकास्तु ज्ञानस्यातीन्द्रियतां निराकृत्य प्राथमिकज्ञानग्राहकग्राह्यतानिराकरणादुद्देश्यसिद्धिर्बोध्या । वज्रलेपायितत्वादिति । भट्टमतसिद्धभिन्नत्वनिवेशेऽपीदम् ।

(दी०) व्यधिकरणप्रकारकाजनकत्वेन सामग्रीविशेषणात् । पूर्वोक्तदिशाऽपित्रा निष्कर्षो बोध्य इत्याहुः । इति प्रथमा विप्रतिपत्तिः ।

---

(गा०) *व्यधिकरणप्रकारकाजनकत्वेनेति* । व्यधिकरणप्रकारकमिच्छादिकं प्रसिद्धमेव तन्मते । नचैवं ज्ञानमिच्छामीति विशिष्टज्ञानसामग्र्या गुरुमतासिद्धतया तद्ग्राह्यतामादाय परतस्त्वसाधने सिद्धसाधनं दुर्वारमिति वाच्यम्, तस्यापि दोषस्य एतन्मतेऽस्वरसबीजत्वात् । *अत्रापि निष्कर्ष* इति । सामग्रीनिवेशस्यानतिप्रयोजनत्वात् प्रामाण्याविषयत्वेन मतद्वयसिद्धभिन्नव्यधिकरणधर्मप्रकारकान्यसकलज्ञानग्रहविषयत्वरूपनिष्कृष्टसाध्योपादानमित्यर्थः । अत्र कल्पे ज्ञानजन्या ज्ञाततेतिप्रत्यक्षसामग्र्यग्राह्यतया भट्टमते बाधः । मतत्रये एकरूपेण साध्यत्वानिर्वाहः । नच मतान्तरसामग्र्यननुगमानुयोगस्तुल्यः, फलोत्पत्तिप्रयोजकतावच्छेदकावच्छिन्नत्वेन तदनुगमात् । नच प्रत्येकं मीमांसकेन विवादेऽन्यमतासंग्रहो न दोषाय, त्रिभिरेकदा विवादे मीमांसकत्रयस्यैवोपादाने साधारण्यसम्भव इति वाच्यम्? त्रिभिरेकदा विवादे मीमांसकत्वेन त्रयोपादाने गुर्वादिमते प्रामाण्याग्राहकतया मिश्रादिमतसिद्धव्यवसायादिसामग्र्यसंग्रहस्योक्तस्य दुर्वारत्वात् । मीमांसकत्रयत्वेन निवेशे सप्तमपदार्थरूपाभावघटितज्ञानग्राहकसामग्रीविशेषणां तत्तद्ग्रहजनकत्वेन गुरुमतसिद्धप्रामाण्यग्राहकताकत्वेन पूर्वोक्तदोषवारणेऽपि ज्ञानमतीन्द्रियमित्याद्यनुमितेरन्यथाख्यातिमनङ्गीकुर्वाणेन गुरुणानङ्गीकाराद् तत्सामग्र्या मतत्रयसिद्धभिन्नतया भट्टमते व्यधिकरणप्रकाराजनिकया प्रामाण्याग्रहात् तन्मते बाध इत्यादिकमस्वरसबीजं बोध्यम् ।

---

(प्रभा) विशिष्टज्ञानसामग्र्या इति । विशेषणज्ञानस्याकारणतया गुरुभिरुपनीतभानानुपगमात् । एतन्मते इति । पूर्वमतेऽन्वयबोधसामग्रीत्वेन भट्टमतसिद्धत्वात् । सकलेति । ज्ञानवान् इच्छाया इत्यादौ । तत्तद्ग्रहेति = तज्ज्ञानोत्पादकसामग्रीत्वेनाविकरणाद्यात्मकाभावगर्भकारणानां प्रामाण्याग्राहकत्वादित्यर्थः । ज्ञानमिति । अन्यथाख्यातिमादाय तज्ज्ञानव्यक्त्युत्पादकसामग्रीत्वमप्रसिद्धम् धर्मिज्ञानबोध्यस्मरणेतरव्यक्तिमुपादाय तत्प्रसिद्धावपि क्वचिदन्यथाख्यातिसामग्र्यां गुरुमतसिद्धभिन्नत्वमित्येकसत्त्वेऽपि द्वयं नास्तीतिन्यायेन मतत्रयसिद्धान्यत्वमित्यर्थः । इत्यादिकमिति । उक्तरीत्या भट्टमते कथञ्चिज्ज्ञानग्राहकपदसार्थक्यम्, गुरुमते सम्पूर्णं व्यर्थम्, पूर्वमते च घटादिसामग्रीवारणाय ग्राहकपदसार्थक्यं ज्ञानपदं तु भट्टानुग्रहायेति । एवं ज्ञानजन्यज्ञाततेतिप्रत्यक्षमादाय बाधवारणाय पूर्वोक्तविशेषणानुधावने च न्यायमतसिद्धत्वघटितविशेषणं व्यर्थमित्यस्यादिना परिग्रहः ।

इति गादाधरप्रामाण्यवादे सरयूपारीण स्वर्गीय पण्डितराज श्रीवेणीमाधवशास्त्रिशुक्लतनूजेन प्रायश्शतग्रन्थलेखकेन नव्यन्यायाचार्येण श्रीराजनारायणशुक्लेन कृतायाम् प्रभाख्यटीकायाम् प्रथमा विप्रतिपत्तिः ।

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं

# प्रामाण्यवादगादाधरीक्रोडपत्रम् ।

न च यस्य संशयव्यतिरेकनिश्चयौ प्रवृत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितौ व्याप्तेरिवेति मूलम्। यस्य संशयव्यतिरेकनिश्चयौ = यद्व्यतिरेकसंशयनिश्चयौ इति शिरोमणिः । अत्र परेत्वित्यादिना घटस्य संशय इत्यादौ स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व-सामानाधिकरण्योभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानं संशयपदार्थः, चरमविष-यितायामेव षष्ठ्यर्थस्य निरूपकत्वस्य निरूप्यत्वस्य वाऽन्वय इत्युक्तम् भट्टाचार्येण ।

ननु प्रथमविषयितायां षष्ठ्यर्थस्यान्वयः कथं न कृत इति । नच प्रथमविषयिताया-मन्वये एकदेशान्वयप्रसङ्गः, द्वितीयायामन्वये तु न तथा, विषयिताविशिष्टविषयिता-ज्ञानो-भयस्य संशयपदार्थत्वादिति वाच्यम्, चैत्रस्य पुत्र इत्यादिवत् सप्रतियोगिकपदार्थतावच्छेदकेने-तरान्वयस्य व्युत्पन्नत्वात् पदार्थतावच्छेदकजात्या सहैवेतरान्वयस्याव्युत्पन्नत्वात् इति चेन्न, प्रथमविषयितायां षष्ठ्यर्थान्वये घटं सन्देह्मीतिशाब्दबोधस्य घटत्वावच्छिन्नविषयिताशालि-ज्ञानाभावप्रकारक-घटं न जानामीत्याकारकनिश्चयप्रतिबध्यतानुपपत्तेरिति ध्येयम् ।

केचित्तु प्रथमविषयितायामन्वये घटसंशयो न घटीय इति व्यवहारस्य प्रामाण्यापत्तिः । चरमविषयितायां घटीयत्वाभावेनोक्तव्यवहारस्य घटीयत्वाभाववत् तादृशविषयिताशालित्वा-दित्याहुः । तन्न, तादृशव्यवहारस्य संशयधर्मिकघटविषयितावदन्यत्वबोधकतया प्रामाण्यापत्तेर-योगात् । अन्यथा चरमविषयितायामन्वयेऽपि घटसंशयो न घटाभावीय इत्यादिव्यवहारस्या-प्रामाण्येन तस्य प्रामाण्यापत्तेर्दुरुद्धरत्वादिति ध्येयम् ।

अथ निरुक्तविषयिताविशिष्टविषयिताशालिज्ञानस्य संशयपदार्थत्वे भूतलं घटवन्नवेत्या-दिसंशयस्य भूतलसंशयत्वापत्तेः, तादृशविषयिताविशिष्टभूतलविषयितासत्त्वादिति । न च प्रकारिताविशिष्टप्रकारिताशालिज्ञानत्वमेव संशयत्वम् । प्रकारितायाञ्च भूतलनिरूपितत्वा-भावान्नोक्तापत्तिरिति वाच्यम्, वायौ रूपं नवेत्यादिसंशयस्य रूपसंशयत्वानुपपत्तेः असमानप्रकारकज्ञानस्य प्रतिबन्धकत्वे वायुवृत्तित्वसंशयत्वापत्तेश्चेति चेन्न, प्रागुक्तोभय सम्बन्धेन—एवं स्वावच्छेदकीभूतधर्मावच्छिन्नस्वरूपाभावप्रतियोगितावच्छेदकावच्छिन्नत्व एतत्त्रितयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानस्य संशयपदार्थत्वान्नानुपपत्तिः । अथवा स्वनिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकविषयितावच्छिन्नं यत् स्वं तदन्यत्वस्य चरमविषयितायां निवेशान्न भूतलं घटवन्नवेत्यादिसंशयस्य भूतलसंशय-त्वापत्तिः, संशये उभयकोटितानिरूपितविशेष्यताद्वयस्योपगमेन भूतलविषयितायां तादृशा-न्यत्वविरहात्, न वा वायौ रूपं नवेत्यादिसंशयस्य रूपसंशयत्वानुपपत्तिः, रूपविषयितायां तादृशान्यत्वसत्त्वादिति ध्येयम् ।

तेन व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यत इति शिरोमणिः । व्यतिरेकज्ञानत्वेनेति तृतीयार्थोऽनतिरिक्तवृत्तित्वं नतु स्वरूपसम्बन्धरूपम्, तथासति ग्राह्याभावज्ञानत्वस्य ग्राह्यज्ञान-प्रतिबन्धकतावच्छेदकग्राह्याभावनिश्चयत्वघटकत्वेन ग्राह्यनिश्चयस्य च ग्राह्यज्ञानाहेतुतया

